ॐ

# Jayadratha yamalam - part 1;{Patala-51;Slokas-5467}

Edited by- M. Sampath kumar;[Ahmedabad]
30-March-2011

under supervision of - Mark.Dyczkowski.
Two Manuscripts are concidered for this correction.One is K and second is Kh, these are simbled as like this,क - ख doubtful and ambiguity words are kept as it is.

प्रथमः पटलः

।ओं नमः शिवादिभ्यो गुरुभ्यः ॥

श्रीश्रीपरमशिवशक्तिश्रीश्रीनाथ अशेष पारंपर्यक्रमं स्वगुरुपादाम्बुजं यावत् प्रणौमि ।

आक्रान्ता चन्द्रलेखाकर हृततमसा सज्जटामण्डलेन
मन्त्रग्रासोग्रसर्गग्रथितगुणगणा गोर्विशालालिकाला ।
वान्तभ्रान्तप्रशान्तप्रभृतिगुणगणा वाम वामेति वामा
वामा वामेति वामं वितरतु विविधं सिद्धयोगेश्वरी वः ॥ १ ॥

चन्द्रबिम्बप्रतीकाशे हेमपाषाणमण्डिते ।
स्रवन्निर्झरिणीभोग च्छिन्नटङ्कसमाकुले ॥ २ ॥

विटङ्कोदग्रशृङ्गाग्रदेवयानावलम्बिनि ।
क्रीडा प्रभातिदिव्याद्रिपुरंध्रीणां समन्ततः ॥ ३ ॥

सालक्तकपदाक्रान्तशिलानद्धनितम्बिनि ।

प्लवनावेगसंचिन्नपतत्प्रालेयसानुनि ॥ ४ ॥

पातालतरसालाभा गंभीराम्बुधिवाहिनी ।

जाह्ववीविमलाम्भोभिर्द्धौनकर्षमकल्मषे ॥ ५ ॥

मुनीन्द्रजीर्णविच्चिन्नमौञ्जीरज्जुसमाकुले ।

क्वचित् कृष्णाजिनानन्तलम्वितानेकभूभृति ॥ ६ ॥

क्वचित् कौशेयवासोभियोगिभिः समलङ्कृते ।

क्वचिज्जर्जरविक्षिप्तकमण्डलुगणावृते ॥ ७ ॥

क्वचित् समिद्धतपसां कन्थाकौपीनचिह्निते ।

क्वचित्सदा पुष्पितवृक्षविस्तृतैर्लतावितानैःस्थगिते समन्ततः ॥ ८ ॥

तमालगुल्मान्तरवासिभिर्जनैः क्वचित् सुराणां कलगीतनादितैः ॥ ९ ॥

क्वचिन्नभोरत्नमयूखसङ्गमाद् विलीनहैमप्लवनष्टसत्पथे

सुपङ्क्तिनाङ्गुलमेकमध्वगैः न पार्यते यत्र समेपि यातुम् ॥ १० ॥

अशोकपुन्नागलतागृहोदरे रमन्ति यत्रासुरयोषितो नवा

सुरामृतास्वादनमत्तचेतसः स्त्रगायुधोद्दामहुताशदीपिताः ॥ ११ ॥

यत्रारयो अपश्रियो गणाः स्वर्गगृहाणि परिहाय तु ।

पल्लीगृहाधिपकृतभूप्रदेशेषु रेमिरे ॥ १२ ॥

हिमे पङ्कजमग्नेषु स्वपत्रामृतजन्तुषु ।

स्वात्मनः प्रमदानीय मन्मथेनावजृम्भिताः ॥ १३ ॥

रुद्रचक्षुष्कमालिकाङ्करांबुजैःसाधकैर्हराराधनैककृतनिश्चयैः

सम्बद्धसन्मतनिवासकैर्यत्र ललुसिद्धिश्रियैर्निर्विघ्नमासितम् ।

देव सुन्दरी कोमलाङ्गुलितलाहतैर्यत्र वल्लकी धानमूर्चनावितानकैः ॥

१३ ॥

श्रोत्ररन्ध्रकावेशनिर्भरमनोहृता मूर्च्छिताः मृगाः ।

कन्दरेषु दिनशायिनः पाकशासनानन्तविप्रमुनिवेशमतां

रुद्रवह्निधूमान्धकारहृतवासवे ।

यत्र चन्द्रसूर्यावु भावपिनरश्मिनिर्भासनक्षमौ तस्य तौ नवलशालिनौ ।

रुद्र पत्रशृंगाग्रलेख्यकृतवाहकैर्यत्रचैक रूपाप्यनेकमुखतां ययौ भूमिर्श

भोर्जटाभ्यो विमुक्त सुरनिम्नगा भूतिपाण्डुराद्भिः पवित्रितमहीतलाः यत्र

यत्र वेधसो रनुग्रहाद्विततसम्पदः संचरन्ति वेदार्थवेतृमुनिसत्तमाः ॥

चन्द्रमौलिलिङ्गार्चनहित मनश्चिनोजह्नुसुनु वा त्रिविधौ ततनुकल्मषाः ।

क्वचित् सुरारामसुदुर्लभश्रियां महीरुहानां सुमनप्रभञ्जनैः ।

सुगन्धिभिर्यत्र समन्थरैर्वनं व्याधूयमानं परिनृत्यतीव ॥

क्वचित् कलालापकरैः शिलीमुखैः क्वचिच्चक्रांकारिभिरोधसान्जलैः ।

क्वचिन्महाकीचकघृष्टनादितैर्यस्मिन्वनं मन्तमिवाभिगायते ॥

विषप्रतीते स्फुटमंजरीणां सुगन्धवातैर्हृतजीवितानाम् ।

यस्मिंश्च पुष्पक्षत विग्राहाणां जयन्ति सत्वानि न सात्विकानाम् ॥

१४ ॥

यस्मिन् कुरङ्गानि शशिप्रभानि वलिच्चिदः कन्दलभोजनानि ।
मृगाधिपातातंकविवर्जितानि दरीषु विष्टभ्य वियोगभांजि ॥ १५ ॥
यस्मिन् बदर्याश्रमिणो मतङ्गजा ऋते च तैर्नापि गुहासु सिंहाः ।
नवा नराः सन्ति वने विशीर्णे हिमानिलोत्तालशिलाकलापैः ॥ १६ ॥
सरांसि फुल्लाम्बुजसत्पयांसि कल्हारनीलोत्पलमालितानि ।
क्रौञ्चै रथाङ्गैः कलहंसवृन्दैः सेव्यन्ति यस्मिन्मुनिभिश्च शान्तैः ॥ १७ ॥
घण्ठा धैरैर्वद्धविचित्र चामरैः पताकिभिर्मौक्तिकदामलम्बिभिः ।
यस्मिन् विमानैरधिरुह्य सर्वतः साधू निषेवन्ति सुरा अजस्रम् ॥
१८ ॥
तस्मिन् गिरावुन्नतशृङ्गशालिनि विचित्र दिव्य द्रुमराजिमण्डिताः ।
नाम्नाश्रमो वादरिकेति विश्रुतस्तपोवनावासशतैरलङ्कृतः ॥ १९ ॥
तस्यान्तरे चित्रशिखण्डखण्डितैः कन्ठैमहानीलरुचोऽवलम्बिभिः ।
विलम्बितैर्भ्राजति कालिकागृहं माहिष्यरक्तच्चटकर्दमाविलम् ॥ २० ॥
विराजते चापि पुलिन्दबालकैर्मृगेन्द्र पुच्चाङ्कितताम्रचूडकेः ।
युवानि गोचामरिकासु चामरैः प्रलम्वितैर्यस्य हि मण्डपोदरे ॥ २१ ॥
टङ्कारिणो घर्घरिकाविलम्विनो दारूर्ध्व लोहोद्भविकाश्च घण्टिकाः ।
याभा हता यत्र विनेदुरुच्चकैः श्रियो विलम्बन्ति च जीर्णवाससाम् ॥
२२ ॥
यस्मिन् मृगाणां करिकेश्वरीणां मयूरसर्पेन्दुपुलिन्दकाननाम् ।

एकत्वमेवाश्रित  सौहृदानि क्रीडण्ति शावानि मुखस्थितानि ॥ २३ ॥

२ब्‌ ख्‌ तस्मिन्‌ भवान्याश्रितधाम्नि शुभ्रे विचित्रचित्राङ्कितदिव्यकुड्ये ।

समीहितार्थोद्यतसाधनाढ्ये वरप्रदां श्रित्य हिमाद्रिपुत्रीम्‌ ॥ २४ ॥

जयद्रथस्सैन्धवदेशराजो निकुम्भजः पन्निलवीजजन्मा ।

महीगतं भोगमनित्यरूपं विदेहराज्यं विपुलं विहाय ॥ २५ ॥

जगाम तं सिंहरथो निवासं प्रालेयसानाववधारिताग्रम्‌ ।

तस्मिन्‌ हिमाद्रेस्तनयां सुभक्त्या आराधयामास तपः स्थितोऽसौ ॥

२६ ॥

धूमाशनो वाह्लवभोजनश्च मरुद्भयी पञ्चहुताशजोषी ।

ऊद्ध्वाङ्ग्यधोमस्तकलम्बपाणिरङ्गुष्ठमात्रं प्रतिलम्बभूमिः ॥ २७ ॥

नवारविन्दोत्पलविल्वपत्रैः कल्हारसिन्दूरशशाङ्कवो वैः ।

कौरण्डजातीतिलकाशिलातैर्हयानियूथीकशताह्वपुष्पैः ॥ २८ ॥

पूजारतो ध्यानकृतास्पदश्च जपैकनिष्ठो हुतभुग्‌ रतस्तु ।

सन्ध्योचितैर्वस्तुभिरद्वितीयः  स कालिकां चेतसि संतुतोष ॥ २९ ॥

तस्यैकदा सा गिरिजाह मध्ये क्षीणे शुभे कर्मणि  शैलपुत्री ।

उवाच चेदं गिरिराजपुत्री जयद्रथं पुन्यभृतां वरिष्टं  ॥ ३० ॥

उपास्यतां हे विपुलं तपश्च वपुर्निजं ह्येकपदे दधत्स्व ।

अलं मृषा        वत्स तपोधिकेन तपोधनेभ्योऽधिककर्मणाद्य ॥ ३१ ॥

वदस्व  हृद्गता खिलं ददामि तेऽभिवाञ्छितं विहाय ह्रीर्भयं नृप

महेशशक्तिचोदितः।

निशम्य वाक्यमीरितं पिनाकपाणिजायया॥ ३२॥

प्रणम्य दण्डवत् क्षितिण्डवा व रु क्षिताण्डवा च पन्निलात्मजः।

अनन्तदुःखभूभृता त्रयी भयेन पीडिताः॥ ३३॥

वयं भवाब्धि मध्यतो विशेषतो विमग्नकाः।

तमोगुणेन भूरिणा रजोऽधिकेन चादिताः॥ ३४॥

किमत्र वेद्मि मार्गितुं त्वमेव जानसे हितम्।

यदर्थसाधनेन भीर्विनश्यते भवार्तिजा॥ ३५॥

विचित्रकर्म- वपुश्च येन धार्यते।

अशेषयोनिसङ्गमो भवेन्न येन कर्मणा॥ ३६॥

नदीश्वराङ्कवासिनि कुरुष्व मे प्रसादतः।

जयद्रथास्यनिःसृतं वचोऽवधार्य शैलजा॥ ३७॥

उवाच पन्निलात्मजं न तेऽधुना भयं भवेत्।

नन्दमानवृषभोद्धतारवैर्वाद्यमानवरदुन्दुभिस्वनैः ॥ ३८॥

शङ्खकाहलनिनादनादितैः वेणुवल्लकिरुणत्कृतैः कलैः।

किन्नरामरवधूजनोदितैर्देवगीति मृदुतारगीतकैः॥ ३९॥

इन्दुलाञ्छितजटाकपालिनां हास्यघोषमुखरं समन्ततः।

नृत्यमानसुरसुन्दरीजनैः खेलमानशिवकामिनीगणैः॥ ४०॥

दिव्यबुद्धिगणरुद्रताण्डवैरुत्सवश्रियममाद्यदद्भुताम् ।

तदाश्रयं धूर्जटिनो मनोहरं जयद्रथं गृह्य हिमाद्रिनन्दिनी ॥ ४१ ॥

विलोचनैः कृष्णसितार्द्धशालिभिर्निरीक्षमाणा रभसाद् विशिष्य तु ।

सुरेन्द्रचूडामणिरश्मिरञ्जितां कपर्दिनां शेखरचन्द्रभासिनाम् ॥ ४२ ॥

पिनाकिनः कायरुचावभासितां सभां प्रविष्टामरशत्रुवीथिषु ।

प्रणम्य नाथं दशषड्दलाङ्कितं विनम्य तस्मै नृपतिश्च भूयशः ॥ ४३ ॥

उपाविशच्चूलभृतोऽङ्कविष्टरे हरेण लीला करकर्षिता सती ।

ततोऽतिरम्येण मनोभुवा गिरा दृशोर्भरेण स्मितमीक्ष्य शङ्करः ॥

४५ ॥

उमामुखं प्रेमवतातिलालसमुवाच वाचोऽमृतविप्रुषालयः ।

कृतं प्रिये सिन्धुपतेरभीप्सितं रसातले चित्रविभूतिलालसम् ॥ ४६ ॥

सुरालये वाथ मुकुन्दवेधसोः फणीन्द्र दैत्यैन्द्रगृहेषु चाखिलम् ।

प्रणम्य देवी रभसात् पिनाकिने परोपकाराय निशम्य मानसम् ॥ ४७ ॥

नतोत्तमाङ्गोत्तमपाणिसंपुटं पुरो निधायामृतं हि भाषते ।

भवार्णवे नाथ रुगूर्मिमालिन्यनन्तदुःखप्लवगोत्कराकुले ॥ ४८ ॥

निमज्जमानं स्वमवेक्ष्य सैन्धवः तवास्मि युग्मं शरणं प्रपन्नः ।

न वाञ्चते हेमकटाहमध्यमान् विचित्रभोगान् न जलादिधामजान् ॥

४९ ॥

त्वया प्रसन्नेन पदास्यते हर तदस्य सर्वं हि समास्यतां तनौ ।

ततः स्वधा विप्लुतचक्षुषा जनं सभागतं वीक्ष्य समन्ततः शिवः ॥

५० ॥

विविक्तये चेतसि कृत्य कल्पनां समादधौ नन्दिमुखं पुनर्दृशम् ।

प्रभोरभिप्रायमवेत्य पुष्कलं विसर्जयामास सभां स दण्डभृत् ॥ ५१ ॥

अधिष्ठय धाम्नो मुखमात्मना ततो  जनः प्रवेशाय नियोगमाचरतः ।

विनिर्गतैर्देवगणैः सनन्दिभिर्जयद्रथं वीक्ष्य शिवेन शङ्करीम् ॥ ५२ ॥

विभाषितं वीरजनस्य शंकरी मयोच्यतां देवि हृदीह लेऽखिकम् व ख

हृदी हेताखिलम्ग ।

श्रीदेव्युवाच ।

तोषितास्मि महादेव तपोभिर्मुनिदुर्लभैः ॥ ५३ ॥

अनेन नरसिंहेन नरसिंहो व ख नरसिन्धो विषयभासिना ।

एष देव महासत्वः संसारार्त्या निपीडितः ॥ ५४ ॥

मद्भक्तस्त्वत्पदोद्धूलिभासितस्तु विशेषतः ।

यथायं मन्त्रजां भोगं भुनक्ति च परं पदम् ॥ ५५ ॥

प्रयाति यस्य समतां प्राप्तो नैवाभिशोचति ।

तथा कुरु सुराराातिरक्तरञ्जितशूलभृत् ॥ ५६ ॥

श्रीभैरव उवाच ।

अस्य शान्तावुमे उमे वेत्सि ज्ञानोपायमनन्तकम् ।

तथापि पृच्चसे यत् मां तत् ते विनयलक्षणम् ॥ ५७ ॥

वक्ष्येऽहमञ्जसा तुभ्यं समाक्षिप्तमनाः प्रिये ।

न तज्ज्ञानान्तरं किञ्चित् हृदि तिष्ठति गोपितम् ॥ ५८ ॥

प्रत्युप्तं यत् त्वया दैत्य शत्रुमूर्तिनिवासिनि ।

कामिकादीनि यान्यासन् दश प्रोक्तानि शूलिना ॥ ५९ ॥

शिवभेदगतानीह शैवेशैवार्थदानि तु ।

विजयादीनि चान्यानि परमेशान्तिकानि तु ॥ ६० ॥

रुद्रभेदप्रभिन्नानि भेदानन्तगतानि तु ।

वामस्त्रोतसि विस्तीर्णे निर्गतानि पराणि तु ॥ ६१ ॥

सम्मोहकानि तन्त्राणि स्त्रोत्रसंज्ञाधराणि च ।

याम्य स्त्रोतसि सिद्धानि पञ्चाशेषादिकानि तु ॥ ६२ ॥

त्वद्यामलविरामानि शास्त्राणि पार्वती ।

भैरवाणि विचित्राणि चतुष्पीठगतानि तु ॥ ६३ ॥

यत्र यन्मानवी ं पीठं स्वच्चदाद्यानि तत्र तु ।

मौद्रेऽपि हृदयादीनि धामभिन्नानि चैव हि ॥ ६४ ॥

एवमादीनि चान्यानि ज्येष्ठा सौपर्णिकानि तु ।

वितानमध्यमावस्थ ं समासानि समासतः ॥ ६५ ॥

त्वया श्रुतानि रुद्राणि मौलिचुम्बितपङ्कजे ।

तेषां मध्ये समासेन विस्तरेणाथ शैलजे ॥ ६६ ॥

यत् ते स्फुरति तन्वङ्गि तद् वदाद्य विचारतः ।

श्रीदेव्युवाच ।

विद्यापीठे महातन्त्रे शिरश्छेदे सुविस्तरे ॥ ६७ ॥

मुद्रापुरगणाकीर्णे दशकन्धरपूजिते ।

कालसंकर्षणी नाम या विद्यासीन्मया श्रुता ॥ ६८ ॥

सा नितान्तबलादेव प्रस्फुरद्वीर्यविस्तरा ।

शंसिताभवता सम्यगुपलब्धा मयापि हि ॥ ६९ ॥

तया सा मत्प्रसन्नस्य वाञ्छितं दुःशलापतेः ।

सम्पद्यते निरायासात् संप्रदायात् त्वयोदिता ॥ ७० ॥

तस्याग्रे विस्तरं कल्पमसंप्राप्तार्थनिर्णयम् ।

फलपक्षाय संबन्धसाधनाशेषसङ्कुलम् ॥ ७१ ॥

यच्चोपयुज्यते किञ्चिद् वीरवीर्यविवृद्धये ।

निगद्यतां हि तत् सर्वं प्रसादादिन्दुशेखर ॥ ७२ ॥

श्रीभैरव उवाच ।

स्त्रीणान्तु कुटिलं चित्तं निम्नं वापि विशेषतः ।

विलक्ष्यते स्वकार्याद् विस्नेहाद् वाप्युपलक्षणात् ॥ ७३ ॥

अर्थलाभे स्वकार्यं च बन्धूनां चार्थ लाभता ।

स्नेहमभ्यासमं मृत्युः प्रव्रज्या सातिविस्तरा ः ॥ ७४ ॥

संदिग्धज्ञानसम्प्राप्तिस्ततोऽस्य च महीयते ।

प्रतिपन्नार्थसम्पत्तिर्युक्तायुक्तिरनुष्ठिता ॥ ७५ ॥

सैन्धवानयनादत्र भुवः स्नेहोऽथ गौरवम् ।

भक्तिर्वा गौरवो न्यायस्त्वया मे दर्शितः प्रिये ॥ ७६ ॥

साम्प्रतं पृच्चितानान्तु प्रश्नानामुत्तरं शृणु ।

किन्तु यद् भावि तद् ब्रूहि संस्थितं सैन्धवं प्रति ॥ ७७ ॥

वपुर्धृतं हि यदिदं तत्क्षयात् फलभागयम् ।

श्रीदेव्युवाच ।

वपुषः संक्षयादेव यदि लभ्येत सत्फलम् ॥ ७८ ॥

तदाविद्या च विद्या च त्वमहञ्च निरर्थकाः ।

श्रीभैरव उवाच ।

पूर्वमेवं मया देवि त्रय एते नियामिताः ॥ ७९ ॥

रावणान्धकसिन्ध्वीशाः क्रूराशयविधायिनः ।

ज्ञानभाजो महावीराः पिण्डास्तेन तेन भाजनाः ॥ ८० ॥

श्रुत्वैवं वाक्यमीशानी विरुद्धं त्रिपुरद्विषम् ।

हास्ययुक्तमुवाचेदं गूढधन्वानमा रुषः ॥ ८१ ॥

किमर्थं ज्ञानभाजस्ते न भाजो देहशुद्धिषु ।

त्वया स्वतन्त्रभावेन तेषां किन्नियमः कृतः ॥ ८२ ॥

किं वा स्वाङ्गगुणः कश्चिदेतदिच्चामि वेदितुम् ।

उवाच भैरवः श्रीमानश्रीत्थ श्रीमतीं वचः ॥ ८३ ॥

स्वातन्त्र्यं देवदेवस्य त्वं मे मुख्यञ्च सुन्दरि ।

त्वदृतेऽन्ये स्वतन्त्रानो जगत्यस्मिन् मदादयः ॥ ८४ ॥

योऽसौ सर्वस्य कर्ता तु सर्वज्ञाता महेश्वरः।

तस्य वीर्यं परं शान्तं तद्धर्माश्रयशालि च॥ ८५॥

तद्यथा भाविजन्तूनां विदूरं सर्वतोमुखम्।

तेन यो यादृगर्थे तु चोदितस्तस्य तादृशः॥ ८६॥

सोऽर्थः सन्मुखतां याति देवि नास्त्यत्र संशयः।

अनन्तेशादेवक्राणि ख दिवक्राणि कर्तृत्वं तत्समीरणात्॥ ८७॥

गोप्ता प्रशांतमध्ये यत् स्वातन्त्र्यं तस्य तद्गतम्।

तन्निपातवशाद् यस्य यादृग्रूपोचितं फलम्॥ ८८॥

स तादृशं समश्नानिर्वाजं ख समश्नाति निर्व्याजं च नगात्मजे।

श्रीदेव्युवाच।

शक्तिः स्वतन्त्रभावेन यदि चोपरतचितः॥ ८९॥

चित्तेन फलभोक्तृत्वं तदा पुंसां विरुध्यते ।

यतोऽनुग्रहशीलासौ मुख्यपक्षेण धूर्जटे॥ ९०॥

अतः स्वशीलदर्शित्वात् सर्वानुग्रहभाजना

प्रकाशदाहौ द्वौ गुणौ शीलं हि सर्वतः॥ ९१॥

तत् तृतीयो जगत्यस्मिन् बुधैरप्युपलक्षितः।

एवं रागविहीनो यः स विरामफलं भजेत्॥ ९२॥

भिन्नभोगा नराः सर्वे शक्तिसञ्चोदनाद् यदि।

तदा रागादयः सन्ति शक्तेरपि यथा नरे ॥ ९३॥

रागः संपृक्त कर्तृत्वाद् यादृत्क्लैव्ये प्रगीयते ।

तादृशं विमलं ज्ञानं त्वमेव हि विवेचय ॥ ९४ ॥

श्रीभैरव उवाच ।

असमानभुजो दृष्ट्वा भोक्तारस्त्वमिदं प्रिये ।

श्रुतार्थाप्यश्रुतं द्य मसश्वोघं ॡ व्य मसश्वौघं विभाषसे ॥ ९५ ॥

अमूलकौन्शोव ॡ शिव भवौ तावन्योन्यविमर्दकौ ।

शान्तैकान्तगुणः शम्भुर्विपर्ययगुणो भवः ॥ ९६ ॥

भवश्च जन्तुचक्रस्य न शम्भोस्तु कदाचन ।

शम्भुर्भवे गश्च अनाद्यं शाश्वतं त्रिकम् ॥ ९७ ॥

चेतनाचेतनं विश्वं संस्थितं स्वस्वभावतः ।

दामकं दामदास्यञ्च सर्वज्ञाज्ञञ्च स्वल्पवित् ॥ ९८ ॥

एवमेकमनेकञ्च विभुत्वपरिनिष्ठितम् ।

त्वयि कार्यविलीनेऽपि जागर्ति स्वगुणाश्रितम् ॥ ९९ ॥

अविकारि सचित् तत्र विकारिपदचेतनम् ।

सचित् समानं जानीयमसमानमचित् स्मृतम् ॥ १०० ॥

निरम्बरं साम्बरं च तदम्बरमचेतनम् ।

शोधकं बोधकं बोध्यं शोध्यं चान्यत् तथा परम् ॥ १०१ ॥

एवं शिवनरानन्ततत्वत्रयमिदं प्रिये ।

प्रतिष्ठितं जगत्यस्मिन् स्वधर्मेण प्रकाशितम् ॥ १०२ ॥

तस्य देवातिदेवस्य यद् वीर्यमतिरस्कृतम्।

तत्सुतंत्रं न सन्देहो रागहीनञ्च सुन्दरि॥ १०३॥

पुंभ्याः प्रदर्शयेद् भोगान् स्वगुणेन समर्जितान्।

न प्रेक्षापूर्वकारित्वाद् ददाति स्वकृतं क्वचित्॥ १०४॥

यथा नाकृतकर्मासौ कर्मणा सह युञ्जते।

युञ्जते च तथा भाविव्यंग्येर्थे व्यञ्जकार्थया॥ १०५॥

पश्चानुग्रहशीलत्वाद् युगपत् क्षिन्न संस्पृशेत्।

जन्तुचक्रं तद्प्यस्मिनसद् ख तद्प्यस्मिन्नसद् देवि त्वयोदितम्॥

१०६॥

पृथिव्यां ये गजाः सन्ति गजजात्यैकसङ्गताः।

युगपत् ते गर्वशान्त्यै मदशक्त्यावलम्बिताः ॥ १०७॥

विधुबिम्बे समग्रे वै सत्यप्यम्बरमध्यगे।

कुमुदाकर ः समानन्ते विकासं संप्रयान्ति हि॥ १०८॥

कालान्तेजस्विनां तेजोनिमित्ताद् विनिवर्तते।

भोग्यत्वं कुञ्जरादीनां स्वगुणत्वप्रकाशकम्॥ १०९॥

सन्ततापि शिवास्याच्चदिव्यभव्यविवक्षया ।

जन्तूनां कुरुते बोधं पद्मानां भानुमानिव ॥ ११०॥

इति श्रीभैरवस्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षणीकल्पे प्रथमः पटलः॥

१ ॥

द्वितीयः पटलः ।

अथ वीक्ष्यमुखं नम्रः शैलपुत्र्या ः जयद्रथः । तस्याः भ्रूलब्धस

ंवित्तिः प्रणम्याष्टाङ्गमादरात् ॥ १ ॥

प्रोवाच वचनं भक्त्या प्रह्वीभूतो जगत्पतिम् ।

सर्वज्ञं व्यापकं शान्तं शुद्धमव्ययमीश्वरम् ॥ २ ॥

संपूर्णममलं तृप्तममनस्कं निरामयम् ।

सूक्ष्मं सर्वगतं स्वच्चमवर्णानमनादिमम् ॥ ३ ॥

प्रमाणातीतसद्भावं शक्तिमद् विश्वभैरवम् ।

यत् तत्वं तत् कथं शम्भो प्रतीतिमुपगच्चति ॥ ४ ॥

सर्वस्मिन् वस्तुग्रहणं प्रमाणादुपजायते ।

नाप्रमाणं क्वचिन्नाथ परिच्चिन्नं हि केनचित् ॥ ५ ॥

चक्षुरादीनि देवानि यदर्थे ग्राहकानि तु ।

सोऽर्थः संगम्यते सम्यगेव कोसोभाक्त समन्ततः ॥ ६ ॥

अनन्तो भानुजो वीरस्तूर्यमेतत् स्वरूपगम् ।

परिमलं स्वादुरूपं सृष्टिलक्षणशालि च ॥ ७ ॥

दृश्यं ग्राहकपञ्चैव व्यूहकं च स्वधर्मगम् ।

चतुर्गुणं सभाध्यक्षमेतदेव चतुष्टयम् ॥ ८ ॥

अस्मान्न पञ्चमन्नाथ हृद्यस्माकं विचेष्टते ।

श्रीदेव्युवाच।

यत् तद्धि पञ्चगं वस्तु प्रत्यहं सर्वतोमूखम् ॥ ९॥

तस्य वेदविदो वेत्तृप्रमाणं नेतरे जनाः।

किन्तु वत्स स्वकायेत्वमक्षाणां गणनाङ्कुरु ॥१० ॥

येन जानासि तत् तत्वं पञ्चमं भ्रूांति वर्जितम्

विहस्य सैन्धवो ब्रूते वृषलक्ष्म्या न मारुष॥ ११ ॥

न मह्यं सर्वसत्वानां सामान्द्रियवाहिनी व सामान्द्रिय- ख

सामान्येन्द्रीय-।

नासिका रसना चक्षुस्त्वक् श्रोत्रोपस्थपायुरेव च

यत् पाणिगामिनः कालः शेमुषी च प्रदृश्यते।

श्रीभैरव उवाच।

एषां व्यापारधर्मो यो ग्राह्यग्राहकलक्षणः॥ १३॥

तत् समानगुणं ब्रूहि निर्व्याजं पन्निलात्मज।

श्रीजयद्रथ उवाच।

आमोदरसरूपेषु स्पर्शशब्दान्तिकेषु वै॥ १४॥

ग्राह्येषु ग्राहकं दृष्टं नासिकाद्यन्तु पञ्चकम्।

आनन्दोत्सर्गगमनं ग्रहणं वचनं तथा॥ १५॥

इच्चानिश्चयबोधाश्च वृत्तिरुक्ता भगादिषु।

विहस्यामितगम्भीरचन्द्रचूडामणिस्मितम्॥ १६॥

विलोक्य वदनांभोजं हैमवत्यां स्फुरद्रुचिम्।

विभाषे वाक्यमितरमदृक् तिमिरमर्दनम्॥ १७॥

दुःशलाधिप भूतानां तूर्यमेतत् त्वयोदितम्।

प्रतिपत्तिकरं पुसां ख पुंसां प्रत्यक्षे पञ्च सन्ति हि॥ १८॥

शब्दस्य ग्राहकं श्रोत्रं साधर्म्येण व्यवस्थितम्।

श्रोत्रमाकाशरूपन्तु शब्दस्तद्गुणलक्षणः॥ १९॥

पृथिव्यप्तेजोमरुतां गुणा ः गन्धादयो मताः।

न हि शब्दगुणास्तेषां प्रमाणैरुपलभ्यते॥ २०॥

कार्यकारणभावोक्ते धर्माधर्मक्रियावहः।

आशयादिगुणैर्ज्ञेयः शब्दो व्योमप्रतिष्ठितः॥ २१॥

शब्दस्य साधनं श्रोत्रं श्रोत्रं व्योम व्यवस्थितम्।

तत्वं यत् त्वयोक्तमलक्षणम्॥ २२॥

तस्य वेद्येत प्रत्यक्षं दिक्क्रियोद्वहम्।

चक्षुराद्यैश्च यद्ग्राह्यं प्रत्यक्षं तद्धृदि संस्थितम्।

तदसद्दूरदोषो न सूक्ष्मन्यग्भूतवस्तुभिः।

समासन्नसमानाभिभूतवस्त्वंअतरीकृतैः॥ २४॥

प्रत्यक्षं बाधितं वत्स काव्यसूत्रप्रदर्शितम्।

दूरत्वाद् वहिर्दृश्येत शक्रक्रीडावलोकनैः॥ २५॥

किमसावसन् महाभाग सन्नप्यम्बरगो विधुः।

ज्योतिर्हीना न पश्यन्ति किमचन्द्रं तदम्बरम्॥ २६॥

काण्डभिन्नकरीं सेनां गजवाजिसमाकुलाम् ।

अभ्यसन्नपि गच्चन्तीं मनोहीनो न पश्यति॥ २७॥

किं सानुनि पथानेन विलीना भवतेऽनघ।

परिपूर्णं समं पश्य समन्तात् परमाणुभिः॥ २८॥

न ते दृश्यंति सूक्ष्मत्वात् किन्न ते सन्ति सुव्रत।

न्यग्भूतं तिलसिद्धार्थं पयसा स्नेहलक्षणम्॥ २९॥

त्र्यक्तं ख व्यक्तं प्रत्यक्षतां यान्ति तदसत् किन्नृपात्मज।

नेत्रस्थेनाञ्जनेनैव दृष्टं प्रत्यक्षगोचरम् ॥ ३०॥

असत्यादिविहीनैक स्तत्वमेव विवेचय।

प्रभ्रष्टः पंजरात् कीरो लीनः कीरकदम्बके॥ ३१॥

समानराशिभावानः संवेद्यो नास्त्यसौ तु किम्।

पतङ्गपद्धतिव्रातैरक्षिभूतो नभोऽन्तरे॥ ३२॥

ज्योतिबर्गो न संग्राह्यः किमसौ नास्त्यरिन्दम।

अन्धाश्च न हि पश्यन्ति निक्षिप्तानि च मन्दिरे॥ ३३॥

घटादींश्च तथैवं हि पटसंचादितानि हि।

न तेन सन्नपृच्चस्त्वं सन्निधौ मां स्वमातरम्॥ ३४॥

एवं श्रुत्वा तु गम्भीरा शर्वाणी सर्वभाषितम्।

जहास समदन्तेन्दुप्रभाभासितदिङ्मुखम्॥ ३५॥

ततः प्रोवाच खण्डेन्दुभासाद्योतिकपर्दकः ।

सूनृतं वद देवेश प्रमाणं भैरवं प्रति ॥ ३६ ॥

येन धीरत्नवैमल्यं भवते सिन्धुभूभृतः ।

श्रीभैरव उवाच

प्रत्यक्षमनुमानञ्च शाब्दं चैव तृतीयकम् ॥ ३७ ॥

प्रमाणत्रयमेतद्धि स्पष्टमीशप्रसाधकम् ।

प्रत्यक्षं फलते सिद्धं तत्पूर्वमनुमानकम् ॥३८ ॥

आगमैः साधयेते द्वे -ताभ्यामागमसाधनम् ।

ग्रहविक्षेपचायाभिर्विबीजं ग्रहदर्शनम् ॥ ३९ ॥

मास एतत् प्रमाणपञ्चकं दृश्यं ज्योतिर्विदां ज्ञानम् ।

कफवातपित्तसम्भवरोगजवेदनं ह्यविभ्रान्तम् ॥ ४० ॥

तन्निग्रहश्च भोजनशक्तिः संस्थिता यद्वत् ।

कालसमीरण लक्षं पुंसामुपतापदोषनिर्वाणम् ॥१ ॥

अन्धेष्विदमेवमौषधदानाद्भिषजां हि प्रत्यक्षम् ।

भद्रमृगमन्दजातिद्विजकुम्भकरी विकारपदैश्च ॥ ४२ ॥

सल्लक्षणैर्गजेन्द्रा वाक्कलिमद व ख वाक्कलि- दर्शिताःशुभदा ।

आयुर्विजयं वृद्धिं राज्यं बन्धुप्रियं च विपरीतैः ॥ ४३ ॥

निघ्नन्ति तच्च तादृग् दृश्यं सुस्फुटतरं जगत्यस्मिन् ।

कौशिकहरिणीयोगात् संभूतारण्यसम्भवा ये च ॥ ४४ ॥

खुर्वालकेशटङ्कांगाः पुण्ड्रकावर्तदशकगुणैः ।

सम्यग्विशुद्धदेहा भवन्ति राज्यादिविजयकर्तारः ॥ ४५ ॥

हरयः ककुदावर्तादिदूषिताः दुःखिता शीघ्रम् ।

एवं तनुतालुरोमत्वगग्रे सावयवचरणकरजनखैः सलक्षणैः ॥ ४६ ॥

बाला यत्र पुमांसो वनिताश्च जुषन्ति सुखमतुलम् ।

विपरीतशितैरपि दृश्यन्तेऽनेकरुग्भाजः ॥७ ॥

अव्याजरसरसायनसेवाकृत दिव्यवपुषोऽन्ये ।

शेफशतकल्पदर्शितदिव्यौषधिसम्भवं बलं यच्च ॥ ४८ ॥

निजगोचरगं तदपि हि दृश्यते ह्यव्याजवीर्यगुणम् ।

द्यूतकचेटकचिपिटानां दिवि शिव पार्वतीमतगताश्च ॥ ४९ ॥

मनुजाः स्वगोचरोदितसामर्थ्यविधानोद्देश्याः ।

स्पर्शदृषदमलमणिगुणविवरान्तरगमनपादलेपाद्यम् ॥५० ॥

धरणीमतप्रदर्शितविधिविधानसन्दर्शनाध्यक्षम् ।

गारुत्मत्यपि विषदं मन्त्रमुद्राध्यानधारणाभिस्तु ॥ ५१ ॥

विषनिग्रहभुजगग्रहविषादनाद्यैरनेकैश्च ।

भूतपिशाचार्थं नयननिग्रहसंप्रेक्षणादिभिरनेकैः ॥५२ ॥

भूतपतिशास्त्रविहितं प्रत्यक्षं दृश्यते तथ्यम् ।

जिह्वाच्चेदनवेधनलोचनसंस्पर्शनांत्रकृष्टिश्च ॥ ५३ ॥

मुद्रणबन्धनमारणप्रेष्यफलं मातृतन्त्रमपि ।

पातालखेचरामलतमालगुटिकातिरोहणादीनि ॥ ५४ ॥

प्रेश्याति साधकतनौ स्फुरन्ति भैरवविधानेषु ।

पुण्यविषयोऽंवुजवनं कालोसितरुद्रभुक्ति निशि मध्यम् ॥ ५५ ॥

पात्रयोगिन्यो द्रव्यमामिषं खेचरं सपदि ।

एवमष्टाङ्गवादादिवीर्यविभवेन सस्फुरं शैवम् ॥ ५६ ॥

शिवकृतमण्डलमन्त्रैरभिलषितावाप्तिकृतदृश्यम् ।

संहारकारि विरहणमालाकर्षोग्रसत्ववधबन्धैः ॥ ५७ ॥

खङ्गांश्च डाकिनीनां ज्येष्ठा तन्त्राणि दृश्याणि ।

नरकिन्नरोरगामरयक्षपिशाचमुनिनिशिवरस्त्रीणाम् ॥ ५८ ॥

संसाधनेन्द्रजालैर्दृश्यं चण्डासिधारमपि ।

एवमुद्दिष्टवस्तुषु निजगोचरसंस्थितं व ख निजगो च संस्थितं बलं

यादृक् ॥ ५९ ॥

तन्नियमं सर्वज्ञः करोति न हीतरेऽल्पविदस्ततु ।

प्रत्यक्षालोकादनुमानात् सिध्यते ह्यानुश्रविकम् ॥ ६० ॥

प्रारोहदर्शनादि च वृक्षस्य भवोत्तरविधानम् ।

एते स्फुटप्रमाणे स्यातां यस्मिन् स चागम ः ॥ ६१ ॥

शिष्टस्ताभ्यामद्यभिचारी ध्रुवमीशकृत् तस्य नित्यफलः ।

ईशश्च रूपहीनोऽपि भूतकृत्योपलक्षितो जगति ॥ ६२ ॥

आम्नायकार्यकारणभावैः प्रत्यक्षकृतामगमनं ।

रविरश्मिंपद्मवोधप्रत्यक्षालोकनं समाम्नायः ॥ ६३ ॥

कार्यं प्रावृषि भानोरदर्शने पङ्कजविकासः ।

करेणमपि सूर्यमणिर्दिनबन्धोर्गमात् सदा वह्नेः ॥ ६४ ॥

तच्चापि तत्स्वरूपं समवायनिमित्तबीजगुणम् ।

सूर्यमणेः समवायो हेतुस्तरणेर्ह्यपादानात् ॥ ६५ ॥

सन्नग्ने कार्यमिदं भृत्यः सिद्धश्च पावकः ख पावकस्त तस्य ।

पावक सम्भवोऽयं मणिः यो माया दिनेशवच्चैषः ॥६६ ॥

शिखिसंभवे च सत्ता वस्तूनां नान्यथा सृष्टिः ।

रविकान्तस्य न कामः कामो न हि विश्वकर्मणो यद्वत् ॥ ६७ ॥

उत्पत्तमे व उत्पान्नये ख उत्पन्नये कृशानोस्तद्वन्न भवस्य भवकर्तुः ।

कामो वरमात्रकृते  सञ्चरतो न हृदि तदाह सर्पस्य ॥ ६८ ॥

स्वबलार्पणैकनिष्ठाःस्वत एवैते हि धर्मिणां धर्माः ।

उत्पत्तिस्थितिसंहारवियोजनानुग्रहैर्भवो दृश्यः ॥ ६९ ॥

तद्दर्शनाच्च दृश्यस्तत्कर्ता कार्यतो दृष्टः ।

असुशिरशरणान्तर्गतमुग्ला निजकर्णकुवलयविकासात् ॥ ७० ॥

वेघे दृश्यमपीन्दोरुदयं कार्यानुमानाद्धि ।

एवममूर्तोऽपि विभुः कालश्च प्रकटितः स्वकृत्येन ॥ ७१ ॥

सम्भवशल्योद्धरकः कन्दुक इव देहहीनोऽपि ।

क्षुदिवानुभवसुगम्यो मन्मथ इव सौख्यमात्रसंवेद्यः ॥ ७२ ॥

कथनाद् यत् प्रतिपाद्यो निजबलसंवेदनाध्यक्षः ।

अचलो निरञ्जनश्चबलो मन्तव्योऽनुभवविवर्जितः शान्तः ॥ ७३ ॥

भैरवरूपः शम्भुर्जगतिगतिः प्रकटिता तुभ्यम् ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे कालसंकर्षण्याः कल्पे द्वितीयः पटलः ॥ २ ॥

तृतीयः पटलः ॥

जयद्रथ उवाच ।

आलोच्यं ज्ञेयरूपं तु मन्तव्यं सर्वतो हर ।

आलोचक मनोज्ञानं चेता पुंस्वार्थसाधकः ॥ १ ॥

आलोचिता च मन्ता च यन्न कर्ता नरं स्मृतः ।

एतावान् व्यवहारोऽत्र योगिनां योगसाधने ॥ २ ॥

मन्तव्यमपि यत्नेन तत्संवित्तिः कथं भवेत् ।

श्रीभैरव उवाच ।

मनोग्राह्यं तु मन्तव्यं यस्य न ग्राहकं मनः ॥ ३ ॥

मन्तव्यं तन्न जल्पन्ति मन्तव्यार्थविदो जनाः ।

वालाग्रयुतमात्रं हि लक्षाधिष्ठानमादरात् ॥ ४ ॥

मनसैकत्वनिभृतं मन्तव्यं मध्यसंहृतम् ।

तेजोऽनुरूपं लक्षाख्यं पञ्चावयवलक्षणम् ॥५ ॥

मनोरूपं हि तज्ज्ञानं निकृष्टं योगिभिर्मतम् ।

नेच्चातः स्पर्शसंकल्पो यावत् तावत् किमप्यसौ ॥ ६ ॥

स्वभावः सर्वभावानां भावहेतुरनादरः ।

प्रथमोऽनुभवो विष्णोर्द्विर्भावं यावन्नोत्सहे ॥ ७ ॥

तदावेशकालकृष्टिः कालसङ्कर्षणो परः ।

सुस्वप्नो ह्यसुसुप्तश्च द्विरूपगुणलक्षणः ॥ ८ ॥

सुसुप्तो भावविरमात् संवित् तेन सुसुप्तकः ।

योऽस्यैवानुभवः पुष्टश्चिन्तादिपरिवर्जितः ॥ ९ ॥

स यस्य सत्सदा योगी शेषो योगी परापरः ।

असमाधौ मुनिर्बाणं समाधिर्भवसाधनः ॥ १० ॥

बुद्ध्याद् व्यवस्थितो निम्नः समाधिर्योगिभिर्मतः ।

सा च वृत्तिगुणाख्या तु यतो धीर्गुणकारणा ः ॥ ११ ॥

समत्वं यद् भवेत् तस्यास्तद्गुणद्वयवर्जनात् ।

न व्यापारो रजस्त्यागात् तमोऽन्ते नियमो न हि ॥ १२ ॥

प्रख्यारूपन्तु विज्ञानं यत् स्वच्चं स्फटिकोपमम् ।

तत्सत्वं निर्मलं शुद्धं तव प्राधानिकं मतम् ॥ १३ ॥

संहृतं कार्यरूपन्तु कारणे विलयं व्रजेत् ।

कार्यं विद्धिः समायाता गुणाः कारणमिष्यते ॥ १४ ॥

बोध्य हानिं यदासौ धीस्तिमितत्वमुपागता ।

तदास्वकारणाकारं भजते तन्न संत्यजेत् ॥ १५ ॥

यत् तस्याः कारणं तद्धि यदि तत्वं परं भवेत्।

तदोत्सवः कापिलानां हन्त चैवादयो हताः ॥१६॥

ध्यानं ध्येयं प्रवृत्तन्तु ध्येयं सालम्वनं भवेत्।

निरालम्बं हि तद् ब्रह्मध्यानगम्यं न युक्तितः॥ १७॥

उहाप्रकाशितं सर्वं जह्यते वस्तुलक्षणम्।

वस्तुवृत्तेन यस्यास्ति तस्योहा क्रियते कथम्॥ १८॥

प्रत्याहृतिप्रयोगेन ह्येकोद्देशप्रतिष्ठितम्।

सन्निधीक्रियते नैशं यत्र तत्र च तद्गुणम्॥ १९॥

धारणा सविशेषा तु व रु स्तु विशेषो यस्य नेष्यते।

धारणासाधनं तस्य कथं स्युरविशेषतः ॥ २०॥

प्राणो वायुः समाख्यातः आयम्यावष्टभ्य वेदनम्।

यदा कार्यत्रयग्राही तदासौ किल निर्वृतः ॥११॥

तस्य हेनुरहंकारो रु हेतु- बुद्धिस्तस्यापि कारणम्।

बुद्धेः स्वकरणीयं तु कारणं प्रागुदीरितम्॥ २२॥

प्रलीने कारणे कार्यं लयं याति न संशयः।

मनोनिरोधोऽहमिति ह्यहंलीनप्रबोधकः ॥२३॥

प्रबोधे परमः सत्व मनन्यगुणष्टंहितम् ।

सत्वस्य परमा काष्ठा प्रकृतिः शासने मता॥ २४॥

तत् तन्मयत्वात् स्वं रूपं तदाकारं प्रसिद्ध्यति।

तथात्वनोदितः ं कालस्ततो भावं प्रगृह्यते ॥ २५ ॥

भावे च भावलिङ्गानि विचित्राण्यसृजत्पुनः ।

अथ चेदम् शुद्धत्वे मनुसो लक्षणं त्विदम् ॥ २६ ॥

विशुद्धमन्यथाभावि शृणु बुद्धि विचार्यते ।

प्रधानकार्यानुदयस्तमर्थं संस्पृशेद्यदा ॥ २७ ॥

साम्बरीयैर्गुणैश्चैव तदा तच्चुद्धमुच्यते ।

उक्ताश्रयो हि मनसोऽणुचैतन्यप्रचोदितः ॥ २८ ॥

आदरात् प्रीतिमान् भावो मलिनः प्रोच्यते वुधैः ।

शुद्धार्थालोचनं यत्तु पदशुद्धार्थलोचकम् ॥ २९ ॥

तज्जानं सहजं पुंसि व्यञ्जिका तस्य वेदनी ।

शुद्धार्थवेदनाच्चुद्धा सा शुद्धेतरवेदना ॥ ३० ॥

मायेया सा च विख्याता यतो मायात्मकं जगत् ।

यस्य साधनभावत्वं माया साद्यस्य युज्यते ॥ ३१ ॥

मायात्मकं तदप्यत्र ग्राह्यग्राहक भावतः ।

प्रपञ्चः प्रोच्यते माया प्रपञ्चो द्विविधार्थगः ॥ ३२ ॥

एकार्थो निष्प्रपञ्चस्तु प्रेर्यप्रेरकवर्जितः ।

स्वभावः सन्निराधारः शून्यताभावमाश्रितः ॥ ३३ ॥

नित्यः सर्वगतः शान्तः सदोदयसमागमः ।

तद्ग्राहिका भवेद् बुद्धिर्यदि बुद्धिविभुर्भवेत् ख बुद्धिर्वि- ॥ ३४ ॥

न स्मृतिं व्याप्नुयाद् यस्तु तद्व्याप्तिं कथमाश्रयेत्।

उत वा चित्तवृत्तिन्तु ख वृत्तिस्तु ययैवानुभवो भवेत्॥ ३५॥

चित्तवृत्तौ न तत्तत्वं तेन तत्र न लक्ष्यते ।

संरम्भाद् व्यापकं तद्धि हृषीकेषु तथैव च॥ ३६॥

तद्ग्राह्येषु च तन्वङ्गि निसर्गस्थितवस्तुषु।

अथ तत्र तदस्तीह तद्योगो विफलस्तदा॥ ३७॥

प्रयत्नाल्लोचनाक्षीणि स्वात्मन्येव नियामयन् ।

प्रबोधो वस्तुरूपस्य तत्त्यागो भाव एव च॥ ३८॥

त्रिकस्यास्य प्रसाधात्वं साधने त्रिकमेव हि।

इच्चाप्रयत्नचित्तं च सूक्ष्मात् सूक्ष्मं च वानघ॥ ३९॥

बोधाश्रयो भवेद् बोधो बोध्यं स्थूलं यदा ख यथा भवेत्।

तत्त्यागस्तु यथा व ख यदा योग्यो तत्त्यागो भवितापि च॥ ४०॥

देवतावयवे स्थूले बोध्ये बोधांतरङ्गमः।

इच्चाद्यभिहितं तद्वदन्तरङ्गं हि प्राङ् मया॥ ४१॥

मन्तव्यो व ख -व्य मनसो योगो व ख योग विश्लेषस्त्याग उच्यते।

प्रपन्नेच्चापहारश्च स चाभावः प्रशंसितः॥ ४२॥

चिन्मात्रोद् बोधसंवित्तिः कालत्रयविवर्जिता ः।

कारणं करणात् कार्यं त्रिकमुत्सीलितं यदा॥ ४३॥

तदा भावगतो योगी निस्तीर्णो जन्मबन्धनात्।

एवं काष्ठमयी वृत्तिरेषां मुक्तिः प्रयत्नगा ॥ ४४ ॥

तेषां तद्वृत्त्यसंयोगान्मोक्षाभासोऽपि दुर्लभः ।

इच्चाप्रयत्नबोधाद्यानर्थान् सर्वान् हि शून्यताम् ॥ ४५ ॥

व्यापयित्वा स्थिता यद्वदसतादीन् खमुज्ज्वलम् ।

न तत् किञ्चित् परित्यज्य ग्राह्यं एकत्वातं किञ्चन ॥ ४६ ॥

न तद्दूरे न चासन्ने न नादस्तत्र तद्वहि ः ।

न नद्विरामो महतो न कालमनसो प्रिये ॥ ४७ ॥

न तद्दृषीकचरमं न च बिम्वावसानकम् ।

न च तद्धारणान्नीतं न गुणैः परिवर्जितम् ॥ ४८ ॥

नाव्यक्तां ख नाव्यक्तं तदसद्देवि न च पुंरागयोरपि ।

आदिमध्यावसानेषु सत्रे ह्यस्मिन् महाधिपे ॥ ४९ ॥

चरतः पौरुषानर्थान् संवित्तियास्य तत्वगा ।

स चात्रामृतवांल्लोके मृतवान् यत्र योगगः ख –तः ॥ ५० ॥

श्रीदेव्युवाच ।

ससाधनेषु भोग्येषु गुणरागादिषु प्रभो ।

अनपानेषु ख अन्न– तल्लव्विर्यदिस्यात्तदिदं जगत् ॥ ५१ ॥

किमर्थं तिष्ठते बद्धं ख वद्धं दृढया पाशमालया ।

अधोमुखमवीक्ष्य क्ष्मां स्फुरिताधरपल्लवः ॥ ५२ ॥

ततः प्रोवाच भगवाञ्श्चन्द्रचूडामणिः प्रभुः ।

नालिकेरेकरस्थे तु क्षुत्क्षामस्तु वनेचरः ॥ ५३ ॥

पञ्चत्वमर्हते तस्य भेदविज्ञानवर्जितः ।

स मुच्यते हयो देवि वृत्तिस्थं वेत्ति शङ्करम् ॥ ५४ ॥

निर्द्वन्द्वमुन्मनीव्यक्तमचलं  दारुवद्धृशम् ।

न योगी योगमाप्नोति चलत्वाच्च सदाचितः ॥ ५५ ॥

अथातिनिश्चयाद्योगः स योगः कस्यचिद्भवेत् ।

मोहयोगेन योगीन्द्रो निर्विचारेण तेन सः ॥ ५६ ॥

श्रीदेव्युवाच ।

दैत्येन्द्रवक्षस्पृष्ठोद्य रु वक्षपृष्ठाद्य स्थूलाभेद्यविभेदनः ।

शौर्यकारी घनोत्ताल ज्वालादीप्तदृगानलः ॥ ५७ ॥

दुष्टारातिभटान्युग्रहेतिक्षणकिणाङ्कितः ।

रत्नालङ्कृतमूर्द्धोर्ध्वफणिमण्डितदोर्गणः ॥५८ ॥

मार्गणाग्राति  दीप्ताक्षिवह्निदीपितमस्तकः ।

उत्खायान्धकहृच्चल्यं दत्तामरमहासुखः ॥ ५९ ॥

कुटीरान्तरबालेन्दु कलाकन्दलभासितः ।

गरलापः  सुविस्तीर्णवलयाङ्कितकन्दलः ॥ ६० ॥

राकाशशाङ्कबिम्बाभकपालकृतहस्तकः ।

इरायुतवपुःशूलकरकोकनदानलः ॥ ६१ ॥

दक्षिणानलः दंष्ट्रांशुभग्नविश्वमहातमः ।

संसारहिममार्तण्डो व्याधो धनहुताशनः ॥ ६२ ॥

अद्यस्तिभिरपूर्णेन्दुदुःखपङ्कजलप्लवः ।

दोषानलमहाज्वालाटोपैः शम्भु हलाहलः ॥ ६३ ॥

क्षुधां कामफलाहारस्तृषाममृतसागरः ।

धूर्तारातिमहारण्यदीप्तदावशिखिध्वजः ॥ ६४ ॥

दिवौकसां गवां गोपो रुरोधोरुगवीश्वरं ।

त्वत्पादपद्मगम्भीरकोशाभ्यन्तरशायिनीम् ॥ ६५ ॥

शरण्यं शरणानां च नाथ बाह्यनाथमरिन्दम ।

यत् तत् परमसद्भावः प्रतिपन्नः त्वया हर ॥ ६६ ॥

सर्वामृतगुणाधारसमादरमनिन्दितम् ।

प्रत्यक्षमचलं शान्तं मनोऽहङ्कारवर्जितम् ॥ ६७ ॥

विषयास्वादवियुतं सर्वा रमनाश्रितम् ।

तत्तत्वमुपदेशेन कथमत्रोपलभ्यते ॥ ६८ ॥

श्रीभैरव उवाच ।

चिन्ता ध्यानं कृकं निश्चिंतं शिवमव्ययम् ।

स्वभावं तं विजानीयात् स्वभावेनैव भावयेत् ॥ ६९ ॥

स्वभावस्तु चलावस्था ह्यन्यभावाबोधिते ।

भावाभावेऽपि सा नित्या स्वावस्थां न जहाति च ॥ ७० ॥

तस्यामन्तर्गतं चेतः पुंसां सर्वक्रियास्फुटम् ।

ग्रामं ग्रामं समर्थयात्मा गोचरस्तां समर्पयेत् ॥ ७१ ॥

चलन्ति वस्तु जातानि स्तैमित्यं यान्ति तानि वै ।

चलत्वं सत्यसापेक्ष तिमिरत्वं यतः शृणु ॥ ७२ ॥

यस्य नोऽचलधर्मस्तु तस्य तद्धाममिङ्गितम् ।

चलधर्मा मरुद्व्योम्निमितं नित्यलक्षणम् ॥ ७३ ॥

उभयोधृच्यते ----------------- ।

वायुवत्सत्तमादीनि व्योमवद् व्योम तत्परम् ॥ ७४ ॥

चलन्मरुद्यदा व्योम्नि लीनो ह्यचलतां गतः ।

तदा व्योमोपलब्धिस्तु किन्न सा मरुता सह ॥ ७५ ॥

यदा समस्तवस्तूनि विलीयन्ते स्वरूपतः ।

तदानुभवमायाति तत्तत्वं किन्नरैः सह ॥ ७६ ॥

निष्कलं खगमासक्तास्तस्मिंल्लीनोऽपि निश्चलः ।

व्योम्नः पृथग्गतं दृश्यं तत् पृथग्योमदर्शनम् ॥ ७७ ॥

यथोपलभ्यते तद्वत् वस्तुतत्वान्तरं प्रिये ।

शम्भोः शक्ती रणात् सर्वमीरितं चलतां ययौ ॥ ७८ ॥

समानत्वात् समानं स्यात् संहाराल्लय एव च ।

तदेवमेकरूपन्तु सततं सर्वतो मुखम् ॥ ७९ ॥

अप्रेर्यं स्थिरगं शान्तमसंहार्यमनादरम् ।

भूतान्तरंगसंभूतं भूतभूतं विलक्षयेत् ॥ ८० ॥

विपञ्ची स्वरटङ्कारात् कस्माद् व्यज्यन्ति सुव्रते ।

व्यक्तावस्थायिनः  कुत्र कुत्र लीयन्ति वानघे ॥ ८१ ॥

झल्लरी पटहादीनां रवाणां˙ द्विरदारिणाम् ।

महारवोपशासेया  संवित्तिः स्वोदयेऽपि हि ॥ ८२ ॥

वर्तमानेऽपि सा तादृङ् महाभूतात्मिका प्रिये ।

दीप्ता दीप्तशिखा देवि निर्वाता व ख -णा भुवनोदरे ॥ ८३ ॥

झगित्येव हि यां वृत्तिं प्रसाधयति तत्क्षणात् ।

सा वृत्तिर्यस्य संकल्पसामरस्यमुपागता ॥ ८४ ॥

स योगी योगयुक्तः स्यद् योगी स्याद् वृत्तिजिवर्हितः ।

महाभूतरतिर्ह्येषा सुसुप्ता सर्वतोमुखी  ॥ ८५ ॥

सङ्कल्पसरसा नित्या परामृतविधायिनी ।

गुरुवक्रात् समुत्पन्ना यस्याः संकल्पनिश्चयः ॥ ८६ ॥

संश्लिष्टचित्तसंताने नासौ हृयति केनचित् ।

तस्यार्थं सा च तद्योगस्तस्याः नेष्टस्तु योगिनाम् ॥ ८७ ॥

अविच्चिन्नस्तु सङ्कल्प भूतयोः सन्निधिर्यतः व  ।

ततः पूर्वोदितं तन्मे सर्वं शष्टं भविष्यति ॥ ८८ ॥

भूतादिष्टस्तु संकल्पः संकल्पो भूतमाश्रित  ः ।

यानयोः समरसता साव्युच्चिन्ना विनश्वरा  ः ॥ ८९ ॥

विनश्वराणि वस्तूनि शरीराद्यानि सुन्दरि ।

तानि दृष्ट्वा पृथग् स्थानि सा दृष्टापि विनश्वराः ॥ ९० ॥

श्रीजयद्रथ उवाच ।

सङ्कल्पोलक्ष्मनसः प्राक् त्वया समुदीरितः ।

स चाप्यग्राहकस्तस्य महतश्च हि साम्प्रतम् ॥ ९१ ॥

तत्सामरस्यभावेन तत्संवित्तिः प्रकाशते ।

श्रीभैरव उवाच ।

चिद्रूपान्ता भवोत्पन्नः संचित्तिरुपलब्धिभिः ॥ ९२ ॥

आस्वाद्य भोगसंज्ञाभिः सङ्कल्पो ह्युपचर्यते ।

स्वचित्तापरचैतन्यस्योपलब्धिर्यदा ययौ ॥ ९३ ॥

तदा तदाह सङ्कल्पं न च तस्य मनोगुणैः ।

क्षुत्तृषोरन्तरंगे तु स्वशरीरैरप्रवृत्तयः ॥ ९४ ॥

न तयोर्ग्राहकश्चेता न च ते तु भवोज्झिते ।

रेतोत्सर्गसुखं पुंसां यत्सञ्चित्तेरुपागतम् ॥ ९५ ॥

न तस्य ग्राहकं चित्तं तद्वृत्तेर्वारिकुम्भज ।

स्वदेहे वेदनादीनामन्येषाञ्च महातपाः ॥ ९६ ॥

मनोमहदहङ्कारपूर्वाणां ग्राहकं व ख ग्राहिता नहि ।

चिच्चैतन्यं हि चिद्रूपं ग्राहकं नेतरं क्वचित् ॥ ९७ ॥

लोकेसमानजातीयं यथा प्राणो व ख प्राणं नभोमणिः ।

विशेष लक्षणो वाक्यं माणिक्यांशु विमार्जिते ॥ ९८ ॥

सत्यज्ञानतपोयोगादुवाचेदं पुनर्नृपः।

यथोपदिष्टं सर्वेश भवतां तादृशं हितम्॥ ९९॥

सदा तु भवमात्रं हि न च यानि प्रकाशितुं।

तथापि मह्यं दीनाय नाथानाथाय भीरवे॥ १००॥

कृपयोपायमाख्याहि तस्योपायस्य सञ्चितः ।

प्रोवाच हास्यसंयोगाद्रदनोद्भूतरश्मिभिः ॥ १०१॥

विद्युतां पुञ्जरूपैस्तु प्रच्चादिततमोभरः ।

तद्वत् सपुष्टं पश्यामि तस्योपायं प्रयत्नगम्॥ १०२॥

तमुक्त्वानुभवं शून्यमुभयोर्भूतभूतयोः।

तथापि हि तदाभासभोगावस्थानलक्षणम् ॥ १०३॥

लेशतो ब्रूमि वीरेन्द्र शिरश्छेदे यथोदितम्।

विद्युतः प्रोच्चलल्लेख्यं वाग् वा द्राधीयसीं चलाम्॥ १०४॥

अस्त्वग्नीनां चितां वीक्ष्य को न तां वेत्ति शून्यताम् ।

ऐशानी विद्युवच्चक्तिः सा बाधा भुवनाङ्किता ॥ १०५॥

तस्योत्पत्तौ स्थितौ मे यद् गांभीर्यं सुनिम्नगम्।

सर्वाकारं निरालम्बं तच्चिन्त्यं तद्विभूतिगम्॥ १०६॥

यथा साधारणे व्योम्नि वपुर्व्योम्नि तथा हितम्।

विस्मृतं स्मरणे काले योनेराधारतां प्रिये॥ १०७॥

स्वदेहे तु मया ख्यातं को न जानाति शङ्करम्।

प्रस्त्रावमुपविष्टे तु सूत्रागमतींशुके ॥ १०८ ॥

पानादननिरालम्बा या वर्ति साद्वयशून्यकृत् ।

यस्त्वैकगतचित्तश्च भवितानान्यचिन्तनम् ॥ १०९ ॥

विहाय संस्थितश्चेति निरालम्बो यदा हृदि ।

स्वभावादप्रपन्नाच्च तदा स्वादय सेन्दव ॥

द्रव्याच्च सन्निकर्षाच्च या निराधरताक्षणे ।

तया तद्भूततोद्भूतं न कदाचिद्विनिष्क्रमेत् ॥ १११ ॥

मैथुनानन्दसंप्राप्तिक्षणे समरसी भवेत् ।

पश्चादिष्वप्ययत्नेन  भूतें भूते परे प्रिये ॥ ११२ ॥

गान्धर्वमूर्च्चनाव्यक्तेर्भावनैकाग्रतां  गते ।

द्विरूपमपि तच्चून्यमेकं भवति नादरात् ॥ ११३ ॥

विस्मृतेरस्तमात्रे च विमुक्ते प्रेयसः प्रिये ।

सा निराधारतां याति स्वभावेनैव पुद्गलः  ॥ ११४ ॥

या निराधारता तस्य निरालम्बा प्रपञ्चिनी ।

सामृताधरमाकण्ठा सुनिर्वाणविभूतिदा ॥ ११५ ॥

इत्येतत्स्थूल सूक्ष्मं सकलमसकलं चञ्चलं वाचलं च

सावद्यावद्य हीनं शिवपुरवपुषं सेश्वरं वाप्यनीशाम् ।

सा यत्नं भूतयुग्मं समरसमसकृत् सङ्गतं यो विभेद

निर्वाणो पायमार्यं शरणमशरणस्तं गुरुं गच्च लोके ॥ ११६ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे कालस

ंकर्षण्यां निर्वाणनिर्णयो नाम तृतीयः पटलः ॥ ३ ॥

चतुर्थः पटलः

श्रीभैरव उवाच ।

अथ धातुः प्रवक्ष्यामि वीर्यसन्तानमादरात् ।

तदेकमप्यनेकान्तं कृत्यभेदाद् उपागतम् ॥ १ ॥

भोक्तृभोग्यप्रतिष्ठानाद् विश्वरूपं प्रतिष्ठितम् ।

चितेर्न लक्षणाख्यानाद् भिन्नमेकमधीक्ष्यते व ख -क्षते ॥ २ ॥

निरस्ताश्रयभावाच्च समस्तस्य निराश्रयात् ।

तन्निराश्रयमाख्यातमनार्थं नाथवर्जनात् ॥ ३ ॥

अन्ताद्यमृतभावत्वादनन्तं व्योमरूपतः ।

व्योमरूपमनिन्द्यं तं व्यापित्वाद् व्यापकाश्रयात् ॥ ४ ॥

नीयते परमेशस्य ह्यभिन्नपरमात्मनः ।

कर्तारं चापि धातारं हर्तारं सर्ववस्तुषु ॥ ५ ॥

नेतारं च वियोक्तारं भोक्तारं ह्यर्थसन्ततेः ।

वेत्तारं चाभियोक्तारं एवमादिगभस्तिभिः ॥ ६ ॥

अनन्ताभिः समापूर्णं कृत्यसंज्ञाविधायिभिः ।

उताभिचिद्बलाघ्रातं दुर्गाप्रगुणलक्षणम् ॥ ७ ॥

अधःस्रोतःसमासन्नं स्थानं विश्वस्य भास्वरम् ।

योगक्रीडाविलासेन योगमूर्तिभिरीश्वरः ॥ ८ ॥

क्रीडते भोग्यभोक्तृत्व रूपाभिर्यत्रलीलया ।

विधूके शशिखण्डास्तु भोक्तारो भैरवात्मकाः ॥ ९ ॥

कापालिकास्त्रिनयना दोर्दण्डोद्यतहेतयः ।

अनाथानाश्रितानन्तव्योमरूपविभूत्तमाः ॥ १० ॥

नररूपाः शान्ततमास्ता एव हि कलात्मिकाः ।

योनिरूपा महाभागा ः पतिरूपानुकारगा ः ॥ ११ ॥

व्यापिनीव्योमरूपाश्च अनन्तं नाथमाश्रिताः ।

एतद्धि कथितं वत्स परं मिथुनपञ्चकम् ॥ १२ ॥

भोगस्थाने महाबिन्दावस्मिन् भोगविलासनम् ।

स्वतोधिकारगं धाम्नि प्रागुक्तेऽलपलक्षणे ॥ १३ ॥

ततो घोरा महावीरा भैरवाः परमेश्वराः ।

कपालमालाभरणा नागयज्ञोपवीतिनः ॥ १४ ॥

खंडेन्दुमौलयः सर्वे तथा पञ्चदशेक्षणाः ।

व्यालकल्पास्थिमृत्प्रोताः सितभस्माङ्गरायिणः ॥ १५ ॥

पुण्डरीकाजिनालम्बा गजचर्मोत्तरीयकाः ।

कल्माषकंठबिम्बोष्ठा दिग्दोर्दण्डकलापिनः ॥ १६ ॥

वक्रपञ्चकदंष्ट्रेन्दुकरोद्भासितदिङ्मुखाः ।

मञ्जीरोरगपूर्णेन्दु रश्मिरञ्जितपद्युगाः ॥ १७ ॥

व्यापि भैरवदेवेशोद् ह्यमृतामृतभैरवः ।

पीयूषभैरवो वीरः सुसूक्ष्मो सूक्ष्म एव च ॥ १८ ॥

अजगो विजिनानन्दो सुषुम्ना मन्दरोदयः ।

गान्धारभैरवो घोरस्तथा भैरवभैरवः ॥ १९ ॥

द्वादशैते महावीरा युग्मं युग्मं समाश्रिताः ।

द्वादशान्ते ख द्वादशारे वुजे ख म्बुजे शुभ्रे वन्ध्यादित्येन्दुकर्णिके ॥

२० ॥

ग्रहर्क्षतारकानेकपत्रान्तर निवासिनि ।

विद्येश्वरगणाकीर्णे यत्र सन्धिविसारिणि ॥ २१ ॥

नादकेसरसङ्कीर्णे बिन्दुकिञ्जल्कवासिते ।

व्यापिनी ससुधासौधा सुसूक्ष्मा सूक्ष्मरूपिणी ॥ २२ ॥

वीरा जगाविनी नन्दा सुषुम्णा मन्दरोदया ।

गान्धारी भैरवी देवी द्वादशी परिकीर्तिता ः॥ २३ ॥

भर्तृरूपधरा देव्यो रमन्त्यक्लिन्नसम्पदः ।

नवयौवनलावण्यपुञ्जोद्भासितविग्रहाः ॥ २४ ॥

एवमस्मिन् सुविस्तीर्णे द्वादशारकशालिनी ।

श्रीवत्से द्वादशैतानि दम्पत्यानि रमन्ति हि ॥ २५ ॥

एषां सामीप्यगानीह सायुज्यस्थानि यानि च ।

सालोक्यगान्यनेकानि तेषां संख्या न विद्यते ॥ २६ ॥

व्योमव्योमेश्वरो वीरो वैकुण्ठः शिखिवाहनः ।

प्राणोऽपानः समानश्च ह्युदानो व्यान एव च ॥ २७ ॥

नागः कूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ।

विभ्रमश्च भ्रमश्चैव वेधषुर्वृषभोऽमलः - ॥ २८ ॥

पुण्डरीकः शशाङ्कश्च चण्डः संवर्त्तभैरवः ।

इडापिंगलनामा च यूषो यूषेश्वरो  नलः ॥ २९ ॥

ईशानभैरवः शुक्लश्चन्द्राभोऽनलभैरवः ।

वकुरूपभैरवः श्यामो रक्तो वामेश्वरो मतः ॥ ३० ॥

क्षीरोदपुञ्जरुचिरो विख्यातः सद्यभैरवः ।

रक्तः  करालश्चण्डाक्षो महोच्चुष्मोऽथ वाडवः ॥ ३१ ॥

वाडवो घुर्घुरो घोषो कुलिः कौशिकभारुद्रः ।

लम्पटो वावटो द्वोण्डो दामो वुलुवुलः किलः ॥ ३२ ॥

कह्लोदः पिचुमान्यीडो हेड्रोहेड्राधियो बली ।

क्रौञ्चसत्त्वो महासत्वः पक्षः सारस एव च ॥ ३३ ॥

व्योमव्यापी दशार्णश्च नवात्मा चलभैरवः ।

संहारभैरवो  हंसो झाङ्कारो भवभैरवः ॥ ३४ ॥

हुक्कारः सुशिरो ख्यातोऽन्यो ज्ञानाङ्कुशभैरवः ।

वागीशभैरवो ज्ञेयः सप्त ह्यूर्ध्वे द्वितीयकः ॥ ३५ ॥

अमी वीराः समाख्याता ः सामीप्यस्थानमाश्रिताः ।

श्रीपादलाञ्छिता ह्येते भोक्तारो भोग्यरूपिणः ॥ ३६ ॥

ज्ञातव्या वीरपानज्ञैर्धीरदर्शनवेदिभिः ।

अतः सायुज्यगाः सन्ति तेऽपि नाम विशेषणात् ॥ ३७ ॥

युग्मभावं समायान्ति योषित्पुंसो कपायतः ।

करालो दन्तुरश्चैव भीमास्यश्च महाबलः ॥ ३८ ॥

खेलो नीलः खरः कालो मन्मथो गहनाम्बरः ।

दंष्ट्रोद्घाती विषादी च कन्दर्पो दर्प एव च ॥ ३९ ॥

सृष्टिसंहारभूतेशा भूतोत्कीलनभैरवाः ।

ध्वजचत्राब्जशङ्खेषु शूलपिच्चकभैरवाः ॥ ४० ॥

वल्कोल्मुखः सुताराख्यः कबन्धो ध्वनिभैरवः ।

मदमोहविषादाश्च रागवैचित्र्यविस्मयाः ॥ ४१ ॥

क्रोधाहङ्कारसन्तोषलोभदम्भादयस्तथा ।

पैशुन्यंमत्सरः कामः कौटिल्यानुनयः परः ॥ ४२ ॥

कल्पाणो बिन्दुकश्चैव भर्गः कल्याणधेनुकः ।

विद्याप्रसूती मनङ्गो समशीर्षो दशाननः ॥ ४३ ॥

घंघलो घूर्णनो घूको महाघंघलभैरवः ।

शम्बलः शृङ्खलो नन्दो महानन्दो निरन्दुकः ॥ ४४ ॥

नरकश्चर कोलीनःमादकोवडवानलः ।

द्वासप्तति प्रोक्ता मिनौघा निकुम्भज ॥ ४५ ॥

प्राक् प्रोक्तां रूपधातारःयोगक्रीडाप्रसादतः।
रमन्ते विविधैर्भोगैर्योगजैर्योगसम्पदः॥ ४६॥
पर्वद्वयगता ह्येते चोदिता योगभैरवाः।
सिद्धाणवो महावीराः सालोक्यं स्थानमाश्रिताः॥ ४७॥
ते प्रोच्यन्ते सपत्नीका नामभिः शान्तमूर्तयः।
महाविभवपर्यङ्ककृतास्पदमहोदयाः ॥ ४८॥
स्वशेखरमहारत्नभास्वद्भासितविग्रहाः।
मन्त्रानलशिखाटोपदग्धसार्द्धेन्धनतृकाः॥ ४९॥
सर्वज्ञाः सर्वकर्तारः सर्वभैरवसम्पदः।
विद्याधिपतिसोमेशौ मेघवाही च गोपतिः॥ ५०॥
यमपालो विकरालः शिखावाही हरः परः।
महादेवस्तथा क्रूरः शिखेशाङ्गवङ्गणावुभौ ॥ ५१॥
चण्डीशश्चैव संवर्तः श्रीगर्तबलशालिनौ।
प्रद्युम्नो ह्यनिरुद्धश्च अनन्तो मदनस्तथा॥ ५२॥
अक्रूरचक्रदेहौ च वक्षश्च  हरस्तथा।
शौण्डी प्रमथनामा च भीमो मन्मथ एव च॥ ५३॥
अतिकायो विदेहश्च शुष्काक्षश्च कटङ्कटः।
भिन्नकेशः  करोघा-----े   यस्तथा॥ ५४॥
गोकर्णोऽथ महानासो बिडालः ः सुमुखोऽपि च।

करालवह्निजिह्वा  उल्काक्षोभत्मकः  परः ॥ ५५ ॥

विपुलो दुलुदुण्डश्च दन्तुरः  कालरात्रिकः  ।

मुकुटो यमघण्टास्थो यमजिह्वो महामुखः ॥ ५६ ॥

रेवतः कुम्भकर्णश्च रक्ताक्षो गर्जनो बली ।

धूम्रकः कर्कटो राहुः पुंश्चली चञ्चिनस्तथा  ॥ ५७ ॥

हिलिहिलिः किलो रुद्रः सुभद्रो भीमभद्रकः ।

भीमोऽथ भीमवान् भीष्मः भद्रकालः सुमानसः ॥ ५८ ॥

देवको बलवान् वीरो भीम्मकश्च  महारवः ।

क्रमको विक्रमधुरः कम्पनः सूक्ष्मविग्रहः ॥ ५९ ॥

विश्वो विश्वेश्वरश्चैव भारोग्रो वीरनायकः ।

अश्वो घूर्वश्च सर्वज्ञः कोष्ट्रकोच्चुष्मसंज्ञकः ॥ ६० ॥

एते वीराः समाख्याता वसुमङ्गलसंख्यया ।

नाम्ना विशेषणादेषां जायाख्यः पूर्ववद्गणः ॥ ६१ ॥

त्रिपर्वे द्वादशारस्य स्थितोऽयं यामलोऽमलः ।

वहिरन्तर्महावीरः कालसङ्कर्षणस्थितः ॥ ६२ ॥

कालसंकर्षणीयुक्तः कुटिलः कुटिलेश्वरः ।

समवायश्चित्स्वभावः ः परिग्रहश्च नः  प्रभुः ॥ ६३ ॥

पदमन्त्रकलावर्णतत्त्वाधाराण्यसंख्यया ।

यश्चकार जगत्यस्मिन् भोक्तृणां भोग्यहेतवे ॥ ६४ ॥

विशुद्धं मन्त्रसन्तानाः शुद्धभैरवमूर्तयः ।

विरक्ताख्य स्वरूपे तु स्थित्वा यान्ति परं पदम् ॥ ६५ ॥

तत् ते स्वयं विनिक्षिप्य योगव्योम्नि निरामये ।

ज्ञानमूर्त्यंशकायौ तु ज्योतिःशब्दौ तु भास्वरौ ॥ ६६ ॥

मलयोगवियोगाभ्यां बन्धमुक्ती प्रसाधयेत् ।

जन्मवज्जन्तुवक्राणां स्वधर्मालिङ्गनात्मनाम् ॥ ६७ ॥

पश्चात् पश्चिमजन्मा तु पुमान् संसाध्य लीलया ।

श्लथयत्यावृतिं गूढां स्ववीर्येण मलात्मिकाम् ॥ ६८ ॥

परिग्रहगुणो मूर्चा या रुणद्धि चेतोबलम् ।

सर्वव्यापारकर्तृत्वषट्कं सर्वज्ञलक्षणम् ॥ ६९ ॥

समवायगुणश्चास्य तद् वैधर्म्यप्रतिष्ठितः ।

प्रालेयानपि चार्कांशुभीषणां पक्षिराडिव ॥ ७० ॥

जन्तूनां यत्र सन्तानवाहनात्यं तत्परः ।

अनादिबन्धसम्बन्धो यन्त्राद् यन्त्रान्तरं व्रजेत् ॥ ७१ ॥

पुर्यष्टकतनुश्लिष्टं सकलं कर्मकारणम् ।

सहजांगान्तरप्राप्तः कर्मरज्जोर्यथा दृढः ॥ ७२ ॥

तिरस्कृत्य यागसम्बन्धेन तदुत्पत्तिरूपवान् ।

न च तादात्म्यरूपज्ञः समवायात्मलक्षणः ॥ ७३ ॥

दीपार्चिरजनावस्था तदुत्पत्तिर्बुधैर्मता ।

केशोर्णासितनाधर्मास्तादात्म्यप्रतिपत्तिकृत् ॥ ७४ ॥

संबन्धः समवायाख्यैर्ज्ञेयस्तन्तुपटात्मकः ।

मलपुंसोरवस्थानं शुक्तिमौक्तिकयोरिव ॥ ७५ ॥

अथ वक्ष्ये डकाकारं सहजाश्चर्यदर्शनात् ।

दृश्यं तदन्तर्जीवानामाख्यायां वा प्रतिष्ठितम् ॥ ७६ ॥

तिरस्कृतिः त्रिभिः कार्यां सम्बन्धोऽयमनादिमान् ।

चरितार्थाश्च दृष्टान्तां सहजानादिसाधने ॥ ७७ ॥

तिरस्कृत्तिरसत्कार्यैं वस्तुत्वे च न सर्वतः ।

एवमेतत् पशुत्वं हि पशोरञ्जनमुच्यते ॥ ७८ ॥

येनाभ्यञ्जितचिद्धर्मकर्मकृत् कर्मरूपिणः ।

देहानाप्नोति मायीयान् यतिशक्तिसमन्वितान् ॥ ७९ ॥

मलानुपातभोक्तृत्वं कर्मणो भोगदर्शनम् ।

भोगसाधनदृष्टेन प्रपञ्चोऽप्यनुमीयते ॥ ८० ॥

भोक्ता भोगक्षयो माया व्याप्रियन्ते न शक्तिभिः ।

वपुरित्यादिकाभिस्तु घोराभिर्बलशालिभिः ॥ ८१ ॥

धर्माधर्मक्षयो येषां जातः शिष्टेन कर्मणा ।

निष्प्रपञ्चाणवः प्रोक्तास्तेञ्जनैःकलिबन्धनात् ॥ ८२ ॥

पत्युरिच्चासु ये यूषप्लुतास्ते यान्ति निर्वृतिम् ।

द्विविधामाश्रितां ज्ञानयोगदीक्षासु वर्तनैः ॥ ८३ ॥

श्रद्धाविद्यामनुज्ञाय प्राणकायोद्ध्र्वधर्मतः।

सम्प्रदायचरुभ्यां वा ज्येष्ठाद्यैरथ कुत्सितैः॥ ८४॥

एवमादिभिरन्यैश्च साधनैरमितैः प्रभुः।

संसारिणोऽनुगृह्णाति विश्वस्य जगतः पतिः॥ ८५॥

जयद्रथ उवाच।

अनादिमलसंसर्गाद् भोक्तृत्वं भोक्तुरिष्यते ।

भवादौ तस्य को भोगो वपुषो यो विधायकः॥ ८६॥

सति कर्मण्यजस्राभिः शक्तिभिः सृज्यते घनम्।

बीजांशशबलव्यूहचिच्चक्रेः सर्वदोचितः ॥ ८७॥

निमित्तकारणं यत् तदञ्जनं कर्मणो मतम्।

तत्साधनाय माया च भोक्ता साधयिता व साधयिती पशुः॥ ८८॥

यथा योगस्वरूपञ्च कत्र्यो या विभुशक्तयः।

एतावान् व्यवहारोऽत्र विश्वे विश्वपते स्थितः॥ ८९॥

भोक्तृत्वभोग्यभोगेषु साधनादिषु सर्वतः।

सम्भूतिरव्यया बिम्बी नित्या च जननी मता॥ ९०॥

सा चैव हि मलो नाम मुक्तितः प्रतिपद्यते।

न तस्या व्यतिरेकेण मलयुक्तिर्विभाव्यते॥ ९१॥

श्रीभैरव उवाच।

कर्मापेक्षः प्रपञ्चोऽयं यद्वपुस्ततं सदा सृजेत्।

तत् तथ्यं किन्तु यत् कर्म तदनादिमलं यथा ॥ ९२ ॥

तदस्तित्वाच्च मायीयो व्यापारः केन धार्यते ।

बीजमादिशरीराणामनाद्या कर्मसन्ततिः ।

शेषस्यादिशरीराणां कर्मणो ह्यार्जकानि वै ॥ ९३ ॥

जयद्रथ उवाच ।

क्रियेतेति कर्मशब्दः कर्तुः करणस्य चापि सिद्धोऽसौ ।

कर्तृकरणक्रियाभिहीनैः तद् दृश्यते कर्म ॥ ९४ ॥

अकृतकाभिरूपणाद्यं नो कृतकं कुत्रचित् तत् स्यात् ।

कर्मभिः संज्ञितोऽनाद्यकृतकनाह्यसंभाव्या ः ॥ ९५ ॥

श्रीभैरव उवाच ।

कर्तृशक्तेरनादित्वाद् भवस्य च महामते ॥ ९६ ॥

कर्मणोऽनादिभावोऽयं केन चित्तं निवार्यते ।

चिकीर्षुःसर्वभूतानामनुग्रहविभूतयः ॥ ९७ ॥

स एवानुग्रहोपायमसृजत् परमेश्वरः ।

न स एव विजानाति क्रियामम्बरशुद्धये ॥ ९८ ॥

तद्युक्तवस्तुदानञ्च स एव हि करोति च ।

सर्वकर्तृत्वमर्थ्यात् कर्तुस्तन्न विरुद्ध्यते ॥ ९९ ॥

मूलदेहात्मकं कर्म कर्तव्यं हेतुलक्षणम् ।

माया स्वभावतो व्यक्तेः कर्तृत्वबलशालिनी ॥ १०० ॥

मूर्च्छैव मूर्च्छाजनिका नासौ चैतन्यसङ्गता ः।

अतो मायात्मिका शुद्धिर्न स्याद् गुणविभेदतः॥ १०१॥

जयद्रथ उवाच।

वस्तून्येकेन किं नाथ गुणयुक्तिः प्रसज्यते।

येनासत्कल्पनाशुद्धेरेषा मायातिरेकता ॥ १०२॥

दाहप्रकाशको वह्निः शशी शीतप्रकाशकः।

दीपार्चिरञ्जनाधारा प्रख्याकृद् वा न किं प्रभो॥ १०३॥

स्वभावान्मोहनी माया कार्या भावप्रकाशिका ।

चितश्चिच्चक्तिसंश्लिष्टा एतद्धिकिमयुक्तिकम्॥ १०४॥

श्रीभैरव उवाच।

कोष्ठाभ्यन्तरदेशेषु यत् सूतेषु रजो नृणाम्।

नानिमित्ता प्रवृत्त्यत्र कस्यचित् प्रविभाव्यते॥ १०५॥

माया तावत् स्वभावेन नवचैतन्यमाश्रिता ।

स्वभावान्नाश्रयाल्लक्ष्यात् प्रवृत्तिनिमित्तका ः॥ १०६॥

तनुरियं परिग्रहवर्त्तिनी विभुभये जगतां बलरोधनी।

पतिपतेः समवायसमीहिताः प्रविसृजन्तनवो हि वपुष्मताम्॥ १०७॥

पञ्चाशद्वर्णरूपामलमणिविभवा वन्धतो भूतिरेषा।

नानाचक्राम्बुजानां सुविमलसरसो वर्णिता विस्तरेण॥ १०८॥

नेतुर्विश्वस्य दुर्गा प्रगुणगुणवतस्तेजसां बिन्दुमूर्त्तेः

योऽस्याधस्तान्नियोगी स हि खलु विशदे ं वर्णनगुह्यकेशः ॥ १०९॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के कालसङ्कर्षण्यां चतुर्थः पटलः॥ ४॥

पञ्चमः पटलः॥

श्रीभैरव उवाच ।

अथ धातुरधःकृत्य कृत्यैर्वीर्यमलोऽमलः ।

क्रीडतो निपपाताधः प्रगुणः स सदाशिवः॥ १॥

स्वच्चस्य बिन्दोः प्रथमा त्रुटिरुच्चूननात्मिका ः।

सेन्धनादिन्धिका नाम कलामूर्त्तिकरी विभो॥ २॥

अप्रौडगुणसंप्राप्ता दीप्तत्वाद् दीपिका मता।

कलातनोः स्वदेशस्य दृग्रूपायाः प्रसाधिका ः॥ ३॥

षट्कक्ष्यात् पर्वके केलिरुचितस्थानसंश्रयात्।

रोचिकाभिरुपस्पर्शमणिवृन्दविधायिनी ॥ ४॥

सुषुम्णा सूक्ष्मसंस्थानमोचना मोचता मता ।

मुक्ताखिलपथा वाथ मोचिका चात्ममौलिका॥ ५॥

सा तुरीया मत्वेशस्य ततस्तुर्यपदानुगा।

निरालयखमार्गेण ऊर्ध्वमूर्ध्वगमाच्चनैः॥ ६॥

मनोन्मनी स देशस्य मूर्त्तिर्वै सोर्ध्वगामिनी।

पञ्चैता देवदेवस्य शुद्धाक्षाध्यासिताः प्रभो॥ ७॥

चैतन्यशक्तिस्तनवः परिग्रहघनात्मिकाः ।

एताभिर्मूर्त्तिभिर्वीरः पञ्चाशद्वीरयोनिभिः ॥ ८ ॥

अपचारिकदेहेन मन्त्रात्मेति प्रगीयते ।

श्रीकण्ठोऽनन्तसूक्ष्मौ त्रिमूर्त्तिश्च वरेश्वरः ॥ ९ ॥

अर्घीशो भारभूतिश्च तिथीशःस्थाणुरेव च ।

हरो झंटी रव झण्ठी समाख्यातो भौतिकश्च महाबलः ॥ १० ॥

सद्योजातस्त्रिपादश्च हा क्रूरस्मेरसंज्ञकः ।

आदिनिष्ठान्तिका ह्येषो वाच्यवाचकयोगतः ॥ ११ ॥

शिरोमन्त्रविधातारी मन्त्रे सद्योर्ध्वगामिनी ।

संवर्तो लकुलीशश्च भृगुश्चेता बकस्तथा ॥ १२ ॥

खड्गी पिनाकी भुजगो वालिः कालो दुरुण्डकः ।

चगलाण्डः  शिखी चैव लोहितो हुटपीनकौ ॥ १३ ॥

त्रिदण्डद्या षढ्युमाकान्तो  ह्यर्द्धनारीशदारुकौ ।

लाङ्गलीशश्च सोमेशः शल्मजेशावशानकैः ॥ १४ ॥

कादिमान्ताभिधानानामभिधेयैर्महेश्वरैः ।

मोचिकाख्या स्थिता शक्तिर्वक्तृवृन्दविधायिनीं ॥ १५ ॥

चतुर्मुखैकनेत्रौ च तथा कूर्मैकरुद्रकौ  ।

परयोर्लवयोश्चैव वाच्यवाचकरूपयोः  ॥ १६ ॥

रोचिकावृन्दमेतद्धि हार्दमन्त्रशरीरिणः ।

अंशगुह्यान्तरङ्गानां निष्पत्तिजनकं शुभम् ॥ १७ ॥

शिवोत्तमश्च पञ्चैते चण्डक्रोधवशादयः ।

दीपिकाबलमेतद्धि पत्युर्द्गुह्यविधायकम् ॥ १८ ॥

तस्यां हि लक्षणा देवी वामदेवकथात्मिका ।

इन्धिकानन्ततेजोभिरन्विताशेषनायका ः॥ १९ ॥

एतज्ज्ञानवपुः प्रोक्तं ज्ञानरत्नमहाम्वुधे ः।

नान्तमूर्तिरधोनन्तचक्रानीकप्रवर्तिनः ॥ २० ॥

श्रीदेव्युवाच ।

ज्ञानरत्नाकरो वीरो न परो भैरवो विभुः ।

आकरं कारणं लोके कार्यजातस्य भाव्यते ॥ २१ ॥

न कार्यं कुत्रचिद् दृष्टं स्वस्वरूपविधानकृत् ।

यत् तज्ज्ञानं त्वया प्रोक्तं स एव हि सदाशिवः ॥ २२ ॥

ज्ञानं ज्ञानक्रियाकारियुक्तिरत्रातिदुर्लभा ।

श्रीभैरव उवाच ।

षोढा सम्बन्धतो ज्ञानं विभिन्नं यस्य चेतसि ॥ २३ ॥

न तस्य दुर्बला युक्तिर्भाक्ता याज्ञानदेहजा ।

वाच्यवाचकसम्वन्धः समवायः स योगगः ॥ २४ ॥

कार्यकारणरूपश्च साध्यसाधकलक्षणः ।

बोध्यबोधकधर्मश्च सकलार्थावभासकः ॥ २५ ॥

अभिधेयोऽभिधानात्मा वाच्यवाचकलक्षणः ।

शब्दार्थयोस्तु विज्ञेयः सम्बन्धः समवायवान् ॥ २६ ॥

सुप्रसिद्धो जगत्यस्मिन् ऊष्मा हुतभुजो यथा ।

वपुरासुरवैकल्यचिन्तादिप्रौढताम्बराः ॥ २७ ॥

अवबोधश्च संयोगसम्बन्धोऽयं दृश स्मृतः ।

आदिक्षांतार्णसंयोगवियोगाद्यर्थयोगतः ॥ २८ ॥

शास्त्रजालोद्भवे द्वे तु कार्यसम्बन्धदर्शनम् ।

साध्वीनां ज्ञेयरूपाणां हेयोपादेयतः ॥ २९ ॥

साधनाज्ञानसम्बन्धः साध्यसाधनलक्षणः ।

गुरुशिष्यप्रतिष्ठानां सम्बंन्धो बोध्यबोधकः ॥ ३० ॥

गुरुः सदाशिवः शिष्यः स्वच्चन्दाद् यत्र निश्चिताः ।

ज्ञानस्याराधकास्ते तु स वै ज्ञानप्रकाशकः ॥ ३१ ॥

तत्वज्ञानं पुरा प्रोक्तं शतार्द्धलिपिमुद्धृतम् ।

नादात्मकं समुद्दिष्टं शब्दार्थकृतनिश्चयम् ॥ ३२ ॥

शब्दकार्योत्थचैतन्यं स वै देवः सदाशिवः ।

असृजज्ज्ञानसन्तानमनन्तं स्वावबोधगम् ॥ ३३ ॥

यथा कश्चिन्नरोऽध्यात्मसंवेद्यत्वात् तु लक्षणम् ।

स्वान्तर्मुखं मुखं वापि बुद्ध्या बाह्ये प्रकाशयेत् ॥ ३४ ॥

स ईर्ष्यालुर्यथालोके स्वस्वभावान्तरङ्गगम् ।

शुद्धान्ताद्यंतगुप्तत्वात् प्रकाशपति निश्चितम् ॥ ३५ ॥

तथा ज्ञानशरीरोऽसौ प्रकाशयति निश्चित ।

तथा ज्ञानशरीरोऽसौ ज्ञानानि परमेश्वर ॥ ३६ ॥

शिष्याः शय्यानुरूपाणि नानाचाराणि दर्शयेत् ।

विस्फुरत्स्वप्रभारश्मिमञ्जरीपुञ्जपिञ्जरः ॥ ३७ ॥

स्वतेजः स्वल्पसंस्थानकृतास्पदमहोदयः ।

चूडामणिशिखाजालभाभिर्भासितदिङ्मुखः ॥ ३८ ॥

रौद्री ज्येष्ठा तथा वामा शृङ्गा जयविभूषितम् ।

इच्चादण्डत्रिशूलोग्रधारकः परमेश्वरः ॥ ३९ ॥

श्रुतिपत्राम्बुजावस्थो ज्ञानशक्तिक्रियान्वितः ।

विश्वकर्मोदया शान्तः पत्रेषु युगलान्वितः ॥ ४० ॥

मोचिकादिमहावीरैर्भोक्ताभोग्यस्वरूपकैः ।

शतमन्योः ककुब्जाले मङ्गलाम्बुजमालितः ॥ ४१ ॥

बभौ नभो युग्मयुतश्चैषः प्रत्येकं कमलाश्रयः ।

स्वच्चन्दोन्मत्तक्रोधाख्यश्चण्डश्चोदितविग्रहः ॥ ४२ ॥

संहारश्च कपालीशो बलवानकभैरवः ।

कर्णिकासु स्थिता ह्येते विशिखेन विवस्वतः ॥ ४३ ॥

शिपिविष्टान्तकायावद्विष्णोः पन्निलनन्दनः ।

महावरा समाख्याता ज्वाला वक्रांशुमालिनी ॥ ४४ ॥

नारायणी च कन्दर्पा कंपनी मृगलाञ्चना ।

सुचिरोदरा महाभोज नाभिस्थानसमाश्रया ॥ ४५ ॥

स्वच्चन्दादिप्रियाः देव्याः क्रमशः संव्यवस्थिताः ।

प्रोच्यन्ते भोजमालायां युग्मानिदलगानि तु ॥ ४६ ॥

कङ्कालभैरवोच्चिन्नस्तथा तिलकभैरवः ।

हुङ्कारभैरवः श्रीमान् फट्कारश्च कपालधृक् ॥ ४७ ॥

संवर्तः सितनामा च तथा चासितभैरवः ।

प्रथमः प्रथमात्रश्च क्रोधो हयशिरां परः ॥ ४८ ॥

कपिलः काल करालोन्यो विकरालो च भैरवः ।

वज्रभैरवमन्थानमहामन्थानभैरवाः ॥ ४९ ॥

किङ्किणी जालसिंहश्च सिंहकेसरभैरवः ।

सिंहकेसरदा संज्ञा एकपादश्च भैरवः ॥ ५० ॥

भृकुटीजटाप्रचण्डाह्वचण्डोल्कासु मनोहराः ।

कान्तिः कमलभीसाह्वास्तथा विमलभैरवः ॥ ५१ ॥

खचितश्चत्रकान्तिश्च भैरवो दृष्टिनिर्मलः ।

भैरवः शेखरो नाम तथा शिखरशेखरः ॥ ५२ ॥

शशाङ्कशेखरः कूटभैरवः कूटो सुशिरोऽपरः ।

आह्लादभैरवः क्रूरः शशिकान्तिर्यथेत्थितः यथेष्ठितः ॥ ५३ ॥

विरूपाक्षो यमाक्षश्च दंष्ट्राकराल भैरवः ।

महाकपालसोच्चुष्मो महाकालश्च भैरवः ॥ ५४ ॥

झङ्कारश्चापि फट्कारो महाफत्कार भैरवः ।

अनन्तोऽनन्तविजय शिखाभैरव एव च ॥ ५५ ॥

वीणाशिखा रु शिखो भैरव एव च ।

वीणाशिखोऽथ लाङ्गलीश भैरवः परमेश्वरः ॥ ५६ ॥

मार्तण्डभैरवोऽघोरस्तथा चण्डोग्रभैरवः ।

एते वीराः समाख्याताः कलासंख्यानमाश्रिताः ॥ ५७ ॥

पूर्वात्पूर्वदला ह्येते मूर्तिवृन्दविभागगाः ।

रमन्त्यम्बुजमालायां सपत्नीका महाबलाः ॥ ५८ ॥

कंकालिनी महोच्चुष्मा तिलका हुंकारिणी परा ।

हुंकारिणी वषट्कारा वौषट्कारा नमस्क्रिया ः ॥ ५९ ॥

स्वाहा स्वधा मृतानन्दा मोहनी स्तम्भनीन्द्राणी ।

दहनी पचनी चैव भञ्जनी बन्धनोदरी ॥ ६० ॥

भ्रामणी मुद्रणी चैव क्रमणी क्षोभणी परा ।

विद्रावणी च वमनी त्रासनी शोषणी तथा ॥ ६१ ॥

मृतसञ्जीवनी चाथ ग्रसनी ह्रासनी तथा ।

मारणी द्वेषणी मथनी कर्षणी क्रोधनी तथा ॥ ६२ ॥

वेताली मालिनी माला लोलिहाना तु मालिनी ।

करङ्किणी च चाण्डाली कर्णामोटी विलासिनी ॥ ६३ ॥

कडेवरा करालाक्षी श्रीघोणा घर्घरारवा ।

घंघोरा गोमुखी गोप्त्री शिखण्डी पञ्चशेखरी ॥ ६४ ॥

आह्लादिनी द्युतिः कान्तिर्रिद्धि वृद्धिरथापरा ।

शान्तिःपुष्टिः सुतुष्टिश्च प्रसन्ना मृतमालिनी ॥ ६५ ॥

एताः सदाशिवे पीठे ह्यष्टाष्टकमिताम्बिकाः ।

अष्टाष्टकगते शुभ्रे रमन्त्यक्लिष्टसम्पदः ॥ ६६ ॥

सर्वज्ञानधरा देव्यो ज्ञानमूर्त्यनुगाः सदा ।

चक्राणां स्वांशसंस्थानामधेकार प्रदायिकाः ॥ ६७ ॥

कालसंकर्षणी देहनिर्गतानन्तलक्षणाः ।

ततोऽधः स्वबलालातज्वालाभाभिः प्रभास्वरम् ॥ ६८ ॥

विष्णुद्वादशकं वाक्यं शक्तिपर्यङ्कमध्यगम् ।

विष्णोरन्तर्गतं कौशिक्यां कौशिकस्य च ॥ ६९ ॥

श्रीवत्सः श्रीनिवासश्च श्रीगर्भो विष्टरश्रवाः ।

शौरी मधुलिहा भद्रा सज्जकेशी ह्यधोक्षजः ॥ ७० ॥

मेधाश्चेति महावीर्याः स्वशक्तिवलिशालिनः ।

सदाशिवार्पितात्मानो ज्ञानं पृच्चन्ति शाङ्करम् ॥ ७१ ॥

शुद्धबुद्धस्वभावस्तु शुद्धानामेव योगिनाम् ।

रुद्रोङ्कारस्ततोऽधस्ताद् विंशद्भिर्भुवनैर्वृतः ॥ ७२ ॥

महेश्वराभिलाषी च ज्ञानी ज्ञानधरोंऽशुमान् ।

चन्द्रापीडः सुरापीडस्तारापीडोऽमलेश्वरः ख महेश्वरः ॥ ७३ ॥

सुभीषणो विशालाक्षः कंदर्पः शशिभूषणः ।

पिङ्गकोटीरसामन्तो महासामन्त एव च ॥ ७४ ॥

नागो नागपतिश्चैव सुतारो पवनस्तथा ।

वाचस्पतेः समारभ्य ख सभारभ्य वीरमार्गेण संस्थिताः ॥ ७५ ॥

स्वनामपूर्वाः सर्वे ते रुद्रोङ्कारपरिग्रहाः ।

अमृतामृत ख देवस्य दिव्याज्ञानप्रकाशकः ॥ ७६ ॥

नादरश्मिविशुद्धाक्ष समध्यासितविग्रहः ।

आश्रयश्चेह सिद्धानां तद्धाम चरुभोजिनाम् ॥ ७७ ॥

अमृतामृत संस्थानममानुपरिनिर्मलम् ।

अमृतामृतदेवाय चायाभाभिः प्रभासिनम् ॥ ७८ ॥

प्रमोदामृतगंभीरा जीवानन्दसुनंदना ।

अमृतानन्दसुरानन्दवीजयानन्दमन्थराः ॥ ७९ ॥

सुधानन्दश्रियानन्दमङ्गलानन्दमङ्गलैः ।

उभः सर्वककुब्जाले स्वप्रभामण्डलोज्ज्वले ॥ ८० ॥

नित्यानित्यनिकायस्था शिवानां पत्युरिच्चया ।

शुद्धविद्याविधातार एते वीराः सुरद्विषः ॥ ८१ ॥

उक्तसीमान्तरे स्थानं स्फुरत्किरणसम्पदम् ।

नित्यानित्येऽथ देवस्य नित्यस्य च महोदयम् ॥ ८२ ॥

अनित्यस्य च देहस्य योगनिद्रालुकस्य च ।
नीलग्रीवाम्बुजान्तस्य चित्रग्रीव सुमेधसः ॥ ८३ ॥
विघ्नभैरवदेहस्य ह्येते दृग्गुणयोजकाः ।
तेजोनिधिविशालांशुक्रियात्यन्तसमीरिताः ॥ ८४ ॥
अमीषामन्तरे वासो विघ्नभैरवसंयुताः ।
विघ्नेन्दुचक्रवातानां स्वतेजोंऽशविसारणाम् ॥ ८५ ॥
निर्विघ्नो ध्वस्तविघ्नश्च व विघ्न च विघ्नहा विघ्नसूदनः ।
निर्विघ्नज्ञानदं ह्येतद् विघ्नभैरवपञ्चकम् ॥ ८६ ॥
शिवपञ्चकमेतद्धि स्वबोधामनिवासिने ।
प्रभावः समयःक्षुद्रो विमलश्च शिवस्तथा ॥ ८७ ॥
शिवपञ्चकमेतद्धि शुद्धतारकधारकम् ।
स्वबोधविमलादीनां बोधरत्नविशोधकम् ॥ ८८ ॥
विमलः प्रचेता गहनो मन्दिरो विष्णुरेव च ।
प्रलम्बश्च प्रमोदश्च प्रीतिश्चाभिरतिस्तथा ॥ ८९ ॥
एते हि गुह्यकेशेचाकुलत्रयसमर्थकाः ।
तेषां यच्च यदस्थायि तत् स्ववीर्यप्रकाशकम् ॥ ९० ॥
संवर्त भैरवः कालः तथा कालानलो परः ।
अघोरो घोररूपश्च ज्ञेयो घोरतरोऽपि च ॥ ९१ ॥
अघोरश्चक्रवर्तीनामघोराणां प्रवर्तकः ।

घोरोऽपि घोररूपाणामितरेष्टितरो मतः ॥ ९२ ॥

भैरवन्तुर्यमेतद्धि महेशात्रयबोधकः ।

ईशानश्च महेशानो वीरेशानस्तथा परः ॥ ९३ ॥

इच्चानिरञ्जनो नाम स्थानद्वयमथान्तरे ।

इच्चाशाली विशालाख्यः शेखरो रतिशेखरः ॥ ९४ ॥

चन्द्रोष्णीशौ देवेशो इच्चावरणवासिनः ।

निरञ्जनो निरालम्बो निरहो निरहङ्कृतः ॥ ९५ ॥

निर्ममश्च महावीराः पञ्चामी ज्ञानदेहिनः ।

महाप्रणवसायुज्यशिववृन्दप्रबोधकाः ॥ ९६ ॥

क्रोधो विभुः सुखं दुःखं सुप्रणीतः प्रणीतकः ।

जन्ममृत्यू जरोनड्वा दुरालोको दुराननः ॥ ९७ ॥

महातेजोऽथ मुण्डी च दिण्डिवीर्यविशारदः ।

ब्रह्मोदर्को ध्रुवो हंसः पिङ्गलेकाक्षमानसः ॥ ९८ ॥

प्रतोदो ब्रह्मरुद्रश्च महाप्रणवपार्श्वतः ।

संस्थिता वीरमार्तण्डा ः वीरज्ञानावतारकाः ॥ ९९ ॥

ततोऽधोनिधनो ज्ञानी तेजोंऽश च क्रियागतः ।

चन्द्रप्रभः सुनेमिश्च सुरामः सुमुखः स्वकः ॥ १०० ॥

निधनेशाधिकारस्थाः सर्वे च प्रभविष्णवः ।

यच्चन्ति शाङ्करं ज्ञानं क्रियाश्रयनिवासिनाम् ॥ १०१ ॥

पटरुद्धोऽम्बुराशिश्च नीलकण्ठोऽनलाननः ।

कदम्बः कङ्कवेतालस्तेजीशस्याप्यमी शिवाः ॥ १०२ ॥

प्रस्फुरत्स्वप्रभापुञ्जपिञ्जराः परिचारकाः ।

एतद्धि भैरवानीकं स्थूलसूक्ष्मगतिस्थितेः ॥ १०३ ॥

कार्यकारणयोस्तत्वे नादाख्ये प्रोदितं क्रमात् ।

भैरवाष्टशिखिज्वालादग्धमायेन्धना नराः ॥ १०४ ॥

रेमिरे यत्र सम्भोगैरिच्चाधर्मविधायिभिः ।

यत्र नातिशयैर्भोगैः मुक्ता ह्येकगुरुक्रमात् ॥ १०५ ॥

न कस्यचिद् बलाधिक्यं समानगुणतोऽपि च ।

देहाः प्रारव्धकर्माणो येषां खेचरतां गताः ॥ १०६ ॥

ते शक्तौ भुक्तसंभोगा लीयन्ते ते परे पदे ।

तत्र ते स्थायिनः सर्वे देदीप्यन्तः स्वतेजसा ॥ १०७ ॥

मण्डले श्रेयिनो भान्ति विश्वकर्मकरा इव ।

यदा चोपरतानन्तव्यापारः परमेश्वरः ॥ १०८ ॥

पररूपं समालम्ब्य स्ववीर्यमुपसंहरेत् ।

तदन्ते शेरते व्योम्नि कुटिलब्रह्मजे स्थिताः ॥ १०९ ॥

तदिच्चोच्चूनतायाश्च मुहुर्भवति स्वेच्चया ।

ततो बुभुक्षवो भूयो भोगाङ्कृतनिश्चयाः ॥ ११० ॥

स्युः स्वस्थानगता ख गताः शेषा जग्मुराशु परिश्रियम् ।

शान्त्यतीतगुणकारणात्मकं शान्तिरूपकृतकार्यनिश्चयम् ॥ १११ ॥

भोक्तृभोग्यविभवप्रतिष्ठितं शब्दतत्वमिदमीशमुक्तितः ।

तुम्बुप्रभोजगतीमधिकृत्य  विश्वं शान्त्यादिभिः ।

स्वतनुभित्र्यभयात्मिकाभिः ।

या संस्थितातिबलभूतिविलासः धात्री सा वर्ण्यते सुमुखि सम्प्रति

तुम्बुरुश्रीः ॥ ११२ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के कालसंकर्षण्याः पञ्चमः पटलः ॥ ५ ॥

षष्ठः पटलः ।

श्रीभैरव उवाच ।

अथाति नित्यो व्यक्तोऽसावागच्चन् यो निरामयः ।

मृदापूरणशैथिल्यात् मन्थरगतिः स्थितः ॥ १ ॥

महाव्यालशिरोरत्नशिखारूपभगात् प्रभुः ।

तत् तस्याः सकलं रूपं सकलं च कलाकृतम् ॥ २ ॥

शान्त्यातीतां च शान्तिश्च  विद्या देहे प्रतिष्ठिता ।

निर्वृत्तिकस्य हृद्गुह्यपादयोः संव्यवस्थिताः ॥ ३ ॥

तुम्बुरुः शान्त्यतीतश्च चित्स्वभावस्तु कारणम् ।

शान्त्यादिभिर्जयाद्याभिः कार्यमस्य घनं शुचिम् ॥ ४ ॥

स्वप्रभामण्डलाटोपभासिताशेषविग्रहम् ।

सौम्यधामाश्रितानन्तमन्त्रनिर्झरसानुमान् ॥ ५ ॥

नानाविद्यामणिव्रातरत्नाशिरगाधवान् ।

मुद्रा हेमशलाकानां शक्रक्रीडाचलः प्रभुः ॥ ६ ॥

नानादामसदागन्धि ः स्रक्कल्पाङ्घ्रितनुर्विभुः ।

शक्तिपीठकडिमुद्रां चण्डदोर्दण्डमण्डलः ॥ ७ ॥

विद्यास्यौ व ख विद्यास्यो मन्त्रदृक्कौ च पादजङ्घोरुमण्डलौ ।

पाशाङ्कुशधरः श्रीमांस्त्रिशूलवरदोद्यतः ॥ ८ ॥

चतुर्मुखः सितारक्तपीतकृष्णहरिक्रमात् ।

विचित्रमण्डिसन्नद्ध मुकुटेन विभासिना ॥ ९ ॥

सुमेरुरिव यो भाति ज्योतिष्कोज्ज्वलसानुना ।

प्रोत्पुल्लानयनांभोज स्वपक्षभ्रमराकुलम् ॥ १० ॥

विभ्रन् मुखशिरोवृन्दं पश्य शोभां मनोहराम् ।

वक्रकुण्डलधारांशु ज्योतिपिञ्जरिताननाः ॥ ११ ॥

प्रस्फुरद्दशनोद्भूतमयूखैश्चाचिरोपमैः ।

ग्रीवाकल्पमहारत्नदीप्तदीपोत्सवप्रियः ॥ १२ ॥

सनातनगुणा यस्य देहमर्त्यमले नघे । ॥

पुष्परागमहारत्नहारधाराकरङ्कितः ॥ १३ ॥

श्रियं प्रवालशैलेयी मावहद्द्युतिनिर्मलाम् ।

स्फुरदङ्गदकेयूररत्नदीपमयूखिनः ॥ १४ ॥

महाव्यालसमा यस्य दोष्णो भ्राजन्ति कर्कशाः ।

पद्मराग महानीलपुष्परागविचित्रया ॥ १५ ॥

काव्यं राजति सर्पेन्द्र व्योडञ्च इव मन्दरः ।

स्पृशंत्युरू सुमुखराः किङ्किण्यो यस्य भास्कराः ॥ १६ ॥

वृन्तानि भूषितस्यैव सुशुभ्रा व्योमदन्तिनः ।

काश्मीराम्बरसच्चन्नं नितम्बं यस्य विस्तृतम् ॥ १७ ॥

सरागमेघस्थगितसन्ध्यास्यमिव राजते ।

मकाराननमञ्जीरहंसयुग्मरवाकुलम् ॥ १८ ॥

पादाम्बुजरजो यस्य वीरमूर्जसुखप्रदम् ।

यस्य नेत्राञ्जनेनांन्तविसर्पणनिरोधनम् ॥ १९ ॥

उवाह कुटिलोग्रोग्रमङ्कुशं जगदंकुशम् ।

आलयं सर्वपाशानां मायेयानां वपुष्मताम् ॥ २० ॥

अधोर्ध्वे नागमापाशौघजन्यबन्धनहेतवे ।

स्थित्युत्पत्तिविनाशाय व्यूहमुख्यः समीरिणाम् ॥ २१ ॥

वामादित्रिशिखं शूलं यश्चोद्वहति लीलया ।पुंसां

वामबलाघ्रातचेतसामभिवाञ्चति ॥ २२ ॥

वरदानाय प्रोत्तानं व प्रोन्तानं योऽवहद्दक्षिणं करम् ।

इत्येष तुम्बुरुः ँ श्रीमांस्तत्त्वमीश्वरमाश्रितः ॥ २३ ॥

चतुर्दशमहापद्मशक्तिमण्डलमध्यगः ।

मन्त्रविद्यास्त्रधाम्नां च पीठतूर्यविमालितः ॥ २४ ॥

दूतीगणसमायुक्तः  किङ्करानुचरैर्युतः ।

संहारः प्रभवो वीरो झाङ्कारो घोषसंज्ञकः ॥ २५ ॥

उदर्कस्त्वत् स्वराजा च सुशिराः  सुशिरेश्वरः ।

भवः शर्वः प्रभावश्च तारको भिन्नतारकः ॥ २६ ॥

हंसो माहेश्वरः कालो महाकालानलोऽनिलः ।

तैजसो विरजो वीरो विजयश्च विजम्भिकः ॥ २७ ॥

लोहदण्डो विकारी च पापभक्षण एव व ख मेव च ।

दशात्मा च नवात्मा च एकात्मा द्वादशात्मकः ः॥ २८ ॥

पञ्चाक्षरस्त्रिवर्णश्च खखनिरवधीरकः ।

चन्द्रगर्भः सुरागर्भः श्रीगर्भोनरगर्भक ः॥ २९ ॥

क्लिन्नानन्दो महानन्द उच्चिष्टानन्द एव च ।

विजयानन्दो भवानन्द स्कन्दानन्दो महावलः ॥ ३० ॥

क्रियानन्दः सुरानन्दो ह्युन्मत्तानन्द एव च ।

कुसुमानन्दो मन्मथानन्दवित् पुरा ॥ ३१ ॥

एवमादिभिरन्यैश्च बिन्दुरूपैर्महावलैः ।

अनन्तं मानवं पीठं तुम्बुरोर्वारणं स्थितम् ॥ ३२ ॥

वेद्यं चापि महावीर्यं नानाभोगप्रसाधकम् ।

घोषावती सुघोषा च कलालापा मनोहरा ॥ ३३ ॥

वीणामणिजयादीनावीणाविद्यासुशान्तिकाः ।

जम्भनी मोहनी चैव स्तम्भनी ह्यन्धनी परा ॥ ३४ ॥

महाबला कालारात्री-------ं निरङ्कुशा ।

चेदनी भेद् सुरभिर्मृतसंजीवनीं धनीम् ॥ ३५ ॥

मायाबीजोत्तरा रम्या सौम्या सम्मोहनी स्मृता ।

भृगणी नीलपताका सुश्रिया सुरसुन्दरी ॥ ३६ ॥

संदोहा सङ्गता लीला वसुधारा सुमण्डला ।

मातङ्गिनी मदोन्मत्ता कौसुमा कुसुमावती ॥ ३७ ॥

किण्किराता किराता च चाण्डाली चण्डविक्रमा ।

महाविद्या मिताहारा श्चुन्द् तारा च शाबरी ॥ ३८ ॥

पण्याका पण्यमातङ्गी डोम्बि डोम्बिलका शिवा ।

फलाहारा सुराहारा रक्ताहारा नराशना ॥ ३९ ॥

कादम्बरी विशाला च कल्याणा करपूजिता ।

नितम्बमाली मदिरा कन्दर्पा भोगमालिनी ॥ ४० ॥

असिधारा सदाक्लिन्ना रतिक्लिन्ना सुधास्त्रवा ।

सर्वकल्याणहेतुश्च कामधेनुस्तनार्थगा ॥ ४१ ॥

कल्याणी कामधेनुश्च गुह्या गुह्येश्वरी प्रभा । चन्द्रप्रभा चत्रप्रभावामु

ण्डमालिनी ॥ ४२ ॥

करंका चिपिटानासा वलास्या रुणजन्मना ।

पिशङ्गी क्रमधान्या च कल्माषवदनोदरा ॥ ४३ ॥

एवमेता अनन्तास्तु विद्यापीठेति लालसा ।

विजृम्भन्ति महाविद्याः स्वाधिकारपरानुगाः ॥ ४४ ॥

विद्यैश्वर्यस्तथा चान्या योगक्रीडाविलासदा ।

स्वभक्तैर्भो व स्वभक्तभो रमन्त्यत्र शक्तिरिच्चाविधायिका ॥ ४५ ॥

अम्विका ब्रह्मवेताली भृगुली स्थाणुमत्यपि ।

रूपिणी च महाज्वाला मालिनी परमेश्वरी ॥ ४६ ॥

वेताली चैव गौरी च नन्दिनी विनता परा ।

अघोरा सुप्रिया रक्ता वामेशी च कपर्दिनी ॥ ४७ ॥

रत्नमाला च भुद्याङ्ग संख्या विद्याविनायिका ।

पूर्वपत्रे जया देवी दक्षिणे विजयेश्वरी ॥ ४८ ॥

वामपत्रेऽङ्गिता ज्ञेया शिबिकाङ्गे पराजिता ।

वीणाहस्ता महादेव्यो मातृ युक्ता महाबला ॥ ४९ ॥

आसां सायुज्यगाश्चात्र दूत्यो ह्युपलभन्ति हि

बला नीला खरा काला दुर्भगा सुभगा परा ॥ ५० ॥

ऊहनी च कराली च चर्मा च मदनोदया ।

अनङ्गकुसुमा चैव तथा चानङ्गमेखला ः ॥ ५१ ॥

पवनव्योमवेगा शम्भो शशिरेखा मदनातुरा ।

मन्मथा च मनोहारी विपुला विपुलेश्वरी ॥ ५२ ॥

चित्रलेखा च चित्राङ्गी चित्रग्रीवा विलासिनी।
इत्येवमप्रमाणीभिर्दूतीभिर्वहुरुपितः ॥ ५३॥
सुप्रभा मण्डलालातैः वीजभा कुकुभां तिमिरारिभिः ।
समाकीर्णमिदं तन्त्रं योगिनीभिश्च कोटिशः॥ ५४॥
समस्तपीठसन्तानास्ताश्चासंख्याता महाबलाः।
संस्थिताध्वनिविस्तीर्णे पत्युरिच्चाभिधायिकाः ॥ ५५॥
किङ्कर्याश्चात्र दूतीनां तत्र भावमुपागताः।
रमन्ति तु समुत्थानं देवतानां प्रसादतः॥ ५६॥
हालाहलोऽभ्रमातङ्गो करालो वडवामुखः।
केवलः पिङ्गकेशश्च वल्कलः केकरेक्षणः॥ ५७॥
कोलाहलो बिडालश्च हिडिम्वो विकृताननः।
क्रोधनो तुन्नतश्चैव कड्डनोऽथ गजाननः ॥ ५८॥
एते हि किङ्कराः प्रोक्ता युक्ताः स्वानुचरैः प्रिये।
जुषन्ति विपुलान् भोगानुपेयान् वामसाधितान्॥ ५९॥
पूर्णांशस्त्रिशिखाः कङ्को लम्बोष्ठो गुदलोचनः।
उरोमुखोऽङ्घ्रि जिह्वश्च गुदवक्रोऽलकाननः॥ ६०॥
नवशीर्षोष्ट्रशीर्षश्च विपाणिर्द्वादशभुजः।
कृष्णाकं विलकोद्धुणुकरिमेद्रः खरध्वजः॥ ६१॥
भगाननो भगाक्षिश्च सोपनासो घटोदरः।

हिडिम्बो नाडिजङ्घश्च चकः पारावतो हरिः ॥ ६२ ॥

एतेऽत्रानुचराः प्रोक्ता नानारूपा महाबलाः ।

क्रीडाविलासनिरता नीलरक्तार्जुनासिताः ॥ ६३ ॥

बभ्रुलो हामिलोनाभः  सर्वे ते तु सकिङ्कराः ।

पोषकानां गणश्चान्यो नानारूपोऽतिवीर्यवान् ॥ ६४ ॥

वर्ण्यते लेशतः सोऽपि व्यापृतत्वव्यवस्थितः ।

तृनुत्तमवपुः शूलं पर्यङ्काङ्कः स्वकच्चकः ॥ ६५ ॥

शृंखलासृणिदण्डश्च मुद्गरः पट्टिशोंऽबुजः ।

कुव्जोरागावतिवलोवरदानं कहारकौ ॥ ६६ ॥

वेणुकोटीकुटीधर्मत्रिरिषुवित् स्रुची ।

स्रुवः सन्देशकः पाणिर्भिन्दिपालः  कटेचरः ॥ ६७ ॥

विकरालं झषः कुम्भं सर्वराकर्षरङ्गलः ।

कङ्कापटी च भ्रुकुटिर्भ्रामणी क्रमणी फलम् ॥ ६८ ॥

विकराला कराला च लेलिहानानुभिर्विरा ।

मुसलोलूखलं चक्रं पलकुम्भं वितानकम् ॥ ६९ ॥

तोरणस्ताडिमुकुलकबन्धाच्चिन्नकन्धराः ।

हरो विदारणी रौद्रीश्यावा माला सुमङ्गला ॥ ७० ॥

करङ्किणी विलोलाक्षी वैजयन्ती मृगानना ।

हालाहला प्रसन्नास्या योगिलिङ्गानुक्षोभिणी ॥ ७१ ॥

वल्गिनी नृन्तनी हसनी रोदनी पदगायनी ।

कम्बुकच्चपबीभत्सा वर्षे दुर्मुकलात्मिका ॥ ७२ ॥

पञ्चशेखरिणी सुमना सुमर्ती च मनोहरा ।

सप्तध्वजा च गायत्री सावित्री हंसरीन्दिरा ॥ ७३ ॥

ग्रहणी मोक्षणी सूचि पिंचिका सुरमुष्टिका ।

षट्कण्टका सुषण्डिश्च बीजाख्या दोलसंज्ञका ः ॥ ७४ ॥

नन्दिनीविजयाज्ञानीरसवत्यः स्वरोदरा ।

पुष्पवृष्टिः पयोवृष्टिः रसवृष्टयव गूहनी ॥ ७५ ॥

अलाभारविपञ्चीत ख अलाभान- पटही डमरुद्रिका ।

कूर्मनादा महामुद्रा जटाभारकलापिका ॥ ७६ ॥

एकावली च मञ्जीरा काञ्चीतिलककुण्डला ।

दौर्दुरा त्रासनी शूर्पाच्चादनी विकृतानना ॥ ७७ ॥

शशकर्णी कालकर्णी पुण्डरीका शकुन्तलाः ।

दन्तुरावन्दुनीचैलातुलाकबरिकापराः ॥ ७८ ॥

धम्मिल्ला मुकुटाख्यां च प्रासादरथतोरणा ।

बीभत्सा चर्दिनी ताला ज्वालामुद्रा सुतार्णिनी ख सुवर्णिनी ॥ ७९ ॥

मनोरथामहाघोरासुस्थितासुमनोरथाः ।

एवमादिविचित्राभिर्मुद्राभिर्वपुषोज्ज्वलम् ॥ ८० ॥

क्रियापीठमिदं घोरं सालोक्यस्यापि तुम्बुरोः ।

वेद्यं सायुज्यकं ज्ञेयं सामिप्यसुरभिं प्रिये ॥ ८१ ॥

सर्वाः स्वरूपवपुषः सम्पूर्णावयवाः शुभाः ।

त्रिस्वरूपा महादेवि मुद्रापीठे त्विमा स्मृताः ॥ ८२ ॥

विलक्षणेऽवज्ञायन्ते स्वशिरोऽर्थैस्वरूपिणः ।

रक्षावत्यो महावीर्या मन्त्रविद्यार्जिते सदा ॥ ८३ ॥

विस्पुरजितवलालात चक्रज्वालाति भास्वरा ।

प्रतिभानान्धकारोग्रतनवो विश्वकर्मणः ॥ ८४ ॥

यन्त्रस्थं तत्र पीठं हि स्तोभनं सादनं महत् ।

अण्डवच्चिवसंख्यानमन्त्रोऽध्वनि चकाशते ॥ ८५ ॥

मन्दरं मेरुसंज्ञञ्च दिग्गतं सर्वकामदम् ।

मण्डलाभ्युदयं सिद्धकामाभ्युदयनामिनी ॥ ८६ ॥

अनन्त विजयं लिङ्गं त्रैलोक्यविजयं धनुः ।

योनित्र्यशीतिु षट्कर्णमष्टकर्णं कुशेशयम् ॥ ८७ ॥

ससक्तं विजयं भद्रं सर्वतो भद्र सुन्दरम् ।

ऐन्द्रांतरं गजास्यन्तु स्वस्तिकं नन्दिवर्धनम् ॥ ८८ ॥

नन्दिकावर्तनं किन्तु केयूरं हरलोचनम् ।

विद्याधररतं कान्तं चित्रं चित्रवितानकम् ॥ ८९ ॥

महोदयं सुवीथिं च दुर्गसंसक्तवीथिकम् ।

एकवीथिञ्च त्रिचतुष्पञ्चवीथिकम् ॥ ९० ॥

मनोदयं महारौद्रं सुचित्तं विजयं लवम् ।
सन्दोहविजयानन्दमुक्तादाममनोहरम् ॥ ९१ ॥
मणिदामेन्दुलेखन्तु शुक्लचामरमण्डलम् ।
क्षीरोदममृतोदञ्च सर्वकामालयं परम् ॥ ९२ ॥
धनश्रीशौर्यसौभग्यं कालालयपुराणि च ।
चतुःषडष्टद्विदशकलाव्यक्तारकालयम् ॥ ९३ ॥
विचित्रचक्रे ये द्वेऽन्ये विद्यामन्त्रोदयेऽपरे ।
घटतालु घटद्रव्यं भद्रप्रासादवक्रकम् ॥ ९४ ॥
श्रीपीठं श्रीवितानञ्च वीराभ्युदयमेखलम् ।
मण्डलाभ्युदयं चैव शिवनीडसुमालयम् ॥ ९५ ॥
शत्रुघ्नं शर्वरादित्यं तारकं चित्रतारकम् ।
मात्रानन्दं शिवानन्दं योगिन्यानन्दमेव च ॥ ९६ ॥
इत्येतच्चित्रविन्यासं मनःशोभाविलासगम् ।
तेध्यन्तेजो मयूरवोदयि स्वाधेद्धासितं श्रितम् ॥ ९७ ॥
आसनीश्वरवीर्येण व वीर्गेण यत्र वीरा अधोबलाः ।
विचित्रभोगवपुषः चित्रलीलाविलासिनः ॥ ९८ ॥
विद्येश्वरी मुखेन्दूत्थ भाभिर्व्योम्नि प्रविस्तृतैः ।
यत्र चन्द्रातपच्छाया नापास्यति कदाचन ॥ ९९ ॥
सन्दोहानेकनिस्पन्दवपुष्मन्वीरचेतसाम् ।

मण्डलान्तकासोच्चैर्यद्योमेद्धेन्दुमण्डलैः ॥ १०० ॥

विद्युद्विका च तेजांसि मन्त्रावेशितविग्रहा ः।

चक्राशिरेण वै केचित्संहारनिरताःस्त्रियः ॥ १०१ ॥

स्वसाध्यमन्त्रप्रतिमानुरूपकमवाप्यकेचिद्बलशालिनो नराः।

प्रियाभुजाश्लेषणगाढगूहितात् मदालसा श्लाध्यतमञ्च रेमिरे ॥ १०२ ॥

विकाशिनीलोत्पल पत्रचक्षुषी शशाङ्कविम्वोदयभाञ्जिकल्पना ।

मदालसत्कोमलबाहुमण्डला यन्त्रानुविद्धाहिमनाथयोगिनी ॥ १०३ ॥

स्फुरत्कलालापविलासकोमला विलासवत्यो ललितांगुलीहतैः।

विचित्रतन्त्रीविवृतां कलस्वनैः केषान्न चेतांसि मुमोह रुच्चकैः ॥

१०४ ॥

प्रतप्तसिद्धाङ्ग मयूखजालैस्तेषां स्फुरन्मूर्द्धमणीन्द्रचन्द्रकैः ।

विद्या कपोलेन्द्र रुवाव गूहिता यत्रेशलक्ष्मी परमामगात् कलाम् ॥

१०५ ॥

शिखण्डिनश्चन्द्रकलापशेखराश्चूडामणीनां वहुवर्णभास्वरैः।

केषांचिदाकल्पविचित्रितानना धृतेन्द्रचापा इव रेजिरे दिशः ॥ १०६ ॥

यत्र चन्द्ररविरत्नकृतानि पुष्परागवरनीलचितानि ।

पद्मरागमणिभित्तिगृहाणि व्योम्नि रेजुरिव शक्रधनूंषि ॥ १०७ ॥

वीरवक्त्र विपुलेषु सदस्सुअक्षगेन जगामचकासम।

प्रेयसां मुख विधौरवलीकाश्चक्षु रुपलचिरं सुविकल्पैः ॥ १०८ ॥

चित्रभित्तिवपुषा विराजितां योगभूतिविपुलामितसाराम्।

भूतिभावगुणभोगविलासां वक्तुमत्र न शशाक शिवोपि॥ १०९॥

किं पुनस्तु वयमल्पमनीषास्तन्मयूखवशभावितविद्याः।

ब्रूम एकलवमात्रमपीन्धं प्रोक्तमेतदजवास तथापि॥ ११०॥

तत्राधिकाराश्रयिणस्तु किञ्चित् किञ्चित् सुभोगाश्रयिणोऽनुबन्धाः ।

केचिच्च भोगा विकृतीर्जुषन्ति महेश्वरेच्चाङ्कितचित्तधर्माः ॥ १११॥

विवक्रजात्यामलजानि तेषां वपूंषि भास्वज्जनितानि वापि।

भोगान्धकारान्तमुपागतानि स्वयोनियन्त्राणि निलयं व्रजन्ति॥ ११२॥

विद्याधिपा भोगजमन्त्रवीरास्तेऽनन्तपूर्वाः स्थिररश्मिधर्माः।

शक्तीच्चया जृंभितवेतृभावा महीनुभावाधिकृतानुमार्गाः॥ ११३॥

ब्रह्मा वकाङ्गा प्रभविष्णु वेगारनन्त सूक्ष्मोत्तमन्त्रयं सनाम्नः।

एकक्षणैः केशविभक्तसंज्ञः श्रीकण्ठ देवशशिखण्डितात्मा॥ ११४॥

एतेसु विद्येश गतौकसं श्रीः नियोगभोगाहितचित्तधर्माः।

स्वगोचरालोचित भद्र धाम्नोभ्रातुः प्रसादाविरजं भजन्तिः ॥ ११५॥

गतेन्धहीने परमात्मयोगं स्थानं वरीयः समधीत्य शेषाः।

सूक्ष्मादयोऽन्येशमनस्थितेन सिद्धेन कृत्यं समश्नुवन्ति ॥ ११६॥

शक्तिः श्रियो निर्गतपद्ममालाः समन्ततो रेजुरनन्तलीलाः ।

शिखण्डिरत्नद्युतिभग्नभीमा हर्म्याधिपानां वपुषोज्ज्वलेन ॥ ११७॥

अस्यार्धभागे सुविशुद्धगोत्री वागेश्वरी ज्ञानविशुद्धबुद्धिः ।

विशुद्धविद्येति च नामभिर्यागीतोच्यते सा त्वधुना समासात्॥ ११८॥

ऋतुश्रियोपास्यमालाविशेषाद्विशोध्य चित्तं मलिनन्तु तद्वत्।

यावन्धनं वध्यति योजकं च प्रकाशते सौ व्यति शुद्धविद्यः॥ ११९॥

वीर्याञ्चिता भोगविलासररम्या वामादिकास्थाष्वनियोगवत्यौ ।

यवीयसिद्धास्तु गणें पदस्थं ं लीलालसैश्चक्षुभिरीक्षमाणाः॥ १२०॥

ज्येष्ठादिवामा रुतशक्तिरुग्रा कालीकराली ।

बस्य शक्तिर्वर्मनी परा केशान्तभूषा च मनोन्मनी च॥ १२१॥

ज्ञानात्मकः शक्तिगणोऽयमन्यः क्रियात्मकोऽसौ विभुबोधकर्ता ।

वाग्वाग्वती चैव सदाथ वामा ज्येष्ठाथ रौद्री द्विनखागणौयम् ॥ १२२॥

रौद्री सुगोत्री जननी सुनेत्री ज्वालाथ योक्री विकरा च वामा।

आह्लादनीया भावनी च संक्षोभिका स्तम्भकरी च भक्तिः॥ १२३॥

त्राणा सरौद्री दशषट्सुदीप्ता गभस्तयोन्यंगसुरूपकाया ः।

त्रिंशश्चतुर्योनिगतस्य वाच्या वामादिकारोद्धय वसानिका तु ॥ १२४॥

सन्तोषसूर्यस्य सरोजवृद्धा ः पयोधरिण्यो सितपद्मनेशः।

वपुर्विभूषारुण रक्ताङ्गान्संधीयमानाः विहरन्ति देव्यः॥ १२५॥

क्रीडाविलासैर्मदनानुरागा --मन्त्रगणैश्च सार्द्धम्।

क्रीडावतीनां वरगुह्यकानां न चात्र तत्वेऽस्ति वरं प्रमाणम्॥ १२६॥

संवित्तिरूह्या व रु संवत्तिरूह्या ह्युपलब्धिमूडानकांचितकानुभवो

विचेष्टा।

तारासु तारात्रयं --तारयन्ति प्रमोदिनी मोदमाना ॥ १२६ ॥

सदा प्रमोदा विमला सुरम्या षोढादशैतास्तु  विवेकविद्याः ।

शुद्धं विवेकं परयुक्तिभाजमाविश्य चित्तं जनयन्ति पुंसाम् ॥ १२७ ॥

रुद्राणवश्चाप्यकृताधिकाराः पिपासबोऽध्याससमग्र सौख्यम् ।

धातुर्मरीच्यर्गलया निरुद्धा नियोगिनो ह्यत्र शिवं व्रजन्ति ॥ १२८ ॥

उदितामलमार्गसन्ततिर्भुवनेशैः सहिताभिलाषिभिस्त्रिभिरीश्वर  ।

 नो चोरेच्त्त्रिभिरीश्वरमूर्त्तिभिर्युता विपरीताप्यधुनोच्यतेखिलाः ॥

१२९ ॥

इति भैरवस्त्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शति साहस्त्रे प्रथमषट्के कालसंकर्षिण्यां षष्ठः  पटलः ॥ ६ ॥

सप्तमः पटलः ।

श्रीभैरव उवाच ।

अथ पुंसां कलाजालं योगिनां कर्मणां  वधः ।

व्यापकव्यापिकानान्तु मायाव्यापकचोदनात् ॥ १ ॥

श्रीदेव्युवाच ।

सत्यं माया त्रिकं ह्येतद् व्यापकं यदि शङ्करः  ।

तदा तनुसमायोगोत्पत्तिः पुंसोः कथं भवेत् ॥ २ ॥

व्यापकत्वाच्च शम्वर्याः शुद्धज्ञानी न जातुचित् ।

भवेतां दंपती नैव तद्योगाद्धर्मनिर्मलम् ॥ ३ ॥

मायाधिकारिणः सर्वे ये प्रोक्तास्तत्वतुर्यगाः ।

वर्णितः शाश्वतो भोगो न च तेषां भविष्यति ॥ ४

प्रयत्स्येऽहं तवापीश तद्याप्तिर्दर्शनामृते ।

तन्मन्त्रं प्रापितं ह्येतदविरुद्धं कुरु स्वकम् ॥ ५ ॥

स्फुरद्रवणचन्द्रांशुर्भाभिभासित विग्रहम् ।

प्रहस्योवाच मौलीन्दुरश्मिरञ्जितधूर्जटिः ॥ ६ ॥

दारूपलान्तर्गतजीवदर्शनात् प्रयोजकस्यात्मनि सङ्गमस्थितिः ।

प्रकशते व्यापकता सदात्मनो विश्वे तु विश्वेऽनुभवोपलक्षिताः ॥ ७ ॥

व्यापकस्य वपुर्योगनिमित्तं प्रागुदाहृतम् ।

दुष्टधातुप्रबोधाय विषदं प्रतिपाद्यते ॥ ८ ॥

पुस्पञ्जन ख पुंस्पञ्जन विभोः सङ्गे योऽसौ सोऽनादिमात्मनः ।

तेनतत्तेजसोर्यद्वदेकत्रात्यन्तसंस्थया ॥ ९ ॥

मूर्चा प्रभावतो देहमाप्नोति विभुरप्यणुः

दृक्स्वभावाच्चिवत्वं च स्वभावस्त्वनयोरयम् ॥ १० ॥

धूमान्धकारकृद्यद्वत् प्रकाशोद्योतको विभुवि ।

तद्वन्मलशिवत्वे द्वे स्वस्वभावामहेश्वरि ॥ ११ ॥

निमित्तबीजसंयोगात् कारणानि वपुःकृते ।

नारकात्म्याग्रहैर्निवार्यन्ते केन देहिनाम् ॥ १२ ॥

विशेषसन्निधेर्वङ्केरयस्कांतेर्यथा प्रिये ।

तथार्णोर्विग्रहौ व ख तथाणोर्विग्रहो दृष्ट्वा तावन्मात्रौ च तौ नहि ॥

१३ ॥

न चापि तन्तुसंयोगाद्विभुत्वं तस्य दीयते ।

प्रासादहर्म्यभिर्व्योम न कदाचिद् विलुप्यते ॥ १४ ॥

व्यापको न कलाकायमसृजद्यदि स प्रभुः ।

तदा तु कर्मणोपान्तफलानां संभवः कुतः ॥ १५ ॥

दृक्क्रियादेहिनस्तस्य शक्तिदेहस्य शूलिनः ।

सर्वावस्थानदोषो न सर्वकर्तृत्वहेतुतः ॥ १६ ॥

चलहृच्चञ्चलस्थित्यात्रतगा सता तथा ।

भवते बलवीर्यं स्याद् व्यापाराद्या यशस्विनि ॥ १७ ॥

तद्वत् तद्व्यापकं बीजं समलोष्ठं तु निष्प्रभम् ।

जगत्कर्तुर्विशेषाय आशीविषमिवोरगैः ॥ १८ ॥

चक्षुर्विषानलोयद्वल्लोकेषु तलवासिषु ।

भुजङ्गेन कृताबाधस्तद्वन्मायामितेऽध्वनि ॥ १९ ॥

श्रीदेव्युवाच ।

अव्यापारन्तु शम्बर्याः शिपिविष्टेन देहिना ।

विद्याद्याः स्थानिनः सर्वे देहा मायात्मिका मताः ॥ २० ॥

श्रीभैरव उवाच ।

अथर्वणक्रियोपास्तैः पशुमन्त्रैस्तपस्विनाम् ।

पुराणैर्मन्त्रकृत्यानि न श्रुतान्यचलात्मजे ॥ २१ ॥

अनरण्यस्य नृपतेर्दर्शिता प्रेयसी मता ।

पूर्वरूपधरो मन्त्री रम्भाक्षेण तपस्विना ॥ २२ ॥

कपिलाक्षानला ज्वाला भस्मीभूतश्चलासिनाम् ।

सगराय वैजयन्मन्त्रो मन्त्रमूर्त्तिः प्रदर्शितः ॥ २३ ॥

वाल्मीकजनितैर्मन्त्रैः कुशः कुशमयः प्रिये ।

जानकीहृदयानन्दश्चिरञ्जीवी न किं श्रुतः ॥ २४ ॥

बीजरूपन्न कामोत्र तस्याभावान्न मोहनी ।

यन्न कर्ता च न चाप्यायुस्त्रिकमप्यानयत् स्थितम् ॥ २५ ॥

कालो रागहृतं प्राणः प्रयात्यभिमतः स्थितः ।

शम्बराधिष्ठितोऽनङ्गो देवदेवाधिभोगभुक् ॥ २६ ॥

प्रारब्धकर्मणा हीनं तैरेव हि कलादिभिः ।

निबद्धं धारयेत् कायं मन्त्रः पुरप्रवेशकः ॥ २७ ॥

मन्त्रव्यापारिणां बुद्धिः कार्यमायाति सूरिभिः ।

तेऽन्यथा भावकर्तारः सत्स्वसत्स्वपि सुन्दरि ॥ २८ ॥

बीजानुसङ्गतज्ञानं सङ्कोचमधिगच्चति ।

नास्तङ्गस्तिभिरैदृष्टः क्रोडीकृतः क्वचित् ॥ २९ ॥

पत्युरुत्सङ्गिनां तावत्शुद्धस्थानप्रभावतः ।

न वीर्यं दर्शयेद्योनिं ज्ञानिनामितरोऽपि नो ॥ ३० ॥

बीजोत्थवपुषो यास्तु योगिन्यश्चित्रविक्रमाः।

न तासां पाशवं ज्ञानं पाशसंयोगतोऽपि हि॥ ३१॥

हुतभोज्यान्तरस्थायिज्ञानं कासाञ्चिदद्भुतम्।

दैविकाभिस्तनुर्वीरा नानापीडाप्रपीडिताः ॥ ३२॥

यतो तो निजवीर्येण हेमकारनिरोधिका।

पतिर्ज्ञानस्य चैवेश सर्वस्यास्य परायणः॥ ३३॥

यथा व्युच्चिन्न सन्तानैर्वैलोच्चैर्मरुतो वशात्।

तथा कलादिका माला हेतुतो विग्रहे रणान् ॥ ३४॥

कालान्तरैकदेशस्थं धामरोधक्रियोद्गमम् ।

कुरु विद्याप्यविद्यायाः संस्था संस्था च कर्मसु॥ ३५॥

रागोरगप्रकामस्तु लिप्सिषुः शशिना सितः।

आशापाशोपभोगानां काङ्क्षया ह्यपक्षते॥ ३६॥

उच्चादिभिः कलाभिस्तु कालं वक्ष्यामि वर्पणा।

गर्भतालुतलस्थायि व्यवस्थानं न यत्यपि॥ ३७॥

प्रधानदेहिनो ह्येतदसाधारणतां गतम्।

तत्र षट्कं तु मायीयं साव्यक्तं सततोद्भवम् ॥ ३८॥

श्रीदेव्युवाच।

प्रदानपञ्जरं ब्रूहि नरसिंहावरोधकम्।

वत्सकालाच्च हर्म्याणि बीजं धान्यादितः प्रभो॥ ३९॥

श्रीभैरव उवाच ।

यत् तद् भयं उर्कभासि ख ऽकंभासि मीनमम्बुजजन्मनः ।

तस्याधोभागगो भाति पुरदृष्टान्धकारकाः ॥ ४० ॥

शेषाहिफणमाणिक्यं विश्वकर्मप्रसादतः ।

ततो मन्दरवुध्नाग्रघृष्टनिष्ठ्यूतवह्निना ॥ ४१ ॥

प्रदग्धपृथुपृष्ठस्य कूर्माक्षस्य  पुनर्महत् ।

अनन्तशक्तिचन्द्रांशुपीयुषोर्मिभिरुल्बणैः  ॥ ४२ ॥

आलिङ्गनक्रमादुत्त्येरप्रतापो  ः यथोत्सवम्  ।

भुवनं तस्य वीरस्य भात्यनन्तस्य स्वश्रिया ॥ ४३ ॥

अनन्तवनितावक्रपद्मखण्डसरः सदा ।

ततो हूहुकरुद्रस्य चूडामणिविवस्वतः  ॥ ४४ ॥

त्विषा प्रध्वस्ततिमिरं पुरं वीरगणाकुलम्  ।

वज्रोपलमहारत्नविनद्धमुकुटोल्लसत् ॥ ४५ ॥

चन्द्रिकापाण्डुरं धाम शेखरस्य विराजते ।

मौलीन्दुकरक्षरितसुधया पाण्डुरत्विषः ॥ ४६ ॥

मौलीन्दोर्नगरं रम्यं ततः सर्वगुणोदयम् ।

विश्वश्रीविश्वविस्पन्दच्चुर्दिताभ्राजते यथा ॥ ४७ ॥

सा विश्व मन्दिरमा  ततस्तूर्ध्वमनोपमा ।

सर्वमाधेयमगमज्जगद्यस्याः स्ववीर्यतः ॥ ४८ ॥

सा सर्वाधारभूर्लक्ष्मीर्लक्ष्मीवत् प्रविजृम्भते ।

जगतां संपदो दिव्या ना गुप्तस्तुल्यतां यतः ॥ ४९ ॥

जगतोपि पुरं संज्ञामाह जगत्पतिः ।

ततो धर्मे धुराध्यक्षविभवेन्दुमरीचिभिः ॥ ५० ॥

व्योमेव पत्तनं भाति ज्योत्स्नाचन्द्रातपे कृतम् ।

कन्दर्पदर्पहुतभुक्कणरेत प्रदीपितैः ॥ ५१ ॥

प्रज्वलद्भिः परं लीलां तेजस्तत्वं विलम्बते ।

पालयेज्जगतीं विश्वां गतामालयगोचरे ॥ ५२ ॥

यतो नः पालकाः सश्रयो रराज नगरेच्चया ।

ध्रुवाक्षाक्षोत्पलरुचा श्यामायितदिगन्तरम् ॥ ५३ ॥

पुरं रौप्यमिवाभाति निर्मलं चन्द्रबिम्बवत् ।

हर्म्यभूमिगिरीलानां पतिभावा इलापतिः ॥ ५४ ॥

तच्चायाच्चुरितं धाम राजते रवि बिम्बवत् ।

हरिगोपालमाणिक्यभासालिङ्गितमण्डलम् ॥ ५५ ॥

सन्ध्यास्थानमिवश्तां भ्राजते पद्ममालितम् ।

तस्योदग्रोरुधवलहर्म्यमालाविराजितम् ॥ ५६ ॥

व्योम्नीव मण्डले इन्दुः सुराध्यक्षं महत्पुरम् ।

महानीलाचितोत्तुङ्गभिन्न स्फुरितया रुचा ॥ ५७ ॥

कालिकेव पुरी भाति प्रमोदस्य तदूर्ध्वतः ।

स्फुरन्मरकतरुचा प्राकाराङ्गसमुत्थया ॥ ५८ ॥

प्राक्प्रावृत्तसुधालीलां सौभद्रा विदधौ पुरीम् ।

नीलकेशवपुच्चायाच्चुरिता खेटमन्दिरम् ॥ ५९ ॥

विष्टपं मरकतद्रावावुत्कीर्णमिव राजते ।

पिनद्धसित माणिक्यवैजयन्तीभिरुच्च्रितम् ॥ ६० ॥

चिन्मात्रं भुवनं भाति स्फुरितार्कैरिवाम्बरम् ।

स्वावस्थास्थायिबलतः शौर्यं श्रीरपरिव्यथः ॥ ६१ ॥

अधोऽधः शेषमार्गस्य सर्वाध्वगधराश्रयः ।

मौलिचन्द्रकलापांशुचन्द्रिकोर्मिसुधासिता ॥ ६२ ॥

कालस्य पद्मवलभी नगरी राजते ततः ।

पद्म रागमणिप्रोतचन्द्र हर्मोच्चमालिकैः -- ॥ ६३ ॥

गोरोचनाकृतास्येव लघुता भ्राजते पुरी ।

इन्द्रनीलमहाहारधारारम्यविगूहीता ख विगुहिता ॥ ६४ ॥

पुरी कथं न रुद्रस्य निवेशबहुला ततः ।

शतयोजनघनातोऽपि वितानाशीतिकोटिभिः ॥ ६५ ॥

हरखड्गाद् ऋत्तेभेद्या नाम्ना कृष्णशिला शिला ।

वीरवीर्या विभूत्यांशुभासाशेषदिशामलम् ॥ ६६ ॥

अमार्जनपुरस्तस्माद्रवेरिव सुमण्डलम् ।

चकाशे कल्पवैडूर्यरागरञ्जितमण्डलाः ॥ ६७ ॥

पातालाधिपतेर्लुप्तपातालश्रीरिव स्थितिः ।

वृषबाह्वर्गलारुद्धककुभाहारनिर्गमात् ॥ ६८ ॥

भूतिलक्ष्मी भृता तस्माद् वृषवीर्यविसारिणी ।

लसत्परिच्चदानन्तयोषितां मुखपङ्कजैः ॥ ६९ ॥

नयनाभिमुखैर्भाति दीर्घिकेव ततः पुरी ।

राजहंससमाकीर्णे विचित्रकमलालयम् ॥ ७० ॥

तस्मात् पुरःसरो भूद् यदुदयं हि यवीयसः ।

अध्वतालुगतानन्तपुरागाम्भीर्यहृद्यतः ॥ ७१ ॥

अतो गम्भीरनगरं गम्भीरविभवालयम् ।

हर्म्याण्डानि तमुद्वाहि स्थिरशक्तिकृतास्पदः ॥ ७२ ॥

पत्तनं धारकस्योर्द्धमपत्तनमिति स्थितम् ।

वीरवीर्यमहारज्जुप्रबद्धानि महेश्वरि ॥ ७३ ॥

एतत्पशुपुराण्यत्र निभृतानि शिवात्मनाम् ।

स्वचित्ताण्डादहिर्बुध्नो विलासललितानि तु ॥ ७४ ॥

लक्षोच्छ्रितानि सर्वाणि ललितावेश्मगानि च ।

ततो भेद्य शिलाव्याप्तं समन्तादण्डमद्भुतम् ॥ ७५ ॥

लक्षवत्कालशिखिनो देदीप्यन्तं विराजते ।

तस्यान्ते वज्रपाषाणा निबिडा भूधराःस्थिताः ॥ ७६ ॥

यत्र ते रेमिरे वीराः कृशाणोर्भासुरा भटाः ।

स्वकण्ठोमासेकं व रु -कन्तोष्ठसासेक पिबतानन्दचेतसः ॥ ७७ ॥

कटाहं कोटिनिबिडं सारसाः कोटियोजनाः।

ततो महापुरं रम्यं चित्र हर्म्यं ज्वलत्विषम् ॥ ७८ ॥

अघोरो घोररूपश्च भीमो भीषण निर्दयः।

दीर्घजिह्वः करालश्च विकरालो भयङ्करः॥ ७९ ॥

त्रासको लोकहर्ता च देहत्रासो दुरापहः ।

पद्मगर्भो महाकायः शोषणो रुधिराशनः॥ ८० ॥

धूर्गलश्चिपिटानासः कालो भुवनयोगहा।

विकृतो विकृतवेशश्च संवर्तकमहास्वनौ॥ ८१ ॥

उल्मुकश्च सटाक्षश्च गुडाकेशोऽग्निवामनः ।

मृगेन्द्रनखरोत्खाता व्याधाः समनिभास्वराः॥ ८२ ॥

व्योमवह्निमिता ह्येते कालाग्निपरितः स्थिताः।

सन्ततेषु विचित्रेषु भूर्यण्डे तत्वमाश्रितः ॥ ८३ ॥

आरम्भकाले नृपतेस्तदिच्चातोविधायिनः ।

अग्नियोषित् सुखफलाः कामकेतुविमर्दिताः॥ ८४ ॥

नवमोक्षोक्तकाद्येहामुत्तितीषुर्मनो भुवि।

तौ तू रथी महाभूतौ योगिनी मातृदूतिभिः॥ ८५ ॥

वपुष्मत्यो भ्रमन्तीव क्रमद्भिस्तत्परान्तरे।

नानाभुवनविन्यासं नगरं चातिलालसम्॥ ८६ ॥

नित्यभोगमहानन्दं व्यासमष्टायुतं मतम् ।

लक्षणं धूमकोटीनां दीप्तलोकसमाश्रयम् ॥ ८७ ॥

लिलिङ्ग प्रार्थितं धाम धामवत्यो भिषगुज्ज्वलाः ।

इन्द्रनीलमहानीलपद्मरागरुचोऽजराः ॥ ८८ ॥

चलांशुमालितवपुषश्चात्र केचिद् वभुः व रु वाभा सुराः ।

अत्रैव रेमिरे वीरा वह्नीन्द्राः वैनतादयः ॥ ८९ ॥

शैवा आवासमप्राप्ताः सनातनविभूतयः ।

कायवानिव तत्तेजो भैरवं संप्रतिष्ठितम् ॥ ९० ॥

पुनश्चलेन कालाग्नेः समन्तात् कृतहेतुकम् ।

अस्यान्तः स महादेवो भैरवः शतमस्तकः ॥ ९१ ॥

हेमयुक्तश्च दोर्दण्डव्यालकुण्डलमण्डितः ।

सूते त्रिशतवक्त्राक्षि पङ्कजेन्दीवरार्चितः ॥ ९२ ॥

कर्कदंष्ट्रोग्रलंबोष्ठो दैत्यो भीम महाशरः ।

क्रोधस्कन्धशटाभ्रंशोऽश्रुकेश विलास धृक् ॥ ९३ ॥

कोटिकायोऽति भीमास्यः सनागो नागलोकवत् ।

यस्य बिंबातपच्छाया समालिंगि नरोधमः ॥ ९४ ॥

ब्रह्माण्डस्य द्रवत्तेजोऽवतरद् वारि निर्भराः रु निर्झराः ।

निरर्गला विषो यस्य न शिवेच्छानियामिताः ॥ ९५ ॥

चूडामणिरिवाभाति राकचन्द्रातपीकृतम् ।

कालाग्नेर्मण्डलमूर्ध्वं कालाग्निरिव राजते ॥ ९६ ॥

इत्येष भगवान् कालो यस्यायुतसमुच्छ्रितम् ।

तद्व्यासमासनं धत्ते तथा च बुहलार्चिषः ॥ ९७ ॥

सावशीरोविशे देशा मण्डभित्तौ सहस्रकम् ।

योजनानां सुरेतश्च कुम्भमुक्ताफलान्वितः ॥ ९८ ॥

युगकोटिपुरं तस्य तथा च बहलार्चिषः ।

अर्चिस्तुत्यै स्मृतो धूमो महाञ्जनशिलार्गलः ॥ ९९ ॥

एषः कालानलो वीर निरर्गल बलः प्रिये ।

स संहरेज्जगत् कृत्स्नं धाम्ना स्यान्मम साधितः ॥ १०० ॥

तामसोऽस्य गुणः सर्वो रौद्रसन्धिः प्रतिष्ठितः ।

शाकिनी देवता रुद्रः किङ्करोऽश्वचरात्मकः ॥ १०१ ॥

आग्नेयमण्डलाधिशिरोगच्चन्तमथोपरि ।

निहितं धूमपटलैः पृथुत्वेनाण्डभित्तिगम् ॥ १०२ ॥

व्योमतूर्यस्वराराध्यो व्योमेवोच्छ्रायगं ततः ।

दिव्यान्यब्दसहस्राणि चत्वारि नरकाश्रयाः ॥ १०३ ॥

यान्त्येते यत्र ते पुण्याः प्राणिनो यातनैर्दृढैः ।

भूयसीं समनुप्राप्य कालाज्ञां यान्ति देहिनः ॥ १०४ ॥

रूपवेदनभःसंख्या भूभृतस्तत्र कीर्तिता ।

प्रकृतिश्चाप्यथैतेषां पञ्चाशत्कोटयो मताः ॥ १०५ ॥

एतैः सहैव देवेशि भूषाविकरविस्तराः ।
वच्मि तावन्नरेन्द्रं वै नामभिस्तैर्यथास्थितैः ॥ १०६ ॥
उच्छ्वासश्च निरुच्छ्वासः  पूतिमांसो जतुद्रवः ।
पङ्कलेपो स्थिभङ्गश्च तथान्यश्च विमर्दनः ॥ १०७ ॥
क्रकच्चेदो कुठारश्च वसामेदो ह्रदः परः ।
असृक्कूपोर्धकूपश्च  परसाम्यश्च वायसः  ॥ १०८ ॥
अङ्गारराशिहर्म्योथ अम्वरीषो जलोदरः ।
तमालकान्तारक्षुरा असृजचैलजः  परः ॥ १०९ ॥
सूचीमुखो महाकायः कालसूत्रसरोरुहः ।
शीतोष्णौ च महापद्मसञ्जीवनसुतापनौ ॥ ११० ॥
महावृष्टिस्तमोमोहः महामोहोऽतिदारुणः ।
तामिस्रो ह्यन्धतामिस्रस्तथा कच्चपसंयुतः  ॥ १११ ॥
मृगेन्द्रदलनो दक्षस्तप्तसंदेशपीडनः ।
स्वरोदरविशाखौ रोमकूपाग्निकूपकौ  ॥ ११२ ॥
धूमतप्तायसा नारी दंशमंशकमण्डकौ  ।
हडिन्निगडबन्धश्च  गलः शूलप्रलम्बनः ॥ ११३ ॥
लोहभारशतो वह्निर्दावाग्निर्जठरानलः ।
विरूपो रूपभग्नश्च तप्तचर्मभयानकः ॥ ११४ ॥
ताडितास्योऽन्धकारश्च शतवक्रैकवक्रकौ ।

धूलोलस्तप्तहर्म्यश्च विचर्मोदरहृत् तथा ॥ ११५ ॥
विभङ्गुरः सुमनदो कथितांगोऽनिलेशकृत् ।
लीलावक्षोऽर्धकायश्च स्वभक्षः कृमिभोजनः ॥ ११६ ॥
विड्भक्षो सुन्दरश्चैव मूषकोत्रविलुम्पकः ।
उलूकास्योऽथ याम्यश्च शतवक्रैकवक्रकः ॥ ११७ ॥
प्रभाजिह्वो ह्यनेत्रश्च विचन्द्रो दरकृत् तथा ।
एकपादो ह्यसंदिग्धः कृतवाक्यश्च भीषणः ॥ ११८ ॥
मुसलोखलगर्हश्च सूचितास्योऽथ रौरवः ।
जवजभक्षो ध्वटश्चक्षो महारौरव एव च ॥ ११९ ॥
कुम्भीपाकेक्षुयन्त्रे च क्षुट्तृडात्मान्तकः पुरा ।
क्रकचः कर्तृनिर्देश महिषोजगरः परः ॥ १२० ॥
लोहगर्दभकुम्भौ च तिलच्चिन्नखसूचिकौ ।
महाशिलो शिरः स्फोटो गुरुर्वृषणवेधकः ॥ १२१ ॥
कुलीरो कङ्कचक्रस्तु खरः स्रावस्तुरुक्यपः ।
वृषदंशास्यमकरः सूक्ष्मचक्री च मोनटः ॥ १२२ ॥
एते धराश्रयाः प्रोक्ताः सर्वतोऽण्डधराश्रयाः ।
सेनाभिः प्राणिभिः पूर्णा मधुपूषा इव प्रिये ॥ १२३ ॥
अवेचिकृमिकूटश्च घोरा वैतरणी परा ।
शाल्मली यमलः शैलो निजोच्छ्वासश्च पूतिमान् ॥ १२४ ॥

योऽस्थिभंगो क्रकच्चेदस्त्रपुलाक्षोष्णकर्दमौ ।

तीक्ष्णायस्तुण्डशकुनिहृदोमृक् पूयमेदसाम् ॥ १२५ ॥

अङ्गारराशिभुवनः कुन्भीपाकोऽम्बरीषकः ।

असितालुङ्गमागुल्माः क्षुरधारः शवीमुखः ॥ १२६ ॥

कालसूत्रमहापद्मपद्मसञ्जीवनास्तथा ।

सुतापनोष्णशीताङ्कस्तमोमोहोऽथ रौरवः ॥ १२७ ॥

अम्बरीषोऽवसानश्च स महारौरवः स्थितः ।

महेन्द्रपरमा ह्येते ईषानीषास्तथा परे ॥ १२८ ॥

अर्वाचीरौरवश्चैव कुम्भीपाकस्तृतीयकः ।

आत्मजापाः स्मृता ह्येते तूर्यात्मा चैव शिष्टकाः ॥ १२९ ॥

दशधा पञ्चधा भेदाः प्राप्यन्ते महतोऽणुभिः ।

एतेषामुच्छ्रयश्चापि सेनस्याकाशमूर्तयः ॥ १३० ॥

विष्कम्भकाश्च सर्वेषां मरुद्वह्निखभानुगाः ।

व्याप्तियोगावलोकीनां संमतानाञ्च भैरवि ॥ १३१ ॥

तद्बला यान्त्यमी मार्गे वन्ध्यानमृतवो यथा ।

नरकोद्ध्र्वकटाहोद्ध्र्वेस्थानं भूरि तमोऽमयम् ॥ १३२ ॥

चिद्विहीनं महाघोरं सुसुप्तमिव सर्वतः

तत्रास्ते स महाभीमो जात्यन्धोऽजगरो बली ॥ १३३ ॥

नाम्ना चान्धजरत्कारुः समन्ताद्भित्तिसङ्कटे ।

क्रोडीकृतशरीरस्तु पञ्जरस्थो नु तिष्ठति ॥ १३४ ॥

सदा क्षुद्वामकुक्षिस्तु एकाकी विषयोज्झितः ।

वितानित महावक्र ःतिष्ठन्ति गरलाषमुक् ॥ १३५ ॥

विशन्ति तन्मुखे ते तु ये शिवागमदूषकाः ।

परार्थे भावमापन्नाः शिववाक्यविकल्पकाः ॥ १३६ ॥

व्याजेन गुरुतो ज्ञानं गृह्य लज्जन्ति तस्य ये ।

याभ्यो वसन्ति नारीभ्यः कामयन्ति च तास्तु ये ॥ १३७ ॥

ज्ञानिनां चुम्बकेन्द्राणां तेऽपि तत्र विशन्ति हि ।

निर्गमं प्रविशन्ते तु स्वयोग्यावस्थया तु ते ॥ १३८ ॥

दुर्गन्धा निर्वास्यंते ख तिरवास्यन्ते दक्षिणा चाभिलाष्यते ।

खत्रयब्रह्ममरुतैः शशिनः स्थानसंश्रयात् ॥ १३९ ॥

द्वे युतेऽर्द्धं च निविडं तस्योद्ध्वञ्च कटाहकम् ।

तस्योद्ध्र्वे तत्प्रमाणं तु तद्रूपं धाम भीषणम् ॥ १४० ॥

यत्रासौ तिष्ठते ह्यण्डो गुप्तदानस्तुमत्कुणः ।

महासर्पप्रमाणस्तु लुप्ताचारैर्भृतोदरः ॥ १४१ ॥

द्वेष्टारो भैरवाप्तानां द्वेषिणश्चुम्बकादिषु ।

वसन्ति तेऽपि तत्रैव येन द्रविणहारकाः ॥ १४२ ॥

सन्मतानां महादेवि कुलमाशीतिकाश्च ये ।

तस्योपरि कटाहोद्ध्र्वे येनान्धो दर्दुरः स्थितः ॥ १४३ ॥

पृथुभुक्तिर्महावक्त्रो साधनाद्दण्डनीं श्रियम्।

काकैर्मृगैश्चचमरैः सौवर्णादिविभूषकैः ॥ १४४ ॥

व्याजान्निषेकमज्ञान ग्राहकैस्तस्य पूरितम्।

जाठरं जाठरास्यश्च ज्वालामण्डलमालितम्॥ १४५ ॥

यस्योदरमहातालादुदीर्णं जन्तुमण्डलम्।

तिष्ठेत् तदुह्यमानं तु जठरोन्नीतवह्निना ॥ १४६ ॥

अधीनं तत्सकाशात् तु यस्माद्ज्ञानं श्रुतं तथा।

क्रीडायन्ते तु ये तेन गुरुमेकाकिमातुरम्॥ १४७ ॥

कान्तारयुद्वेष्ठाज्ञा ख -कान्तारत्युद्वेष्ठाज्ञा यो हीयमानं त्यजंति ये।

ज्ञानानुक्रमहीना ये गर्विताश्चापि पापिनः॥ १४८ ॥

ते विशन्ति महाघोरं कृकलासं महोदरम्।

तस्योर्ध्वे पामराभिस्तिरोहितां रोहिता तदधोगताः॥ १४९ ॥

कार्कश्यं शास्यमानञ्च सममासां समन्ततः।

प्रयुक्तं प्रक्रियाज्ञानं वेदिना देशिकेन तु॥ १५० ॥

सिन्दूराञ्जनशिलादीनां भिदुरं भैरवायुधम्।

पञ्चाशत्पञ्चलक्षाणि कोटित्रियसमं ततः ॥ १५१ ॥

चिद्विहीनं तथा कोटिशतधारा धरोपरि।

गर्भोदं दान वै तस्मान् मत्स्यप्रच्चोत्सलं पयः॥ १५२ ॥

कन्दर्पमार्गणाकाशलोकचक्षु सिताक्षगः।

कृष्णाय धारामूर्ध्नं च ककुभिस्त्वेककोटिगा ॥ १५३ ॥

ततः कूष्माण्डदेवस्य विज्ञानं रुद्रसंकुलम् ।

स चापि भगवान्नुक्तस्त्रिकोणाभिख्यमण्डले ॥ १५४ ॥

नारके मण्डलेशस्तु त्रिकोणाभिख्यमण्डलः ।

तेन शुद्धेन शुद्ध्यन्ते सर्वे ते भैरवाध्वनि ॥ १५५ ॥

कूष्माण्डमातरो घोरा : योगिन्यो बलगर्विताः ।

शाकिन्यो रुद्रवेताल्यः कर्कटाः कठपूतनाः ॥ १५६ ॥

मुखमुक्तान्विगृह्णन्ति जम्बूनीताध्वमार्गगाः ।

एते स्फुरदमेयांशु प्रभोद्वलितचेतसः ॥ १५७ ॥

पिनाकिगोत्राधिकृत्यं दधानं संप्रतिष्ठितम् ।

पुरं कूष्माण्डरुद्रस्य वज्रप्राकारतोरणम् ॥ १५८ ॥

पद्मखण्डशताकीर्णं क्रीडाविन्यासमण्डितम् ।

तदग्रे शक्तिलक्षैस्तु ज्ञेयं तत्पुरुषाधिपः ॥ १५९ ॥

तत्रासौ भगवानीशो सत्कर्मार्जितभोगदः ।

योजनानां सहस्रैकमासनं तस्य कीर्तितम् ॥ १६० ॥

अष्टपत्रमहाम्भोजसुरेन्द्रशतपृष्ठगम् ।

योजनायुतकायोऽसौ चतुर्वक्त्रोरुवीक्षणः ॥ १६१ ॥

द्विदशाशाष्टखर्वं दिव्यास्त्राण्युग्रमण्डलम् ।

महारजतवासोऽसौ भाति सन्ध्याभ्रपाटलम् ॥ १६२ ॥

यश्चाहोरात्रसाहस्त्रं तुतोष न शमी व रु शमो ऋषिः ।

ककुब्जकं कटाहञ्च पातालानि तदम्बरे ॥ १६३ ॥

रूपं वापुस्तनुङ्गानि  रसाश्रयपृथूनि च ।

भृत्त्यर्गलासमा वर्म्मभांजि सर्वाणि सर्वतः ॥ १६४ ॥

आभासवरतालञ्च शर्करालं गभस्ति च ।

महातालं सुतालं च सप्तमं च रसातलम् ॥ १६५ ॥

द्विस्कन्धं तत्समाख्यातं पुरदं यन्निदर्शनात् ।

एकैकस्मिंस्तु ये दैत्या भोगिनः क्रूरमण्डलाः ॥ १६६ ॥

चित्र सम्पच्छ्रियस्ते तु कोटयेकैकपरिच्चदा ः ।

पयोभिरतुलश्रीभिः सार्द्धं हृच्चयसेविनः ॥ १६७ ॥

तेऽभुञ्जश्चक्रसंस्थानस्थितमेतद्वराश्रमम् ।

नाना असुरसङ्घाता  भुजङ्गोन्मोकवाससः ॥ १६८ ॥

चक्रनेमिचरो भोगी विज्ञेयः शर्वरीचरः ।

यत्तदा भासतालन्तु हरेर्मणिधरातलम्  ॥ १६९ ॥

नमुचिः व नमूचिः शङ्कुकर्णश्च महानादश्च दानवाः ।

चूडामणिरुगुद्योति स्वाधिष्ठानतपोरुहः  ॥ १७० ॥

सौधोन्नतवलभीनां  प्राकारोद्यानभूषु च ।

रमन्ति दयितावक्रदर्प्पणालोकिताननाः ॥ १७१ ॥

कुण्डगोलादयश्चान्ये  वीराः वीरेजकाः शुभाः ।

लिङ्गभूरिपटस्थायिध्यानयोगप्रतिष्ठिताः ॥ १७२ ॥

अनन्तः कुलिकश्चैव इलापत्रस्त्रयोरगाः ।

विकटः स्थूलदन्तश्च रक्ताक्षो राक्षसाधिपः ॥ १७३ ॥

द्वितीये वरतालाख्ये सुरम्ये शोणभूमिके ।

देवराद्यास्त्रयः देवि सन्ति भोगिनो धरणीभृतः ॥ १७४ ॥

पहलादो वह्निजिह्वश्च बलीयाननुहाटकः ।

वासुकिः शंखपालश्च धृतराष्ट्रो भुजङ्गराट् ॥ १७५ ॥

स्वभोगचक्रवालेन्दुप्रभापर्यङ्कमध्यगाः ।

रेमिरे रम्यभोगाढ्या नागकन्यारतोत्सवम् ॥ १७६ ॥

विद्युन्माली हिरण्याक्षो विद्युल्लोलश्च राक्षसाः ।

भूयांसोऽन्ये निकुम्भाद्या वसन्त्यत्र धरालये ॥ १७७ ॥

स्वयोषिन्मन्मथास्वादकपिशाक्षीवशे तथा ।

पुष्परागमहांरत्न तद्वद्दिव्यं धराश्रये ॥ १७८ ॥

तद्वर्णनिलयव्रातललिते वलितः प्रिये ।

तृतीयो तारकाक्षस्तु शिशुपालोऽन्धकारकः ॥ १७९ ॥

तारकस्तक्षकः पद्मः कम्बलःश्चोरगा मताः ।

यम दंष्ट्रोग्रदंष्ट्रश्च विशालाक्षश्च राक्षसाः ॥ १८० ॥

वैडूर्यज शिलाजालव्यास व्यालाधिपालयाः ।

विक्रमद्रविणास्तूर्यैर्नैवैव महीभृतः ॥ १८१ ॥

कालाख्यो याममहिषौ काव्यविद्यास्त्रयो मताः ।

खण्डकर्णश्च पद्मश्च कर्कोटः फणिनस्त्रयः ॥ १८२ ॥

महोदरो महाकायो रक्षोघ्नश्च महाभुजः ।

महानीलधराधारमिंद्रनीलदृशन्निधिम् ॥ १८३ ॥

पातालं पञ्चमं रम्यं सर्वभूतिं सदाश्रयम्

चित्रयोनिसुदाम्नोऽन्तरमणीमण्डलाकुले ॥ १८४ ॥

रमन्ते वनराजानः सनातनविभूतयः ।

वीरेशार्पितचेतस्को तत्र मन्त्रिजनः सदा ॥ १८५ ॥

ताक्ष्यार्क्षश्च सुवर्णाक्षो दुन्दुभिः सुमनोरमः ।

धनञ्जयो स्थिताः पञ्च यश्च कलिकोमलपत्रयः ॥ १८६ ॥

स्वोत्तमाङ्गमणिच्चायो रंगभूषितविग्रहः ।

धाराधरो विरूपाक्षो ह्युग्ररूपोऽथ वामनः ॥ १८७ ॥

एते सम समाकृष्टाः सुधाम्नो रमणीभुजः ।

नराः सामिषगन्धाढया लोलालापविभूषणाः ॥ १८८ ॥

विधुकान्तिमयी भूमिः षष्ठपातालसञ्चरे ।

लीला पत्यन्तरे यस्य महिष्यों लोलितान्वगाः ॥ १८९ ॥

निशुम्भः व निसुम्भः कालनेमिश्च हिरण्याक्षोऽमरद्विषः ।

सुष्मा विहृत्यामरं स्त्री शूर्पकोऽलिमुखोऽलसः ॥ १९० ॥

दुष्प्रेक्षः पौण्डरीकश्च श्वेतभद्रोऽथ भोगिनः ।

मौलिरत्नप्रदीपश्च शिखाभग्नतमोबलाः ॥ १९१ ॥

मेघनादी महानादी पिङ्गाक्षः पिशिताशनः ।

स्वस्वदंष्ट्रामृगाङ्कांशु मनोमालितविग्रहाः ॥ १९२ ॥

नरामरसुरारातिफल्गुसामिषगृद्धिनः ।

निरर्गलबला वीरा वीरेशार्चापरायणाः ॥ १९३ ॥

यत्तद्रसातलन्नाम सूर्यकान्तरसातलम् ।

तत्राधोक्षजवीर्योग्ररज्जुसंयमितो बलिः ॥ १९४ ॥

आस्ते स्वसूनृतां वाणीं पालयन् बलवानपि ।

वैराजनो जनः सेन्द्रो द्वा धन्यौ नरकेश्वरौ ॥ १९५ ॥

स्फुरद्बलसमाघ्रात सप्तलोकभटश्रियः ।

यदजार्गलया रुद्धा वसन्तीव करेणवः ॥ १९६ ॥

नाद्यापि यद्भयाविष्टा नाकौकेशाः समाकुलाः ।

धनुर्भ्योऽवतरितज्यासु स्वसुखाल्लब्धतन्द्रयः ॥ १९७ ॥

नागश्चाश्वतरस्तत्र पिङ्गलैरावतस्तथा ।

फणमण्डलमणीन्द्रांशुं मञ्जरीकन्दलावृताः ॥ १९८ ॥

पुल्लपादग्धमन्दारा व ख पुल्लपादग्ध मन्दारा दरपल्लविता इव ।

ईक्षिरे ते महानागाः हाटकेशों ह्यनुक्रमात् ॥ १९९ ॥

माली वा नवमाली च सुमाली क्रूरनायकाः ।

लङ्कापतेर्दशास्यानि ह्येते मातामहा मताः ॥ २०० ॥

अच्युतास्त्रानलज्वालादाहश्यामयिताङ्गिनः ।

सुवीरैः प्रावृडारम्भोत्तुङ्गशृङ्गा घना इव ॥ २०१ ॥

कनकाकल्पसच्चायासमालिङ्गितविग्रहाः ।

स्फुरत्सौदामणीपुञ्जपिंजरा जलदा इव ॥ २०२ ॥

विकटा टङ्कत्रिजटा धूम्रा कोलाहला बला ।

विद्युल्लोला नलाक्षी च नवमी पिङ्गलेक्षणा ॥ २०३ ॥

तिस्रात्तिस्रः प्रिया ह्येतेस्त्रयाणामपि सैन्धव ।

नयेनास्यामिता ह्येते कालिकापत्यपुत्रयोः ॥ २०४ ॥

सप्तपातालराजानो विज्ञेयाधोवलोकिभिः ।

उपरीश्वरमन्दिरं महोच्चं कलधौतामलभूमिमण्डलौकः ।

वनितामुखचन्द्रचन्द्रिकाभिहतभीमान्धतमोभरप्रभावम् ॥ २०५ ॥

वरसिद्धवधूकरावृतं भवरुद्राश्रितसिद्धसेवितम् ।

मणिभूषितरश्मिजालकैरधरोद्याश्च शिरःप्रभावितानम् ॥ २०६ ॥

विभुरत्नाचितहर्म्यभित्तिका अनुषक्ताः शशिनोऽशुजालकानाम् ।

स्त्रवदच्चजलोर्मिमालिकाभिहृतचित्रौघवशान्सुदोषभावम् ॥ २०७ ॥

स्फटिकोपलकुट्टिमप्रभाभि उपगूहं धरणीतलं समन्तात् ।

द्रवहीनहिमांशुमण्डलद्रुत धामां विशदं शुशोभ यत्र ॥ २०८ ॥

स्फुटशोणमणीन्द्रभाभिरुर्ध्वस्थगितं शेखरिभिः समन्ततो यत् ।

अधरो नवसाधुवेशरूपं ललिताम्रशुभांतरानुषङ्गात् ॥ २०९ ॥

सदेन्दुचूडामणिरश्मिजालकैर्वितानकं यस्य निजास्यदेवलम्।

सहाटकः पिङ्गजटाकलापधृक् स्थितोऽधिकार्यात्तु वितानविषये॥

२१०॥

विपन्नदेवारिविलासिनीगणैर्मृगेन्द्रसत्केसरिकेशदामनैः।

प्रवीक्ष्यते यस्य पदाब्जमुक्ताकिणांकितं नम्रसुरेन्द्रमौलिभिः॥ २११॥

क्वणन्मधुरवल्लकी - स्फुटसुगीतिकागीतकैर्नदत्मुरजझत

ल्लकीपटहगर्जशङ्खस्वनैः ।

प्रसिद्धधृतताण्डवप्रबलहास्य कोलाहलैर्हसद्भुवनमुल्वणं भवतु वो मुदे

हर्षकृत्॥ २१२॥

अभर्तृलयदङ्गना प्रविशनाति संसर्गतः।

अपि स्वमणिभूषणप्रबलरत्नकीर्णोत्करैः॥ २१३॥

विलग्नललिताङ्गुलीत्रुटितहारमुक्ताफलैः।

कृतप्रवरपूजनं यदुदरं सदा राजते॥ २१४॥

इत स्फुटित रत्नजैर्विमलदीपकैर्मालितः ।

इतः शशिशिलोद्भवैर्हरितपुष्परागैरितः ॥ २१५॥

स्फुरत्किरणमञ्जरीप्रकटशोणजातैरितो -।

दधार रभसः श्रियं स्फुरितदीप्तचक्रस्य यत्॥ २१६॥

नवागुरुशशाङ्कजप्रचुरधूपधूमालयम्।

मनोजहरिचन्दनप्रबलगन्धवत् सुस्थिरम् ॥ २१७॥

प्रकाशसुरपादपोल्लसित पुष्पदामाकुलम् ।

ककुध्वजमदाम्बुना सततसिक्तपृथ्वीतलम् ॥ २१८ ॥

वृषोत्थ खुरवर्त्तिकावलनजातरूपाङ्कितम् ।

चलत्कनककुण्डलप्रकरमण्डितप्राङ्गम् ॥ २१९ ॥

समस्तरविमण्डलोदितनभोऽनुरूपं श्रिया ।

रराज व ररा सुरसुन्दरीकमलिनी शनैर्यस्य च ॥ २२० ॥

क्वचित् परशुरोचनाहरितमालमालेषवः ।

क्वचित् कनकपादुके रसरसायनादिक्रिया ॥ २२१ ॥

क्वचिन्मदनगोजिकाचरणलेपचिंतामणिः ।

क्वचित् कुनदिवाटिकादिको वसुगणः स्फुरपत्रकः ॥ २२२ ॥

वक्षोमणिरश्मिमण्डलोत्तरीयं ---- ।

मञ्जीररत्नगरत्नभा नितम्ववस्त्रे ।चूडामणिरश्मिपल्लवितोत्तमाङ्गं यत्रामलं

विरेमे ॥ २२३ ॥

अनन्तवस्त्रमण्डिताः कृशानुवस्त्रजा ध्वजाः ।

पताकिकास्तथोज्ज्वलाः स्पृशन्ति वै ककुब्लताः ॥ २२४ ॥

सरोजरत्न भासुराः सुजातजातरूपजाः ।

प्रवालदामशोभिनो विभान्ति तोरणागणाः ॥ २२५ ॥

अरूपनन्दनेषु च स्ववाक्य वैखरीगणाः ।

ननाद यत्र मेखला मतङ्गजां मदोद्वहम् ॥ २२६ ॥

आस्ते स देवोऽत्र जपेशनामा स्वाधोगतानन्तधराधिपानाम् ।

आज्ञाप्रदः सिद्धजनः प्रगोप्ता सम्पूज्यमानोऽखिलचक्रिभिश्च ॥ २२७ ॥

वक्रपञ्चकेन्द्रद्विजोत्थकिरणा व रु -णत्व चारुकुण्डलभारती ।

शुभविभवोदया शेखरेन्दुधारासहस्रशबलीकृतजन्तवः ॥ २२८ ॥

वक्रशरत्कीलभूतिमतिलालसा दिक्प्रमाणदोर्दण्डमण्डलविभूतिमत् ।

शारदाभ्रशुभ्रप्रवरमनाविलं फुल्ललोचनाम्वुरुहत्रयमनाकुलम् ॥ २२९ ॥

यस्य वक्राणिं सदीर्घिका सुहर्षोन्नतमुण्डपञ्चकाङ्गत्रिशूलविमलाशयः ।

वारणजगोधाश्च भीतवरपाणयः कुब्जनागपाशैश्च भूतधवलाङ्गदैः ॥

२३० ॥

यस्याभान्तीकि शारदनभस्थले ।

तस्य शम्बरेच्चा विधानकृतचेतसः ॥ २३१ ॥

सन्ति भूतिभाजः सदैव सुखिनो नराः ।

भुक्ताः सप्तपाताल भोगमनघान्तिकम् ॥ २३२ ॥

यान्ति वीरपुङ्गवेषुं निजहृदीच्चया ।

अस्य देवि देव्यादिकं शृणुष्व त्वमनाविलम् ॥ २३३ ॥

रंजिकाभिनवगात्रोत्फुल्लगात्रकं हृदादिवर्णयोनिराजीवनाभिरचितास्वादम्

।

प्राक्तनं रूपमीक्ष्यं ते सदोक्तं विभवार्थिभिः ।

विभवोऽस्य सर्गस्तु लौकिको न च शक्योभिहितुं समासतः ॥ २३४ ॥

परमा ह्यभिलाषपूर्णना हठशम्भोर्भवते व शम्भोः भवते भिषेरणात् ।
अस्मात् परादुपरिपीतकटाहपिण्डश्चैष सहस्रकृतयोजनसत्प्रमाणः ।
विरचितास्पदचित्रशोभा पृथ्वी सरिन्नदसरोद्रुमशैलयुक्ता ः॥ २३५॥
या रत्नसातुविमलोन्नतकर्णिकेनां दीपार्चितोज्ज्वलदलाष्टक शृङ्गा।
उद्यानकेसरनदीमधुशैलबीजा अम्भोरुही तडिदिवोज्ज्वलभा विभाति
॥ २३६॥
उक्त एष पन्थाः यथाक्रमं गोविरामश्च प्रदेशतः।
पुष्कलास्त्रयोविंशतिस्फुटाः कोटयोऽखिला योजनाख्यया॥ २३७॥
इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं
शतिसाहस्रे प्रथमषट्के कालसङ्कर्षण्यां सप्तमः पटलः ॥ ७॥

अष्टमः पटलः।

श्रीभैरव उवाच ।

अथ शैवाण्डभित्यन्तर्मणिच्छाया विकासिता।
शुभ्रमध्यंदिनात्युग्रभास्वद्धीमातपोपमा ॥ १॥
कोटिमननोच्चा द्वा ततः सन्ध्यारजच्छविः ।
समेच्चा कोटिमानस्था ततोऽसौ शर्वरीक्रिया॥ २॥
शतधामयुतां ज्ञेया भूरिभित्तिप्रभावतः ।
ततोऽन्धकारमत्युग्रं भवनालोकवर्जितम्॥ ३॥
उद्यानगिरिवह्यचन्त स्तिर्यङ्नर सुरासुरैः।

न तत्र लवमात्रापि इत्थमेतद्व्यवस्थितिः ॥ ४ ॥

उक्तान्धकारगन्तारः किलाद्यापि हि सेवकाः ।

स्वर्विचारवतां भाषाः श्रूयन्ते तत्र संस्थिताः ॥ ५ ॥

यद्याह कोटयो लक्षा ः रुद्रभेदप्रमाणगाः ।

अनित्य धर्मगा या मानमस्याख्यातमविस्मृतम् ॥ ६ ॥

तस्याः सीमान्तरं दत्वा गर्भाख्यः प्राक् प्रमाणतः ।

रुचिरः सानुमांस्तस्माल्लोकालोकेति विश्रुतः ॥ ७ ॥

पौलस्त्यमुखसाहस्रो व्यासेन द्विगुणोच्छ्रयात् ।

तस्य मध्ये स्मृतो लोकोऽवलोको वाह्यतो मतः ॥ ८ ॥

मस्तकेऽस्य चतस्रस्तु पुरो लोकात्मनां महान् ।

वसुधामास्थिताः पूर्वे शङ्ख्या दक्षिणेन तु ॥ ९ ॥

रुक्मके शीलदिग्भागे केतुमालोत्तरेऽपि च ।

वसुधा शङ्खपालश्च रुक्मकेशश्च केतुमान् ॥ १० ॥

अनुलोकेश्वरा ह्येते रेमिरे तु ममाज्ञया ।

ततो निम्ना अहोरम्या कञ्जकोटिप्रतिष्ठिता ॥ ११ ॥

चामीकरमयै ःरम्यैः सदामृद्भूमिसम्मता ।

अस्यास्तले वुदकारः सप्तद्वीपान्यनुक्रमात् ॥ १२ ॥

श्रूयतां पन्निलानन्द श्रोतव्योऽस्मिन् समासतः ।

सुराज्यस्य सुतो नाम्ना मनुरासीन् महामुनिः ॥ १३ ॥

प्रियव्रतस्ततस्तस्य मनवो दश चास्य तु ।

अग्निदो ह्यग्निबाहुश्च मेधा मेधातिथिर्वसुः ॥ १४

ज्योतिष्मान् द्युतिमान् हव्यः सवनः पत्र एव च ।

मेथातिथ्यग्निबाहुश्च परिवादशिरास्त्रयः ॥ १५ ॥

विनिवृत्तवियोगास्तु परब्रह्मसमाश्रिताः ।

सर्वविद्यार्थसंपन्ना गुरोर्ज्ञानविचिन्तकाः ॥ १६ ॥

ब्रह्मचर्यरताः शान्ता वीरा वीर कृतौजसः ।

इतरा साधिकारास्तु शूर्पकारिकृतश्रमाः ॥ १७ ॥

रागान्धा ज्ञानदीपेष्वभिषिञ्चन्ति प्रियव्रताः ।

पुष्करं मानसं क्रौञ्चकुलं शाल्मलमेव च ॥ १८ ॥

प्लक्षद्वीपञ्च जम्बूञ्च सप्तमं द्वीपसंज्ञितम् ।

पुष्करे सवनः सिक्तः शाके हव्यो महाबलः ॥ १९ ॥

द्युतिज्योतिष्मतीसिक्तौ द्वीपयोः क्रौञ्चदर्भयोः ।

शाल्मलीप्लक्षयोः सिक्तौ वसुमेधातिथीसुतौ ॥ २० ॥

जम्बूद्वीपे तथाग्नीध्रं बलीयांसं सिशिञ्चयः ।

अस्योग्राः पिञ्जराः पूर्णाः स्फुर्जन्त इतरोरगाः ॥ २१ ॥

अवाप्ताः सासुरा गन्धर्वो यक्षरक्षोशगुह्यकाः ।

विशृङ्खला नभः पृष्ठे ह्यमीषां बभ्रमुर्भयात् ॥ २२ ॥

सुवर्णोदमतिक्रम्य स्वाद्वात्मा मकरालयः ।

मेधा वक्राणि नेत्राणि तस्यैव युगलं बिना ॥ २३ ॥

लक्षाणां तत्प्रमाणं हि तन्नालं पुष्करं मतम् ।

कुलाद्रिणा समन्तात्तु मानसेन समावृतम् ॥ २४ ॥

तद्दलीकृत्य सवनो वहिरन्तर्व्यवस्थया ।

स्वात्मजाभ्यां ददौ वीरस्त्वभिषेकपुरःसरम् ॥ २५ ॥

वीतधातकिनामाभ्यां स्थावरं तुल्यंसंपदम् ।

मानसोत्तरमूर्धस्थं नगरीणां चतुष्टयम् ॥ २६ ॥

वस्त्रौकसारपूर्वेण सूत्राम्लोर्दक्षिणे न च ।

यमस्य सा संयमनी आदिभावे सुखावती ॥ २७ ॥

विभावती सुधारश्मिः सुधाग्नेः संव्यवस्थिता ।

पुष्करस्य बहिर्वारिद्विपाः पुर्योऽतिबान्धवाः ॥ २८ ॥

तस्य मध्ये स्थितं द्वीपं शाकमत्यन्त विस्तृतम् ।

चक्राकारं कृतं तद्धि विमलैः पर्वतात्मकैः ॥ २९ ॥

उदयोऽम्बुधरः श्यामो रजतो रैवतः परः ।

अम्बिकेयः स्मृतः षष्ठः सप्तमः केशनिर्मितः ॥ ३० ॥

एतेषामन्तरालेषु हव्यपुत्राणि सिञ्चति ।

महाद्रुमोन्नतश्चैव कुमुदोथमणीचकः ॥ ३१ ॥

सुकुमारः कुमारश्च जलः सप्ततमो नृपः ।

दुःसाध्यतिमिरं तस्यां तद्गर्भाक्रौञ्चसंज्ञकम् ॥ ३२ ॥

तस्मिन् कुलाः सप्त नामभिः शृणु सैन्धव ।

क्रौञ्चो वामनकश्चैव ह्यन्धकारो दिवाकृतिः ॥ ३३ ॥

पौण्डरीकोऽथ मूकश्च दुन्दुभिः सप्तमः स्मृतः ।

सीमान्तरगतामेषाम् एतेभ्यो द्युतिमान् दधौ ॥ ३४ ॥

सप्तभ्यो निजपुत्रेभ्यो वलवद्भ्यो वलोद्धतः ।

मनोऽनुगोऽन्धकारश्च पुरूषोष्णः प्रवरो मुनिः ॥ ३५ ॥

कुशलो दुन्दुभिश्चैव स्वनामविषयालयाः ।

ततः क्रौञ्चमतिक्रम्य सर्पिरथिरगाधवान् ॥ ३६ ॥

उदरेऽस्य कुशद्वीपं ज्योतिष्मांस्तत्र पार्थिवः ।

तद्द्वितीयनिजापत्य सप्तकाय ययौ दिवम् ॥ ३७ ॥

कपिलः प्रभाकरः कृष्णो लवणो रथकृत् तथा ।

वेणुध्वजो निजाकाक राष्ट्रमार्गप्रपालकाः ॥ ३८ ॥

सानुमन्तः स्थिताः तत्राप्युत्तुङ्गसप्त सानवः ।

उमोश्रयो हेमगिरेर्ज्योतिष्मान् पुष्पवर्धनः ॥ ३९ ॥

कुशेशयो हरिश्चैव मन्दरः सप्तमः स्मृतः ।

शैलविष्कम्भभोक्तारः पुत्रा ज्योतिष्मतो मताः ॥ ४० ॥

वलयार्गलास्ततस्तस्य मध्ये इक्षुरसाधिजाः ः ।

तस्यामन्तर्गतं द्वीपं शाल्मलीसंज्ञकं शुभम् ॥ ४१ ॥

वपुषा सूनवः सप्तरथाङ्गाकृतिसंस्थिताः ः ।

कुलाद्यरकसंस्थाने ते तस्मिन्नभिषेचिताः ॥ ४२ ॥

जीमूतो लोहितश्चैव सुप्रभो वैद्युतो हरिः ।

मानसश्च रमानाथो सप्तै ते श्रूयतां नृप ॥ ४३ ॥

कुमुदोऽनन्तको भद्रो नलः नीलो बलाहकाः ।

अमी महीभृतः सप्त ततोऽन्ते मन्दरालयः ॥ ४४ ॥

तस्याप्यन्तर्गतं प्लक्षं तत्र मेधातिथिर्नृपः ।

महीन्द्रांतर्गतान् देशानपत्येभ्यो वितीर्य सः ॥ ४५ ॥

मुनिमानगतेभ्यस्तु गतयः सप्तस्वराः प्रभुः ।

ध्रुवो क्षेमो निरानन्दः सुखोदः शिशिरस्तथा ॥ ४६ ॥

स्वशान्तः सप्तमश्चैव देशाप्येते प्रकीर्तिताः ।

कुलांश्च कारकांश्चक्रे लक्षाख्ये श्रूयतामतः ॥ ४७ ॥

नारदो दुन्दुभिघनो वैभ्राजश्चक्रकः शशी ।

गोमेदश्चाप्यसोऽम्मोधिः क्षराख्यो गर्भमाश्रितः ॥ ४८ ॥

अस्याप्यन्तर्गतं तद्धि जम्बूद्वीपं परं भुवः ।

क्रीडन्ते पुष्करे संस्था तत्रेशास्ते ते च सर्वदा । ४९ ॥

स्वादूदादिसमुद्राणामन्योन्य जलगामिभिः ।

समुद्रवच्च वर्षाणि विज्ञेया पुष्कराचितः ॥ ५० ॥

अग्नीध्रो नामतः प्रोक्तो जम्बूद्वीपे महाप्रभुः ।

तस्यात्मजा नवोत्पन्नास्तेऽपि तर्पभुशालिनः ॥ ५१ ॥

विततानवद् योऽसौ नवभागविभाजितम् ।

लक्षयोजनविस्तीर्णे जम्बूद्वीपें च भूपतिः ॥ ५२ ॥

क्षारतोयभृतोऽन्तस्थमस्यावयवलक्षणम् ।

वच्मि संक्षेपतो राजंस्त्वमाविष्कुरु विस्तरम् ॥ ५३ ॥

उदगुदन्वतो याम्ये देशोऽयः संप्रतिष्ठितः ।

अग्नीध्रेण सुतस्तत्र कुरुर्नामाभिषेचितः ॥ ५४ ॥

कोदण्डवद्भुजस्तस्य नवसाहस्त्रविस्तरम् ।

अशीतिपूरणं तुङ्गद्वयविलासितम् ॥ ५५ ॥

क्षीरवृक्षफलान्धञ्च चामीकरधरालयम् ।

युग्मप्रसृतयो लोका ः वसन्त्यत्र सुयौवनाः ॥ ५६ ॥

त्रिदशार्द्धसहस्त्रञ्च तेषामायुः प्रकीर्तितम् ।

वपुर्गोरोचनं दिव्यरूपं चाशून्यकारिणः ॥ ५७ ॥

कुरुसंज्ञमिदं वर्षं रविकान्तीन्दुकारकौ ।

यत्राचलौ सुराराङ्गक्रीडाहर्म्यसमाकुलौ ॥ ५८ ॥

अस्य दिग्दक्षिणाशीतिसहस्त्राणि महानगाः ः ।

प्रान्तयोरम्बुराशिस्थः सहस्त्रद्वयविस्तरः ॥ ५९

नाम्ना व नाम्नान त्रिगर्त्तरस्त्रिश्च चत्वारिंशत्सहस्त्रकम् ।

राजावर्त्तोपलाङ्गोऽसौ शतमध्यर्धदैर्ध्यतः ः ॥ ६० ॥

अस्यापि वर्षसन्तत्यः सहिरण्यं हिरण्मयाः ।

चित्राभिषेके च तस्तत्र तन्ननाम्ना तद्धिरण्मयः ॥ ६१ ॥

अभ्रकाभरजःस्थापि कुशोदर्कानुसंस्थितम् ।

आयुस्तु मनुजीवानां तत्तावद्द्वादशैव तु ॥ ६२ ॥

सहस्राणि शतानाञ्च कुरुदैर्घ्यदशार्गलम् ।

किरातः किङ्करातश्च सप्तसानुः त्रयो नगाः ॥ ६३ ॥

हरितो वर्णास्ते चिरंजीवसमाकुलाः ।

धर्मैककुभिशङ्खाभो भृगुक्षेत्र इति श्रुताः ॥ ६४ ॥

कोटिभ्यां स्पृशमेधीव शृङ्गवानिवसंस्थितः ।

विस्तरस्तत्समस्तस्य धूरस्त्वं तर्दशवृद्धिमः ॥ ६५ ॥

पंचत्रिंशत्युदग्रस्थं सहस्राणि नराधिपः ।

तदन्ते रमते नाम रमणस्तत्रसेविनः - ॥ ६६ ॥

हिरण्मयं समन्ताद्धि दैर्घ्येण दशवृद्धिगम् ।

तरुराजफणाहारास्तत्र लोकास्तपोधनाः ॥ ६७ ॥

अब्दैकादशसाहस्रमायुस्तेषां प्रकीर्तितम् ।

मद्यगोपवपुष्मन्तः सर्वे तस्मिन्शरीरिणः ॥ ६८ ॥

अलोकस्सानुमान्नन्दश्चतुर्थो लाङ्गलीयकः ।

अलकाकेन्दुभृङ्गाभाः क्रमेणैते कुलाचलाः ॥ ६९ ॥

गिरिराट् कथ्यते रम्यो रम्यनीलशिलोच्चयः ।

तुर्यायुतसमुत्सेधो लक्षायामः प्रतिष्ठितः ॥ ७० ॥

श्वेतवद्यासससंस्थानं महानीलवपुर्विदुः ।

न रात्रौ विषुवं तस्य नन्दपः सह केन्तरे ॥ ७१ ॥

शक्रक्रीडाचलस्तीर्ण सुचित्रः स्थानकः स्थिरः ।

कान्तः स्व कान्त स्वर वपुः श्रीमानधःसानुगणाकुलः ॥ ७२ ॥

सहस्त्रयुग्माभ्यधिकं त्रियुतं तस्य सप्तकम् ।

मल्लकाभिख्यतः सो हि नमितः श्लक्ष्णतामधः ॥ ७३ ॥

ऊर्ध्वेन्दुदग्धसंस्थानश्चतुराशीतिरग्रतः ।

दशषोढासहस्त्राणि गतः पातालगोचरम् ॥ ७४ ॥

फणिभिः पञ्चसाहस्त्रमामूलात् परिवेष्टितः ।

ऊष्मोद्धुरैर्महादेवि निभृतो यः समन्ततः ॥ ७५ ॥

विष्कम्भगिरि यस्तस्य दृक्कूर्मै ः रूद्धतक्षयः ।

दारिदो विश्वपार्श्वाख्य कङ्कुश्चन्द्रम संस्थितः ॥ ७६ ॥

विपुलो राजवर्ताभो राशयः संप्रतिष्ठिताः ।

नालोपलघनोयस्य नगो वै गन्धमादनः ॥ ७७ ॥

फेनाभो मन्दरो मेरुमौलिभिर्जघनं गतः ।

बिम्बिते वर्णिकैरेषां चित्रवर्णो विराजते ॥ ७८ ॥

सुरालयोद्धताटोप इव हेमाचलो नटः ।

सहस्त्रयोजनायामः कदम्बो मन्दरोपरि ॥ ७९ ॥

गन्धमादनगाज्जम्बूवटवृक्षसुपार्श्वतः ।

विपुलोर्ध्वे महाश्वत्थस्तत्र शाखासमाकुलः ॥ ८० ॥

समानोदर्किणः सर्वे कादम्बं मानमाश्रिताः ।

उक्ताचलोपकण्ठेषु सरांसि विपुलानि तु ॥ ८१ ॥

वराणि च विचित्राणि भृंगोद्गीतानि सुन्दरि ।

वृद्धश्रवसुविख्यातं  नाम्ना चैत्ररथं वनम् ॥ ८२ ॥

वैभ्राजमन्दनिर्झेयं नरहंतनिरन्दरम् ।

सदापुष्पफलोपेतं पालाशं जन्मजन्मनि  ॥ ८३ ॥

सरष्टत्र ख सरस्तत्र महाभद्रं शतयेजनविस्तरम्  ।

मानसं श्रेयसि गतं सितोदं रत्नधातरि ॥ ८४ ॥

सुरापीरच्चपानीयं तडाकमरुणोदकम् ।

नानापक्षिगणाकीर्णं कनकाम्बुजमालितम् ॥ ८५ ॥

ससमं प्राप्राजितं ॱ प्रोक्तं सहस्रोच्च्रय मन्थरम् ।

वरतूर्यतडागानां चतुष्कशतविस्तृतम्  ॥ ८६ ॥

वने सुहृच्चयोगाश्च सर्वकर्मफलोद्वहाः  ।

शृङ्गसङ्गितया स्थाने गायंतीव मदालसां व –सा  ॥ ८७ ॥

अमृताम्भोभिरत्यर्थं ये सुगुल्मलतावृताः  ।

जुषन्ती च प्रियैः सर्वमशोकादि गृहाश्रयाः ॥ ८८ ॥

रामाः ख रामा सुदर्शनाज्जम्बूगन्धमादनमूर्ध्वगाः ।

महाकुम्भफलाटोपविटपायुतविस्तृताः ः ॥ ८९ ॥

पततां तत्फलानान्तु जीर्णानां रसवाहिनी ।
दक्षिणीकृत्य देवा दृंसुर्शि च सुशिरामुहुः ॥ ९० ॥
वापीनां सरसः प्रोक्तं भिन्दन्त्या लोकसंस्थिताम् ।
तटं तूपगता ये तु वल्लिगुल्मलतादयः ॥ ९१ ॥
विकिराः सप्त दृषदः सर्वे ते रुचिरात्मकाः ।
सर्वाधस्ताच्चतुर्दिक्षु नवसाहस्रविस्तरे ॥ ९२ ॥
इलस्तत्राभिषिक्तस्तु अग्नीध्रेण महात्मना ।
नभोऽनुभानुसन्तप्ता सलावृतगता जनाः ॥ ९३ ॥
जनास्ते पुण्यकर्माणो रत्नसानोरिलावृताः ।
कृतान्ते तस्य निषधो मेरुतुल्यो महीधरः ॥ ९४ ॥
बालहेलवपुर्मेरोः समाभिर्माल्यवान्गतः ।
धर्मोदकयुतः सो हि द्वासहस्रायुतत्रयम् ॥ ९५ ॥
सूर्यकान्तशिलानद्धसहस्रब्धी समण्डलः ।
श्वेतस्य पश्चिमे चैव नाम्ना वै गन्धमादनः ॥ ९६ ॥
सुतार्पिच्च च्चविरसौ श्रेयोनिधिविभागशः ।
तस्याधो दिग्गतं वर्षं पदच्चं केतुमालिनि ॥ ९७ ॥
द्वात्रिंशतिसहस्राणि पूर्वपश्चापरं च तत् ।
उदग्दक्षिणतश्चापि गन्धमादनसंज्ञितः ॥ ९८ ॥
तद्भाजनाः पिपासन्ति मानसं सुरसासवम् ।

इन्दीवरदलाभासो वध्याङ्गायुतजीविनः ॥ ९९ ॥

धूतधाम्नीं सुदितिजाह्वित्वा ए -जाजित्वा सीत्के ए सील्के तु

मालिकान् ।

उद्धूकृताहवा मदमुदितेन महात्मना ॥ १०० ॥

तेनैतत् केतुमालन्तु भद्राक्षमपरं शृणु ।

माल्यवत उत्तराशान्तः केतुमालसमाहितम् ॥ १०१ ॥

भद्रश्चापं ददौ सम्यक् सूनवेऽसौ प्रियं प्रति ।

कलधौतरुचस्तत्र जनाश्चूतामृताशनाः ॥ १०२ ॥

आयुः समायुतं तेषामवलं रूपयौवनम् ।

निषधान् महिषः केतोर्हेमकूटाचलो महान् ॥ १०३ ॥

सुहाटकशिला नद्धसानुरान्धनिसम्बकः ।

श्वेतवत् तत्प्रतिष्ठा तु चितिश्चापि सतद्गृहः ॥ १०४ ॥

वशी तस्य तु यो लोको हरये दत्तवान् हितम् ।

आग्नीन्ध्रो नृपशार्दूलो हरिवर्षं हिते न तु ॥ १०५ ॥

हरिणांकवपुष्मन्तो जनास्तत्र सुदर्शनाः ।

अनन्यजविलासाढ्याः प्ररूपा नवयौवनाः ॥ १०६ ॥

रम्याः ए रम्या फलरसाहाराः सुखिनो रमणायुषः ।

रमणं हरिवर्षञ्च समन्तात् समलक्षणम् ॥ १०७ ॥

हेमकूटान्तिके हेमधन्वाख्यः श्रीधराश्रयः ।

शृङ्गवर्षान्तसंस्थानं शोभा वास्य प्रकीर्त्तिता ॥ १०८ ॥

हिरण्मयसमं राष्ट्रं हिमवद्धेमकूटयोः ।

रत्नागरतं रम्यं तद्गन्धर्वायतच्चविः ॥ १०९ ॥

स्वपिता सुविनीताय कलाकौशल्यशालिने ।

दिण्डीरकं वर्णजनं नाम्ना किंपुरुषं हितम् ॥ ११० ॥

सुप्तक्षोदर्कनिष्यन्द मदिराक्षीव चेतसः ।

तद्गताः प्राणिनः सर्वे सुखिनोऽयुतजीविनः ॥ १११ ॥

प्रालेयरोधसो याम्यें सौम्ये चाद्रिरिव मालिनः ।

कार्मुकाकारसंस्थानं कुरुवर्षं कुरु मानसम् ॥ ११२ ॥

विद्यास्त्रकुशलःश्रीमांस्ताभिस्तत्राभिषेचितः ।

तेन स्वसूनवे ह्येतदृषभाय समर्पितम् ॥ ११३ ॥

तेनाभिविभृतं भूयो भरताय महात्मने ।

तन्नाम्ना भारतं ह्येतत् कर्मार्जनदशावहम् ॥ ११४ ॥

वारिवर्षविभेदोऽस्य वक्ष्यते विष्किरीश्वरः ।

शीतसानोः समाश्लिष्टं नाम्ना बिन्दुसरः सरः ॥ ११५ ॥

तदारभ्याक्षशतिकं चसिमं दुर्जनाकुलम् ।

वा विलुप्तं च तन्मानं दुहित्रे तद् ददौ भुव ः ॥ ११६ ॥

कुमार्यै भरतो राजा सपत्नेन्दुनभोग्रहः ।

वर्षं कुमारिकासंज्ञमतो ह्येतत् प्रगीयते ॥ ११७ ॥

योजनानां सहस्रन्तु नानावर्णसमन्वितम् ।

भूयांसोऽत्र यवीयांसः  संस्थिता कुलसानवः ॥ ११८ ॥

सप्त ते तु प्रवक्ष्यामि श्रूयतां तेन कुम्भज  ।

रैवतः पारियात्रश्च शक्तिमानृक्ष पर्वतः ॥ ११९ ॥

सह्यो महेन्द्रो मलयो धेनु वाहतटे गतौ ।

कन्यकाख्यस्य मध्यस्थं तन्मानं तत् प्रतिष्ठितम् ॥ १२० ॥

पिप्पलान्तरसञ्चारं रम्यं वर्षाष्टकं तथा ।

पुत्राष्टकाय भरतः साभिषेकं प्रयच्चति ॥ १२१ ॥

गान्धर्वौ वारुणः सौम्यो रागश्चापि गभस्तिमान् ।

ताम्रवर्णकसरोबिन्दुर्देशा ह्येषां हिमागमाः  ॥ १२२ ॥

कुमुदोन्नतकल्हाराः वरुणा भूभृतस्त्रयः ।

कोलाहलिः कपिर्नीलो गन्धर्वोऽपि तथैव हि ॥ १२३ ॥

शम्यः शालाचलो नागो नागाद्रिः श्रंथनो निलः  ।

गभस्तिमतिविख्याताः पञ्च तुङ्गा महीधराः ॥ १२४ ॥

विद्रुमः शेवलश्चन्द्रो द्विरेफोऽरुणसानुमान् ।

ताम्रवर्णौ समाग्रस्तु ताम्रपादः शिलाचलः ॥ १२५ ॥

कशेरुक  ः कशेरौ तु गिरिभद्राकरः परः ।

शिखरित्रयस्तथा चैन्द्रभूभृतावमरालयौ ॥ १२६ ॥

नानाश्वापदसंकीर्णाः सारसेन्द्रसमाकुलाः  ।

चित्रयोनिनगोद्यानसुमनोधूलिधूसराः ॥ १२७ ॥

इन्द्रद्वीपस्य संलग्नः परितोयः कबन्धवृत्।

अम्बुगाधमतिक्रम्य तस्यान्तः शतयोजनम् ॥ १२८ ॥

मालालीलांगतं देवि द्वीपषट्काधसंस्थितम्

अङ्गो यवोऽथ मलयः शंखश्च कुमुदाकरः ॥ १२९ ॥

सवराहो गणा ह्येष व ह्यष द्वीपानां परिकीर्त्तितः।

कन्यावारुणयोरन्तर्योऽगाधो मलसञ्चयः ॥ १३० ॥

तन्मध्ये मलयो नाम  सानुमांस्त्रि विभागगः।

दक्षिणेन त्रिकूटस्य सुवेलाख्यश्च वामतः ॥ १३१ ॥

तत्र पूर्वं सुवर्णेन या सा जम्बू सुदर्शना।

तद् वितीर्णा मत्ता लंकाक्षिप्तात्रोद्यत्करालिनी  ॥ १३२ ॥

दीर्घोदर्करसानन्तप्लवङ्गप्लुतिभूमिगः  ।

मलय ः सर्वसौवर्णो बभौ तत्कालगः प्रिये ॥ १३३ ॥

दक्षिणाङ्गे त्रिकूटाख्ये तस्य लंका व्यवस्थिता।

पिशिताशिगणाकीर्णा निर्मिता जम्बूमालिना ॥ १३४ ॥

संक्रन्दनेन तद्वत्सादपहृत्याय जन्मने।

प्रदत्ता तं विनिर्जित्य जग्राह दशकन्धरः ॥ १३५ ॥

विभीषणस्ततो राजर्णभ स्तस्मिन्नसुप्रिये  ।

कन्याख्ये यत् कृतं कर्म जन्तुभिस्तु सितासितम् ॥ १३६ ॥

स्वर्नरकापवर्गेषु तद्बीजं फलभोगजम् ।
अत्रावताराः भूयांसो मम तुभ्यं च पार्वति ॥ १३७ ॥
पवित्राम्भःप्रतिष्ठानां गणरुद्रनिषेविताः ।
कालिन्दी सुरदीर्घिका शतभवा गोदावरी नर्मदा ।
भद्रा कृष्णवती च भीमरथिका तापी पयोष्णी बला ॥ १३८ ॥
सिन्धुश्चापि सरस्वती सरयुका ऐरावती गण्डकी ।
शोणा गोमतिका च चन्द्रविभवा नद्यः पवित्रात्र तु ॥ १३९ ॥
योगिन्यः सकलार्थं वेदविभवा वीरारवा योगिनः ।
वामाचार कृतास्य दामलद्दशस्तन्त्रो कुमार्गाश्रिताः ॥ १४० ॥
शीघ्रं ये षुभिलाषिणः फलभुजो जायन्ति नान्यत्र तु
वक्ष्ये भैरव मातृभूतविभवात्युग्रग्रहाणि स्फुटम् ॥ १४१ ॥
प्रयागचित्रा करवीरहेतुकामेकाम्रका भैरवमट्टहासकम् ।
प्रहर्षशूले सकला मालिनं महाव्रतं गन्धवती च चारणम् ॥ १४२ ॥
विरजा महोदया वालालंपा चेति दशाष्टकम् ।
श्मशानं समाख्यातं निष्पाद्यं तत्र योगिभिः ॥ १४३ ॥
उत्साहबलसंपन्ना लब्धा समरसादरात् ।
योगिनीभ्योऽथ मातृभ्यो गुरोरंघ्रिप्रतिष्ठिताः ॥ १४४ ॥
एवमेतानि वर्षाणि जम्बूद्वीपे स्थितानि तु ।
कुलशैलान् प्रवक्ष्यामि नाख्याता येषु सुव्रत ॥ १४५ ॥

विशालः कम्बलः कृष्णो जयन्तो हरिपर्वतः ।

अशोको वर्द्धमानश्च केतुमालो नगोत्तमाः ॥ १४६ ॥

शङ्खशैवलतापिच्च स्वर्णमायूरकन्धराः ।

पाटलाः पद्मरागांताः क्रमशोऽमी महीभृतः ॥ १४७ ॥

शैवालपर्णौ हरितो गालो गोरोचनप्रभः ।

अभ्रकारश्च कौरञ्जः श्वेतो मारलसन्निभः ॥ १४८ ॥

कृष्णवर्णः स्मृतो नीलः पञ्चामी भद्रसंज्ञिते ।

दर्दुरो दामनखरी सप्तशृङ्गचतुष्टयम् ॥ १४९ ॥

कपाततव भ्रुमाञ्जिष्ठकांस्यलीनक्रमेण तु ।

कुलाद्रिवृन्दगान्धर्वे हरौ युग्मं प्रतिष्ठितम् ॥ १५० ॥

शतशृङ्ऽगोग्निसारश्च सुरसिद्धनिषेवितः ।

दिव्यौषधिसमाकीर्णाः सर्वरत्नालयाः शुभाः ॥ १५१ ॥

चित्रद्रुमलताकीर्णाः सिद्धद्रव्यसमाकुलाः ।

नानाण्डजकलालापाः कोलाहल निनादिताः ॥ १५२ ॥

लवणाम्भोमहामालापरिक्षिप्तमिदं प्रिये ।

जम्बुवर्षं समन्तात्तु लक्षयोजनमानकम् ॥ १५३ ॥

लवणाम्भोत्तरस्थानं दुरातङ्कनिवारकम् ।

यक्षोत्पत्तिविषादाद्या प्रविष्टा ये च पर्वताः ॥ १५४ ॥

नानाधातु महारत्नोधः स्थगितकन्धराः ।

टङ्करत्नशिलीभीषुहासोल्लासितदिङ्मुखाः ॥ १५५ ॥

मरुर्मत्यन्तिके चाशु चिज्जन्मनि त्रयस्त्रयः।

ऋषभो दुन्दुभिर्धूम्रः मूकमेतन्मरुत्पतिः ॥ १५६ ॥

बलाहकस्तथा चक्रो मैनाकः प्राणिहन्तरिः।

चक्रमैनाकयोरन्तः सदाटोपी सवाडवः॥ १५७ ॥

प्रतीच्यान्नारदः सोमो वरोरश्च त्रयोरगाः।

चन्द्रद्रोणस्तथा कङ्कस्त्रयोऽमी जन्मजन्मनि ॥ १५८ ॥

गौविर्ये तु न मतुलं परिक्रम्याद्रिमध्यतः ।

चन्द्रद्वीपं तु तत्रैव सहस्रपरिविस्तरम्॥ १५९ ॥

द्राक्षाफलरसाहारा लोकास्तत्रायुतायुषः ।

स्वच्चमुक्ताफलप्रख्या दर्पकानन्दलालसाः॥ १६० ॥

मृगपत्रैः सहस्राणि चत्वारो जलमध्यतः।

दिव्यभद्राकर ं द्वीपं योजनानां सहस्रकम्॥ १६१ ॥

समायुतायुधो जीवाः प्राचीनफलभोजनाः ।

भारता रूपसंपन्नाः नीरुजः स्थिरयौवनाः॥ १६२ ॥

अब्दिक् सहस्रदशकं प्रविश्य लवणार्णवम्।

सहस्रयोजनायामं वर्षं कुमुदसंज्ञकम्॥ १६३ ॥

तत् प्रद्योतप्रभालोकाः सर्वे तेऽयुतजीविनः।

कराटदफलाहाराः शूर्पकादिविलासिनः॥ १६४ ॥

योजनानां सहस्राणि चत्वार्यापो विलङ्घ्य तु ।

क्रूरकर्तारिकङ्काख्यमयुतां युवतिप्रभाम् ॥ १६५ ॥

सैन्दोदोलर्कफलभुक् प्रद्युम्नललनारसम् ।

अयुतं रविसादृश्यमयुतात् स्वप्रतिष्ठितम् ॥ १६६ ॥

दूती भर्तारिसंघाख्य निःसारफलभोजनाः ।

दरदाः भाजनस्तत्र वर्षाणां युतजीविनः ॥ १६७ ॥

चारोदकफलाहारभोजनाः कम्बुवर्षगाः ।

स्फुरत् कर्मादवर्णाभाः लावण्यजितमन्मथां ॥ १६८ ॥

आपोयुतं व्यतिक्रम्य तद्दशांश प्रतिष्ठितम् ।

चित्रभानोरिदं चित्तं सचित्रजीवसमाकुलम् ॥ १६९ ॥

वारेरेकसहस्रन्तु व्यतिक्रम्य नराधिपः ।

जम्बूद्वीपं सुनाशीरो नवसाहस्रविस्तरम् ॥ १७० ॥

हरिचन्द्रनिभा लोकास्तत्राप्ययुतजीविनः ।

श्रितमालफलाहाराः सर्वैश्वर्यसमन्विताः ॥ १७१ ॥

सहस्रत्रयविस्तीर्णहंसद्वीपंकमन्दिरे ।

जलायुते व्यतीते तु स्वच्चमुक्ताफलप्रभाः ॥ १७२ ॥

रुद्राक्षफलभोक्तारः प्रजास्तत्रायुतायुषः ।

उपद्वीपाष्टकमिदं लवणोदव्यवस्थितम् ॥ १७३ ॥

नृपकुलशैलयुक्तमिदमुक्तमनन्तगुणम् ।

लवणजले शतालुगता वर्षकलासहितम् ॥ १७४ ॥

विविधजनानुरूपफलभोगिविलासधरम् - ।

सरिदमलाम्बुधौतविषयाश्रयजाम्बुनिधिम् ॥ १७५ ॥

स्थविराण्डकटाहेन सुमेरूर्बुध्नमध्यतः ।

पञ्चाशत्तीर्थकोटीनांसमन्तात् पृथिवीतलम् ॥ १७६ ॥

स्वर्गङ्गावारिवेलाकवलितशिखरालंवितोद्दीपमान ।

न प्रक्रीडावनोदादमरकरिविषन्तोपसञ्चन्नसानौ ॥ १७७ ॥

लोके सव्रातपत्त्रोद्धृतखुरशिखरोत्खातगर्ते विचित्रे ।

श्रूयन्ते नीलकण्ठामलचमरचिताः दिव्यवासाः सुमेरौ ॥ १७८ ॥

वज्रनिर्मलमणीन्द्रशिलाभिर्वर्षकोटि कटिगूढनिविष्टाः ।

आत्मभोरयुततूर्यसहस्रा विस्तरोच्च्रयसमानसभाश्च ॥ १७९ ॥

जातरूपविभवोन्नतसानौ ----------

मध्यमूर्ध्वविगतातुलशोभाः ॥ १८० ॥

सा मनोवतिरिति प्रकटाख्या भाति देवगणपीठसुपूर्णाः ।

तस्याः ककुप्स्वष्टसु सौधधाम्नाम् ॥ १८१ ॥

शाला विशाला वलयान्तरूपा ।

ऋक्सामगीतध्वनिमन्त्ररम्या : विधौत चित्राः शशिकान्तवार्भिः ख -

वाग्भिः ॥ १८२ ॥

तपोवनं वेदशिरोऽतिरम्यं ।

दृशोर्वितानं  शतयोजनं तत् ॥ १८३ ॥

दक्षाश्रमो हेम विशालशालो नभः स्वभिभ्राजति सुप्रपूर्णः ।

वसिष्ठवेदध्वनिलब्धनिद्रः स्थितोऽलकापुण्यजनाश्रमोऽन्यः  ॥ १८४ ॥

या ख यां शिन्यविभ्रान्तपवित्रतोयं मित्रस्य विश्वा पदमस्य धामः ।

तपोवनं - संयुगवल्लभस्य निशाधिनेतुर्दिशि धर्मपूर्णें ॥ १८५ ॥

विशुद्धचामीकरकुण्डिताचले स्थिताचचक्षे स्थितिपा मदश्रीः ।

तत्कापिलं कापिलवृत्तिविप्रैः समाकुलं धामतनूरुपस्थम् ॥ १८६ ॥

यत्रास्ति सूत्रश्रुतिघोषपुष्टम् तपोवनं देवपितुश्च रम्यम् ।

सुरापगाक्षालनपुण्यभूमिम् सुरद्रुमः सुस्त्रवकाङ्क्षिताङ्कनः   ॥ १८७ ॥

सदाफला सामकृतालया ः लताः सदाश्रमा भान्त्यतिरम्यया  श्रिया ।

तपन्ति तेषु मुनीन्द्रभास्कराः सुधाम्धसो ज्ञानविशुद्धबुद्धय ः ॥ १८८ ॥

स्तपोधनानन्दपरिच्चदानघा स्वचित्तवित्तोद्भवयोगजन्मनः ।

चतुराननककुभिः प्रतिष्ठित सकलमणिशिलानिलयम् ॥ १८९ ॥

शतधामकरामलचापपुञ्ज मुञ्जविलासम् ।

दशशतयोजनविपुलं तदुच्च्रयं सुप्रभावितानधरम् ॥ १९० ॥

ज्योतिष्कशिखरसंज्ञं धाम मृगाङ्काङ्कितजटस्य

स्वच्चच्चविमुक्ताफलविमलहिममुक्तमालशेखरिभिः  ॥ १९१ ॥

विषमविलोचनहुतभुग्भाण्डमण्डलवेष्टितमुखाब्जैः ।

सौदामिनीलतान्तककरशिखरमहाशूलपाणिभिरमेयैः  ॥ १९२ ॥

जन्तुजास्थिरचितभूषणविचित्राङ्गैर्नरकपालकरैः ।

दलितेन्द्र नीलशकलानुकारिवरात्ममौलिफणिपदकैः ॥ १९३ ॥

शिवमण्डलैस्समन्तात् समाकुलं रौद्रभोगधरैः ।

शिवकामिनीकपोलेंदुचन्द्रिकापूरितो हरिनिवासः ॥ १९४ ॥

क्षीरोदायनिसुरतरुशशिलक्ष्मीरत्नसंपूर्णः ।

अट्टढरावहासोऽमलांशुर्मालाकारः स्थितो भाति ॥ १९५ ॥

मुक्ताहारसरोद्दामसुलम्बकसनाथ  सुलम्वक इव ।

प्रथम व प्रमथ गणकलकलस्वनमहास्वनानेकघण्टिकामुखरः ॥ १९६ ॥

हडुवृषोत्थैः शब्दैः पयोधिमथनध्वनिविशालस्तत्र स्वचित्तजन्मनि

महासदोधिष्ठितं मदनकेतोः ।

सुरसिद्धकिन्नरोरगपिशिताशनयक्षरुद्रभृतम् ॥ १९७ ॥

अजिनेन्द्रशताति ख शतानि निर्मलचामराटोपमालितांघ्रियुगः  सेव्यति

वृषोत्थ लक्ष्म्या स प्रेयान् सेवकैस्तस्याः ।

तस्यैवाम्बुजयो शिःदूल भुजि कलधौतसच्चिला ॥ १९८ ॥

शशिमण्युपास्नुत सलिलनिर्झरं भास्वरं सानु ।

तत्र विमलमणिरचितधरातलोपेन्द्रदर्शना वसति ॥ १९९ ॥

तारोदयेति नाम्ना सुपर्णखरनखरनखरवत् तरसा ।

पञ्चशतयोजनोच्चं शैवं तन्मण्डलं भाति ॥ २०० ॥

गगनाङ्गणतटघटित ँ प्रतिमेव हि श्रुतिं पूर्णाः ।

तासामधोर्ध्वभागे चरयुग्मसहस्त्रयोजने धाम्नि ॥ २०१ ॥

तन्मानविस्तरोच्छ्रयविलासिनी चक्रवातघटा ।

विविधपुरमदमत्तगनलीला परिघटनसङ्कटारम्यासिसंघादप्य भया

सुरयोधसंस्थिता भाति ॥ २०२ ॥

गगना भाजकरटकोटरमदाम्बुना प्रशंसितरजस्काः ।

अमरावतीपुरस्य प्राक् ककुभि मन्दिरो हृद्यः ॥ २०३ ॥

तस्यां शतधारकरः सुरवनिताहृदयनन्दनो वसति ।

मन्दारकुसुममदलुब्ध भृङ्गझाङ्कारललिता या ॥ २०४ ॥

तनु दिग्विचित्रभोगा रत्नावती विविधरत्नतटविकटा ।

वसुनिलया जनरम्या वसुभिः प्रतिपालिता वसति ॥ २०५ ॥

तस्याप्यनङ्गमदमुदितकामिनीकामुकाकुला विपुला ।

चन्द्रमसि चन्द्रधवला चित्त्रासौ कामिका नगरी ॥ २०६ ॥

अर्यमभुजदण्डार्गलरुद्धतृप्तारिधारणावेशा ।

तस्यापीन्दोः कान्ता नाम्ना सुरपुरी रम्या ॥ २०७ ॥

शशिशकलमौलि घनकिरणमञ्जरी जालपटलहृततिमिरा ।

शूलभृतो विश्वभर्तुरियं यशोवती नाम पुरी दिव्या ॥ २०८ ॥

प्रत्यगीशस्य पुरी परिनिर्मित धूर्तमण्डला पूर्णा ।

परिनिर्मितेति निर्मिते नाम्ना पुष्पेषुविलासलीलाढ्या ॥ २०९ ॥

समसमविलोचनवनितामुखशशधरकिरणमञ्जरी जटिला ।

तत्पश्चिमेपि नाम्ना सुकामदा वृषभकेतूनाम् ॥ २१० ॥

निधिनिचयपूर्णगर्भा तत्पश्चिमतोऽलकाकुला यक्षैः ।

यक्षवधूगणभूषणमणिकिरणालिङ्गितदिगन्ता ॥ २११ ॥

निर्मलदक्करत्नप्रणालिनिर्धार्णधौतगृहचित्रा ।

शशिविमलमण्डलाभा सोमस्य महोदया नगरी ॥ २१२ ॥

सुमनापि किन्नराणां वीणारवमुखरदिगङ्गनाभोगा ।

तदनु येदेर्श रव येदर्श कंदर्प्पदर्पितानेकजनविपुला ॥ २१३ ॥

षड्जातिस्वरकलतारमन्द्रझङ्कारमूर्च्छनासुखदा ।

नाम्ना महोत्सवेति च गन्धर्वपुरी तु तत्पश्चात् ॥ २१४ ॥

हरितमणिदृशदमेयप्रकटतटाघात्मन्दिराभोगाः मन्दिरा ।

तन्निकटे वरनगरी कुमुदेति च कुमुददेवानाम् ॥ २१५ ॥

वृषदंशलोचनोपमरत्नशिलाघटितमन्दिराटोपा ।

गन्धवती गन्धमुचो गन्धवती सुगन्धिनी दिव्या ॥ २१६ ॥

मेघचितामलमणिकिरणमञ्जरी जालशालिता भाति ।

मरुता तद्दक्षिणतो मेघवती मेघगम्भीरा ॥ २१७ ॥

वृन्दारकसुरसुन्दरीलालसमदनगमनमदसरोजसः ।

वृन्दारकं नामधनं नगरं तु ततः परं भाति ॥ २१८ ॥

मदननिकेतनगुणचितचलसंपत्तनं श्रियोपचितम् ।

नाम्ना सुकान्तकान्तं ततः पिडद्याधराणां स्यात् ॥ २१९ ॥

स्वच्चमुक्ताफलोन्नतविटङ्कगृहमालिकाः।

शशाङ्कधराः भाति वरुणस्य वरुणे शुद्धवती गगनभित्तिरिव॥ २२०॥

मित्रावरुणभुजार्गलपालितलक्ष्मी मनोभवाघ्राता।

भक्ता विशोकलोकैर्नाम विशोकापुरी रम्या॥ २२१॥

अजितवधूजनविशनी नयनांबुजविकचमण्डला भाति।

सद्दीर्घिकेव रम्या तदुपार्जितसंज्ञका नगरी॥ २२२॥

गुह्यकनिलयाभ्युन्नतपयोधरालोकदीपितानङ्गा ।

प्रावृडिव पुरी राजति तत्तत्कोलाहला विपुला॥ २२३॥

पारदशिलातलोचितहर्म्यप्राकारतोरणाटोपा।

कृष्णवती क्रूरतमेन्द्रपालिता बलभुजि विशाला॥ २२४॥

पितृतरुणपुरन्ध्रीमुखेन्दुचन्द्रिकाविहितनिबिडतिमिरपटा ।

घनवर्णमहिषखरपुटशिखरोत्खातधूलिपटपिहिता॥ २२५॥

तस्याः प्रागभ्यासे सुकालिका वसति जनबहुला।

शुभ्रा प्रमर्दनां वनिताजनमुषितलावण्या॥ २२६॥

नाम्ना प्रमर्दना नाम मर्दितारिभटसङ्कुला।

तत्प्राक्प्रत्यग्रविकासितानलसङ्कासोच्चुष्मतोयसम्पन्ना ः॥ २२७॥

विविधपिशाचवधूगणविराजिता पिङ्गलालि वैवस्वती विवस्वतो नगरी

परिपालिता वसति।

विमलेन्द्रनीलमणिकिरणतन्तुपरिरचितमेव यदुपद्रुता ॥ २२८॥

लोहितविधुबुधधूवदनहेला विमलाञ्जना च ततः ।

हाटकशिला विटङ्कप्राकारा व्यूहमण्डलाभोगा ॥ २२९॥

नन्दा नगरीध्याता हारामरसेविता तत् प्राक न सत्यानन्त विलासिनी।

विलासा अमृताम्बुमदमुदिता नगरी शिवतीति कृष्णपिङ्गला भाति॥

२३०॥

शिश्विपश्चात ख -पश्चान्ते सुरबींद्वमृताहुतितृप्तवह्निगन्धाकुलानल

ललिता

तेजोवतीति सर्वा सेन्दुरपि गर्भिणी भाति॥ २३१॥

शिखिशिखरभासितुङ्गप्राकाराक्षिप्तमन्दिरारामा।

पूर्यंशुमालिनीह्यंशु मालिनस्तदुदगाद् भाति॥ २३२॥

विनयवतीति च विनतानन्दसुन्दरी पतितपत्त्रकविभूषा ।

पुष्पेषुरसासवमन्नजलपदा चापि तत् सौम्ये॥ २३३॥

विश्वामरातिलालसवनिता मुखकिरणविद्युदुल्लशनैः ।

विनिहतचलांधकारा तदुदग्विद्युत्प्रभा वसंति॥ २३४॥

इति विविधभोगसंपत् सुखान्वितोनेकजनसुराकीर्णाः।

पुर्योऽमरनगरोद्ध्वें प्रकाशिता लेशतो नृपतेः॥ २३७॥

पञ्चाशतिकास्तु सर्वे लोकेश्वरपालिता पुरोद्देशाः।

शतिकाप्य विशिष्टास्ते शेषसुरनिकायि कुलवासाः॥ २३८॥

कथितमिदमनन्तं भूतले भूति भोगम्

पुरजलधिसमेतं द्वीपयुक्तं समानम्।

सुरगिरिकृतधाम्नां सम्पदो वर्णिताश्च

शृणु हिमगिरिसुनोर्नाकलोकेऽधुना त्वम्॥ २३९॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्रे प्रथमषट्के कालसङ्कर्षण्याम् अष्टमः पटलः॥ ८॥

नवमः पटलः

श्रीभैरव उवाच ।

धरातो योजनाल्लक्ष्यो भान्वन्तः स भुवः स्मृतः।

पतयो विष्टपानान्तु तत्र वस्वादयो मताः॥ १॥

धारो ध्रुवोऽथ सावित्रः सोमोऽन्यो ह्यनिलोऽनलः।

प्रत्यूषश्च प्रमोदश्च वसवोऽष्टौ प्रकीर्तिताः॥ २॥

अङ्गारकस्तथा सर्पिर्निहतः निऋतः सदसत्पतिः।

अजश्चैवैकपादश्च धूमकेतुर्जरस्तथा॥ ३॥

भुवनेशः कपालीशो मृत्युश्चैकादश स्मृतः।

एकादशामी तनवो निर्गता वपुषो मम्॥ ४॥

जरामरणनिर्मुक्ता मुण्डखट्वाङ्गधारिणः।

कपालमालाभरणाः सभुजाङ्गाः स्वचक्षुषः॥ ५॥

कल्माषकलकाः शुभ्रा विधुलेखाङ्कितोत्तमाः।

विविच्येतोदः प्रोक्तो नाम्ना भास्वन्ति चाव तु॥ ६॥

धातार्यमा भगो मित्रो वरुणेन्द्रौ जघन्यकः ।

विवस्वान्विष्णुपर्जन्यौ पूषापि च जगत्पतिः ॥ ७ ॥

कश्यपे नादितेर्जातास्तेनादित्याः प्रकीर्त्तिताः ।

तुलादौ संक्रमंत्येते राशौ राशौ पुनः पुनः ॥ ८ ॥

योजनायुत विस्तीर्णा अतो ह्यमरसम्भवाः ।

पंचारचक्रमेकन्तु सहस्रद्वयविस्तरम् ॥ ९ ॥

वाजिनः सप्त साहस्राः सप्त सामाङ्गसम्भवाः ।

यज्ञरूपसहस्राणि चत्वार्युरगयोत्क्रकम् ॥ १० ॥

ऋग्यजूंषि धुरे शक्रो वरुथिः परिकीर्तिताः ।

धर्मेन शतमोक्षस्तु कडुनी द्दक्स्त्रवा मता ॥ ११ ॥

अनुकम्प्यात्मनो रंहो वर्णयोनिर्गतिः स्मृता ।

यत् तद् धाम परं तस्मिन् नवसाहस्त्रविस्तरम् ॥ १२ ॥

सहस्राभीषु संपन्नममलं दीपवर्तिवत् ।

तदारूढं जगत्यस्मिन् प्रतताप ववर्ष च ॥ १३ ॥

सञ्जहारासृजच्चैव ववाप च सदैव हि ।

शक्रक्रीडाचलस्योद्ध्वें ह्यधोमानं तपत्यसौ ॥ १४ ॥

लोकालोकान्तरस्यापि विचित्रे विष्टपद्वये ।

पूज्यमानोऽधिपस्यांत स्थापिन्यां भूर्भुव सुवः ॥ १५ ॥

सर्वरूद्राभिधानाद्या मृत्युरिच्चानियोगतः ।

एषादित्यः समाख्यातः परापरविभागशः ॥ १६ ॥

तस्योपरिष्टाल्लक्षेण सम्पूर्णं चन्द्रमण्डलम् ।

भास्वतो द्विगुणं तद्धि तद्रथश्च तथैव हि ॥ १७ ॥

सोमो दशभुजः शुभ्रो रथोऽप्यस्य त्रिचक्रवान् ।

संतारकं स्मृतं चक्रमेकैकं मुनिनन्दन ॥ १८ ॥

सप्तमस्तुहिनाभस्तु तं विवर्षन्ति षोडश ।

नवस्यन्दनवाहाश्च शुकपिच्चत्त्विषो मताः ॥ १९ ॥

तदूर्ध्वमेकलक्षेण भाति भामण्डलामयी ।

तस्माल्लक्षद्वयेनैव ज्ञेयज्ञानिषु तु विराजते ॥ २० ॥

ततोर्ध्वं च द्विलक्षेण स्फूर्जिततेजसा गुरुं ॥ २१ ॥

लोहितो लक्षयुग्मेन तदूर्ध्वे च गुरुस्तथा ।

वैवस्वतो द्विलक्षेण तस्योपरि तपोधनः ॥ २२ ॥

संस्थिता लक्षमात्रेण सप्त तान् नामभिः शृणु ।

विश्वामित्रो वसिष्ठश्च भरद्वाजोऽत्रिवत्सरौ ॥ २३ ॥

गौतमो जमदग्निश्च प्रोक्ता ह्येते तपोधनाः ।

लक्षैकेन ध्रुवस्तस्मान् मेषीभूतो व्यवस्थितः ॥ २४ ॥

तस्या चोत्तानपादस्तु भगवानुतरो हनुः ।

यज्ञश्चैवाधनो धर्मो मूर्द्धानः परिकीर्तिताः ॥ २५ ॥

हृदि नारायणस्तस्य मित्रः पाणौ व्यवस्थितः ।

प्राक् वरुणो वह्निः सव्ये पश्चिमे चार्यमा सुधीः ॥ २६ ॥

मारीचिः कश्यपाग्नीन्ध्रौ स्वच्चः संवत्सरो ध्वजः ।

ध्रुवोंका व रव ध्रुवोका स्मृतो ह्येष स चतुर्दशतारकः ॥ २७ ॥

स्वर्लोकः कीर्तितो ह्येष भवः स्वप्रतिपालितः ।

अत्र ते वायवः सन्ति स्वं स्वं प्रति समाश्रिताः ॥ २८ ॥

धराधरोऽन्तरालस्थः प्रथमस्त्वावहो मरुत् ।

स्वर्भानोरद्वितीयस्तु प्रवदाख्यः प्रभञ्जनः ॥ २९ ॥

उद्वाहाख्यो निलस्कन्धः सोमो दघ्र्ये व रव दघ्र्य व्यवस्थितः ।

चतुर्थः संवहो भान्तो वायुस्कन्धः प्रतिष्टितः ॥ ३० ॥

सौमि सौम्यांतरंगस्थो निवहो मारुताश्रयः ।

मुनिमण्डलरुद्धस्तु स्कन्धश्चैव परावहः ॥ ३१ ॥

ध्रुवान्तः सप्तमः स्कन्धः स्थितः परिवहः शुभः ।

स्युर्विष्टपगता ये च निकाया देवतात्मकाः ॥ ३२ ॥

दुश्चवनादिकाश्चित्रास्त्रिदशाश्चाग्निष्टान्तकाः ।

निन्दितो वशवर्ती च परिनिर्मिस्तथा खगः ॥ ३३ ॥

सर्वे संकल्पसिद्धास्तु शतायुः कामभोगिनः ।

उडुराजाभदेहास्तु वृन्दाराष्टगणैर्युताः ॥ ३४ ॥

प्रवराभिरप्सरोभिः परिवारकृतास्पदाः ।

उर्वीतः कीर्तितं ह्येतत् त्रैलोक्यं जन्तुसङ्कुलम् ॥ ३५ ॥

तस्य मध्ये विमानानामष्टाविंशतिकोटयः।

वसन्ति स्वभुजा दीप्ता निबद्धा वारिरज्जुना ॥ ३६ ॥

यज्ञकर्मरताभ्यस्तु प्रजाभ्यः पुण्यकर्मणाम्।

प्रीणन्ति ते पुनर्लोके भोगदाः संभवन्ति हि॥ ३७ ॥

तद्देर्ध्वे सुमहल्लोको योजनानां द्विकोटिगः।

प्राजापत्याः स्थिता यत्र ते देवाः पञ्चमण्डलाः॥ ३८ ॥

महाभूतानां चरास्तु कुमुदारिभवास्तथा।

प्रमदान्तास्तथा जातां परीतानां चरेऽपि च॥ ३९॥

ध्यानाहारा महाकल्पसहस्रायुष एव ते।

तत्र भीमोऽधिपः ख्यातः क्वचित्तन्त्रे प्रजापतिः॥ ४० ॥

तस्मात् कोषस्तु विपुलो जनलोकप्रतिष्ठितः ।

चतुर्देवनिकायस्तु ब्रह्मा वसति यत्र तु ॥ ४१ ॥

ब्रह्मा पुरोहितो नाम नान्ये ब्रह्मकायिकाः।

महाकायिकाः परान्ये भूताक्षावासिनः सदा॥ ४२ ॥

महादेवा विपोह्यात्र भृग्वाद्या मुनयोऽपि तु।

कोटिर्द्वादशकं चोर्ध्वे तपः संपरिकीर्तितम् ॥ ४३ ॥

अत्रापि संस्थिता देवा आभास्वरमहास्वराः।

महास्वराः सप्त चापि भूताक्षाः प्रकृतिंजयाः ॥ ४४ ॥

ध्यानाहारास्तु ते सर्वे द्विगुणायुषः ऊर्ध्वं प्रतिहत ज्ञानानो

धृताधरभूमिषु ॥

सनकाद्यास्तु पितरश्चोग्रस्तत्राधिपो मतः ।

सत्यलोके परे ब्राह्मे चतुर्देवनिकायकः ॥ ४५ ॥

वितर्कध्यानसुखिनो देवास्तत्र व्युपागताः ।

शुद्धभावविचारस्थाः सत्याभानन्दमात्रतः ॥ ४६ ॥

असंज्ञासंज्ञनामानो यस्मिन्नाध्यानमात्रतः

नो कृता भुवनन्यासा ह्युपर्युपरि संस्थिताः ॥ ४७ ॥

स्वर्गायुषः स्वप्रतिष्ठाप्रदानाधस्ततः सदा ।

सनकाद्याश्च ऋषयो भुवनान्तर्निवासिनः ॥ ४८ ॥

प्रतिष्ठितास्तु लोकाग्रे ब्रह्मात्राधिपतिः स्मृतः ।

सब्रह्मकाः सदैवेत्याः सप्त लोकाः प्रकीर्तिताः ॥ ४९ ॥

अनिवृत्ताधिकारास्तु लोकत्रयनिवासिनः ।

सङ्क्रन्दनादिकस्तेषां महल्लोकोदयः स्मृताः ॥ ५० ॥

महीयंते च सह्येते ये ज्येष्ठनधिकारिणः ।

सत्योर्ध्वे द्विजसंवासो व्योमषट्कयुगेंदुगः ॥ ५१ ॥

सत्यश्चापि समुत्सेधास्त्वन्मुखो गुणरूपतः ।

तस्याधिकारसंस्थानं प्रसन्नं लोकवन्दितम् ॥ ५२ ॥

योगेन कुरुते सृष्टिं तत्रस्थोऽसन्निवारितः ।

ततोऽच्युतस्तमोवासः सुरसिद्धनिषेवितः ॥ ५३ ॥

भूतवद्धि वशो वेदैः सुधर्मैः संप्रतिष्ठितः ।

स तस्मिन् संस्थितश्चक्री पालयेद् विश्वमादरात् ॥ ५४ ॥

संख्यादियोगिनां सिद्धयोगः सम्यच्छ्रियावहः ।

एतद्धामसमाख्यातो मनोपमगुहावहः ॥ ५५ ॥

चतुष्कोटिस्तदूर्ध्वे तु सन्निवासोऽतिलालसः ।

शिवधर्मरतानान्तु भोगस्थानाय कल्पितः ॥ ५६ ॥

अण्डस्यान्तर्गता भोगाः शतांशेनापि योऽप्युणुः ।

समानभाजो विविधास्तस्य किं वर्ण्यते नृप ॥ ५७ ॥

अथातोण्डबहिर्देवाः सन्ति खण्डेन्दुमौलयः ।

कापालिका विरूपालिका विरूपाक्षा जटिला दश ॥ ५८ ॥

बहवो दिक्प्रमाणाश्च ते दिग्भिः प्रेतारुढा मलाविलाः ।

बालभास्करभाभासः शूलिनः कृत्तिवाससः ॥ ५९ ॥

तेजोनिधिवलाग्रास्तु सुप्रतिष्ठानयोगिनः ।

जगत्यस्मिञ्जगद्योने मधुना परिपालिते ॥ ६० ॥

तेषां नामानि वक्ष्यामि सन्देहविनिवृत्तये ।

कापिलको ह्यजो बुद्धो वज्रकायः प्रमर्दनः ॥ ६१ ॥

विभूतिरव्ययः शास्ता पिनाकी त्रिदशाधिपः ।

प्राच्यामेते महावीराः सुराशीरर्चिताः पराः ॥ ६२ ॥

अग्निरुद्रो हुताशी च पिङ्गलः स्वादको हरः ।

ज्वलनो दहनो वभ्रुर्भस्मान्तकः क्षयान्तकः ॥ ६३ ॥

तेजस्येते सुतेजस्कास्तेजसाराधितांघ्रयः ।

स्वाभियोगं प्रकुर्वन्ति सर्वत्र प्रभविष्णवः ॥ ६४ ॥

याम्यो मृत्युहरो धाता विधाता कर्तृऽ मतः ।

कालरुद्रो धर्मपतिरधर्मपतिरेव च ॥ ६५

संयोक्ता च वियोक्ता च दक्षिणस्यां दिशि स्थिताः ।

विचरन्ति भवा ह्येते पूजिताः कृष्णलक्षणाः ॥ ६६ ॥

नैर्ऋतो मारणो हर्ता क्रूरदृष्टिर्भयानकः ।

ऊर्ध्वशेषो विरूपाक्षो नीललोहितदंष्ट्रवान् ॥ ६७ ॥

ते मोदन्ते महादेवास्ते भोजनयवीयसः ।

स्वाभियोगं प्रकुर्वन्ति पूज्यमानाः स्वगोचरे ॥ ६८ ॥

बलश्चातिबलश्चैव  पाशहस्तो महाबलः ।

श्वेतोर्ध्वजयभद्राख्या दीर्घबाहुर्जलान्तकः ॥ ६९ ॥

तनुवास्यो भीषणश्च यस्यासौ महेश्वरः ।

मणिधात्र्योज्यमानास्तु पालयन्त्यण्डमुत्कटम् ॥ ७० ॥

मरुतार्चिस्त्रापतोऽन्ये संस्थिता मरूदीश्वराः ।

शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णः क्ष्यान्तकाः ॥ ७१ ॥

पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः ।

जटामुकुटधारी च चित्रमाणिक्यधृक् परः ॥ ७२ ॥

निधीशो रूपवान् धन्यः सौम्यदेहः प्रकाशावान् ।

प्रवाहो लक्ष्मिधामान्यः कामरूपी दिगुत्तरे ॥ ७३ ॥

द्रविणः सशिरोमौलिरभिज्ञानाङ्किताङ्घ्रयः ।

रमन्त्येते महावीरा ः निधिलक्ष्म्याव गूहिताः ॥ ७४ ॥

विद्याधिपो ज्ञानधरः सर्वज्ञो वेदपारगः ।

माता पिता पिङ्गलाक्षो भूतयोबलिभिः प्रियः ॥ ७५ ॥

सर्वविद्याविधाता च सुखदुःखकरः परः ।

सितकण्ठःसितग्रीवः शितिकण्ठप्रपूजितः ॥ ७६ ॥

रुद्रविथौ विचेष्टन्ति स्वप्रभा रु सप्रभाः परिवेष्टिताः ।

शंभुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः ॥ ७७ ॥

संवाहको विवाहश्च नभोलिप्सुर्विचक्षणः ।

मेधसा पूजिता ह्येते तिष्ठन्त्युपरियोगिनः ॥ ७८

प्रभुवीर्यसमाख्याताः स्वाधिकारकृता पराः ।

अनन्तः पालको वीरः पातालाधिपतिस्तथा ॥ ७९ ॥

नृपो वृषधरो धैर्यो ग्रसनः सर्वतोमुखः ।

सुशुभ्रश्चाप्य नाम्नामीदश रुद्राः प्रकीर्तिताः ॥ ८० ॥

शारङ्गवपुषो मूर्द्धमणीन्द्रकिणितांघ्रयः ।

भयोर्मिहन्यमानस्य ब्रह्मणोऽण्डस्य सुव्रत ॥ ८१ ॥

फलं न नौमि गरूढा रक्षन्त्येते महेश्वराः ।

तत्रप्रोक्तमनन्ताख्यमिदं तत्र- चित्रमिदंत्वितम् ॥ ८२ ॥

दशधास्य बहिर्वृन्दमवासं शिवसङ्कुलम् ।

निधने समनोभाभिर्वीरास्ते तत्र संस्थिताः ॥ ८३ ॥

स्वनियोगकृता देवाः स्वाकाण्डादित्यविग्रहा ।

अमरेशं प्रभासञ्च नमिषं पुस्करं शडिम् ॥ ८४ ॥

दिण्डिं च भारभूतिञ्च लकुलीशं तु चाष्टमम् ।

प्रत्यात्मिकाष्टकमिदमतो गुह्यातिगुह्यकम् ॥ ८५ ॥

तत्तेजसि स्थितं वत्सबीभत्सं बलशालि च ।

हरिश्चन्द्रश्च श्रीभूभृन्महाकालस्तृतीयकः ॥ ८६ ॥

आम्रातकेशजल्पेशमध्यकेदारभैरवाः ।

गया चैव कुरुक्षेत्रं नखलं कनखलं परम् ॥ ८७ ॥

विमरेश्वराट्टहासं माहेन्द्रं भीममष्टमम् ।

गुह्याष्टकमिदं मेरुसूक्ष्माक्रान्तं ह्यधोगतिम् ॥ ८८ ॥

करालाण्डं दुराण्डञ्च माकोटं मण्डलेश्वरम् ।

कालिञ्जरं दारुवनं शङ्कुकर्णं कुलेश्वरम् ॥ ८९ ॥

व्योम्नीदञ्च पवित्राख्यं स्थानमन्यदहङ्कृतिम् ।

वस्त्रापदं रुद्रकोटिमविमुक्तं महालयम् ॥ ९० ॥

गोकर्णं भद्रकर्णञ्च स्वर्णाक्षं स्थाणुमष्टमम् ।

चत्वारिंशदमी वीरास्तत्त्वपञ्चकवासिनः ॥ ९१ ॥

ग्रन्थ्युत्थकापरणै सूक्ष्मभूतवपुर्भुजः ।
अतो महातिदेवानां योनयोऽष्टौ वसन्ति हि ॥ ९२ ॥
पैशाचं राक्षसं याक्षं गान्धर्वं त्वैन्द्रमेव च ।
प्राजापत्यञ्च चान्द्रञ्च मेधाष्टकसमुदाहृतम् ॥ ९३ ॥
आशां तन्मात्रजेभ्यस्तु भूतेभ्यस्तत्र भोगगः ।
सम्बन्धः संभवत्येष विग्रहेशवशाङ्कितः ॥ ९४ ॥
तपान्वादितिवासीनां पिशाचादिदिवौकसाम् ।
ब्रह्मणोद्भूतभोगेभ्यः पिण्डभूता भवन्ति हि ॥ ९५ ॥
यथास्थानं महीयन्ते विकारवशानुगाः ।
सप्तस्वेव महाभागाः पदवीषु तथाङ्किताः ॥ ९६ ॥
शिरोव्रताभिषिक्तास्तु वेदान्तविदुषो जनाः ।
ब्रह्मलोकं महाप्राप्ता ब्रह्मभोगेषु भोगिनः ॥ ९७ ॥
कारणं शक्तिक्षुभितोस्त्वेकदेशो गुणात्मनः ।
अव्यक्तत्वाञ्च्युतो व्यक्तं प्राप्तो भावमखण्डितम् ॥ ९८ ॥
उत्पत्त्यभिमुखीभूतो वस्तूनां यः समाश्रयः ।
सोऽण्डं प्रगीयते लोके सूरिभिर्जातिरूपजः ॥ ९९ ॥
तदन्तर्जन्तुजातस्य कार्याणि करणानि च ।
गौणानि तानि प्रोच्यन्ते बुद्धिशेषं वद प्रिये ॥ १०० ॥
गन्धरूपरसस्पर्शशब्दश्च विषया मताः ।

एतेषामप्युपादानं पृथिव्यापोऽनलवायुखम् ॥ १०१ ॥

भूतान्येतानि येषां हि निर्विशेषाणि योनयः ।

तन्मात्राणि तथैतानि गुणैकैकोत्तराणि च ॥ १०२ ॥

शब्दतन्मात्रतः शब्दगुणयुक्तं भवेत् ततः ।

कारणैर्विविधैरस्य कार्यं दृष्टं यतः प्रिये ॥ १०३ ॥

स्पर्शतन्मात्रतः स्पर्शगुणयुक्तो मरुद्भवेत् ।

रूपतन्मात्रतो रूपं गुणयुक्तः स चोष्णगः ॥ १०४ ॥

रसलक्षणयुक्तोऽयं रसतन्मात्रतो भवेत् ।

गन्धतन्मात्रतो गन्धगुणयुक्ता वसुन्धरा ॥ १०५ ॥

एकैकगुणोत्तरत्वं पुनरेषां प्रतिष्ठितम् ।

स्थूलसूक्ष्मसमावेशात् तत्त्वानि क्रमशः प्रिये ॥ १०६ ॥

सूक्ष्ममेकगुणं व्योम तस्मात् स्थूलोऽनिलः मतः ।

सूक्ष्मेण व्योम्नादिपृष्ठो वासिष्ठो द्विगुणश्चलः ॥ १०७ ॥

शब्दं स्पर्शं च भजते सहजं गन्तृसंस्थया ।

सांयोगिकः शब्दः स्पर्शोऽस्य सहजो मतः ॥ १०८ ॥

सूक्ष्माभ्यां व्योमवायुभ्यामाविष्टः स्थलगः शिखी ।

शब्दः स्पर्शश्च रूपोऽधस्त्रिगुणः स्मृतः ॥ १०९ ॥

चतुर्गुणा भवन्त्यापः सूक्ष्मव्योमानलानिले ।

अविष्टे शब्दसंस्पर्शरूपास्वादगुणातिमिका गुणातिमिकाः ॥ ११० ॥

सूक्ष्मैरवादिभिर्युक्ता रवः पञ्चगुणो भवेत् ।
शब्दं स्पर्शञ्च रूपञ्च रसो गन्धो गुणा मताः ॥ १११ ॥
गन्धादीनामपूर्वञ्च स्थूलं सूक्ष्मं तथा परम् ।
भूतपञ्चचतुस्त्रीणि द्विरेकगुणसंस्थितम् ॥ ११२ ॥
उपादानानि वै तेषां भूतादेः सर्वभागतः ।
वैकारिकात् तेजसानां योगाज्जानाति हेलया ॥ ११३ ॥
पञ्चतन्मात्रसंज्ञानि तावन्मात्रस्वरूपतः ।
शब्दतन्मात्रकं स्पर्शं तन्मात्रं रूपसंज्ञकम् ॥ ११४ ॥
तन्मात्रं रसतन्मात्रं गन्धतन्मात्र एव च ।
एतद् दशविधं कार्यं शृणु देवोद्भवं त्वतः ॥ ११५ ॥
वैकारिकादहङ्कारभागाद् भूतादिनेत्वरम् ।
तैजसेन युताक्षाणि आसां वैकारिकाणि तु ॥ ११६ ॥
एकादशैव श्रोत्रं त्वक्चक्षुर्जिह्वा च नासिका ।
बुद्धीन्द्रियाणि जल्पन्ति पंचैतानि मनीषिणः ॥ ११७ ॥
वाक्पाणिपादपायुञ्च सोपस्थानगुदेव हि ।
पञ्चकर्मेन्द्रियाण्याहुश्चित्तं चैवोभयात्मकम् ॥ ११८ ॥
तन्मात्राणामिन्द्रियाणां योनिस्त्रेधाप्यहंकृतिः ।
वैकारिका तैजसी च भूताद्याख्या तु तामसी ॥ ११९ ॥
अतः परंत्वष्टरूपमहंतत्त्वमहं कृतः ।

जनकं गुणकार्यञ्च त्रिदशाङ्कमिदं प्रिये ॥ १२० ॥

कारणं यद् विभागाय बुभुक्षुर्योजयेत् पशुः ।

मनीषाष्टविधं रूपं विविक्तमिव धारयेत् ॥ १२१ ॥

विद्यावैराग्यश्रेयांसि ऐश्वर्याणि पदूनि च ।

सात्विकानि तु रूपाणि प्राकृतानि भवन्ति हि ॥ १२२ ॥

वैकृतानि गतान्यत्र स्वचित्तकपिलादिषु ।

सनन्दनमनुक्रान्तं सनकं तेषु चेतसः ॥ १२३ ॥

ऊहादिसाधनोपायनिरपेक्ष्याणि यानि तु ।

प्राकृतानि तु तान्याहुः प्रकृत्त्यानुग्रहेण तु ॥ १२४ ॥

जातानि वैकृतान्यानि तानि चोक्तविपर्ययात् ।

अज्ञानाधर्ममैश्वर्य त्रिकमेतत् तु तामसम् ॥ १२५ ॥

प्राकृतं वैकृतं प्रोक्तं राजसं च विरागता ।

सापि वै प्राकृता प्रोक्ता वैकृता च मनीषिभिः ॥ १२६ ॥

सर्वाण्येतानि प्रोच्यन्ते वैकृतानि क्रमाच्छृणु ।

ज्ञानमष्टविधं ज्ञेयमूहादेस्साधनांशतः ॥ १२७ ॥

तत्तारञ्च सुतारञ्च तारयंतं प्रमोदकम् ।

प्रमुदितं मोदमानं रम्यं सदा प्रमोदितम् ॥ १२८ ॥

तारकमन्तःकरणे चक्षुः श्रवणे सुतारयन्तञ्च ।

तारयन्तमथाभ्यासादरतायाश्चोपलभ्यते ॥ १२९ ॥

द्विधोपलब्धिविज्ञानं प्रमुदितं मुदा च यत् ।

भूरिशास्त्रार्थजलधिरत्नवत्कृष्य पण्डितैः ॥ १३० ॥

प्रकाशितं विशेषस्थं सामान्यात् तत् प्रगीयते ।

स्वप्नो ध्यानं प्रबुद्धस्य सम्यक्पातं प्रतिष्ठितम् ॥ १३१ ॥

मोदमानं हि तज्ज्ञानं सविस्मृतिः सदैव हि ।

तस्यैवार्थप्रबोद्धृत्वं सम्यङ्मुक्तिविचारकम् ॥ १३२ ॥

रम्यकं तत् समाख्यातं ज्ञानानुभववेदिभिः ।

सांख्यं ज्ञानविदां स्वाप्नं विचारितमनिन्दितम् ॥ १३३ ॥

सोपदेशं प्रदत्तं यत् सदा प्रमुदितं हि धृक् ।

निमित्तमेतत्मुक्तिर्या त्रिविधा सा निमित्तिका ॥ १३४ ॥

ज्ञानोदयाद् रागशमात् सर्वेषां संशयाद् भवेत् ।

दृष्टे श्रुते च विषये वैराग्यं च वितृष्णता ॥ १३५ ॥

नैमित्तिकभेदे सदैतन्नवधा भवेत् ।

नवप्रकारता चैषां भवेद् विषयभेदतः ॥ १३६ ॥

अम्भावसलिला घोरा वृष्टिश्चाध्यात्मिकी मता ।

सुतारा च सुपारा च सुनेत्रा सु मरीचिका ः ॥ १३७ ॥

उत्तमाम्भसिका चेति पञ्चधा यास्तु तुष्टयः ।

अर्जने रक्षणे ख चक्षणे नाशे सङ्गे हिंसासु चैव हि ॥ १३८ ॥

पञ्चानां वैपरीत्येन ह्येतास्त्वाविर्भवन्ति हि ।

तत्सहकारि वैराग्यं निमित्तमभिजायते ॥ १३९ ॥

नैमित्तिकाः प्रकृतिषु लयश्च विकृतिस्तथा ।

आध्यात्मिकाष्टकानां तु चतुर्णां हि यथाक्रमम् ॥ १४० ॥

प्रधानशेमुषी कालभाग्याख्या मुनयो मतः ।

अष्टास्वपि प्रकृतिषु पञ्चानां बाह्यतुष्टितः ॥ १४१

अर्जनादिमहद्दोषदर्शनोचितयोनिषु ।

विकृतिष्वथ भूतेषु लयमिच्चन्ति सूरयः ॥ १४२ ॥

कपिलादीनां प्राकृतव्यक्ताव्यक्तविषयगम् ।

एकरूपं हि वैराग्यं संज्ञानं मोक्षहेतुकम् ॥ १४३ ॥

एवं धर्मोऽपि नियमैर्यमैश्च दश सादरैः ।

विज्ञेयश्चित्रदेहेषु देहिनां सुखदायकः ॥ १४४ ॥

अहिंसा सत्यमस्तेयं ब्रह्मचर्यमकल्कता ।

यमाः पञ्च समाख्याता नियमांच्छृण्वतोर्ध्वतः ॥ १४५ ॥

अक्रोधो गुरुशुश्रूषा च शौचः सन्तोषमार्जवम्

निमित्तमेतदूर्ध्वं यद्गमनं तन्निमित्तिकम् ॥ १४६ ॥

ब्रह्मादीनामहिंसादिसाधनं दशधा च तत् ।

ऐश्वर्यमप्यष्टविधं ज्ञेयं तन्त्रार्थवेदिभिः ॥ १४७ ॥

अणुत्वं महिमानञ्च लघुत्वं त्रिविधं च यत् ।

पिण्डैश्वर्यं वदन्त्यार्या अर्थविदो जनाः ॥ १४८ ॥

प्राप्तिः प्राकाम्यमीशित्वं वशित्वं सर्वकामतः ।

अवसायित्वमेवोक्तं पञ्चमं धृतकं नृणाम् ॥ १४९ ॥

कारणैश्वर्यमाख्यातमस्याद्वापि निमित्ततः ।

नैमित्तिकप्रतीघातो योगिनां भवति प्रिये ॥ १५० ॥

कपिलब्रह्मसनकमनुक्रान्तादिको गणः ।

वैवर्त्तकाभिष्पन्दश्च ऐश्वर्यं प्राकृतं स्थितम् ॥ १५१ ॥

अष्ठधा ज्ञानमप्युक्तं धाममूहादिसाधनम् ।

अमूहादिसाधान्तमतारमसुतारकम् ॥ १५२ ॥

अतारयन्ताप्रमोदं मुदं प्रमुदितसंज्ञकम् ।

तथा प्रमोदमानञ्च अरम्यमसदामुदम् ॥ १५३ ॥

एतन्निमित्तं त्रिविधो बन्धाश्चापि निमित्तकः ।

प्राधानिको विकाराख्यो दक्षिणाख्यस्तृतीयकः ॥ १५४ ॥

बिम्बभिष्वङ्गवैराग्यं वामं वैराग्यसाधनैः ।

अषेष्टिकानां स्थितं तल्लोकादीनां महामते ॥ १५५ ॥

अतुष्टिर्नवधा सावलोका वैदिकयोगिनाम् ।

अनंभा सलिला मोघा तथा धृष्ट्या सुतारका ः ॥ । १५६ ॥

असुरासुरनेत्री चासुरा मारिचिका परा ।

अनुत्तमाम्भसिका सा तु तुष्टिश्च नवमी मता ॥ १५७ ॥

आसां रागनिमित्तों हि नवो नैमित्तिको मतः ।

दशधा चाप्यधर्मोक्तः श्रेयःसाधनसामगः ॥ १५८ ॥

हिंसासत्यं तथाष्टेयं कल्कता भ्रह्मचारिता ।

एते पञ्चायमा प्रोक्ताः क्रोधोऽगुरुसुश्रूषणम् ॥ १५९ ॥

अशौचं चाप्यसन्तोषो नार्जवमित्यनियमाः ।

एतन्निमित्तमुद्दिष्टं नैमित्तिकमधोगतिः ॥ १६० ॥

ऐश्वर्यविपरीतं यदनैश्वर्यं तदष्टधा ।

अणिमा महिमा चैव तृतीया लघिमा च या ॥ १६१ ॥

त्रिविधं कार्यमैश्वर्यं करणाख्यं च पञ्चधा ।

अशौचमपि माख्यातमसंतोषमनार्जवम् ॥ १६२ ॥

एवं सर्वैपरीत्येन क्रियाकारणयोगतः ।

प्रवक्तव्या यतोऽप्यत्र निमित्तादवसीयते ॥ १६३ ॥

ज्ञानस्याप्रतिमं रूपं प्रतिपत्ययमर्थकम् ।

प्राक्प्रणीतमतो वाच्यं प्रतिकूलानुलालनम् ॥ १६४ ॥

मत्तहेतोरतोऽनन्तराकृतत्वादधिष्ठितम् ।

प्रख्याव्याघातहेतुत्वात् प्रच्युतत्वात् स्वरूपतः ॥ १६५ ॥

न केवलं यावदन्यत्रेन्द्रियेऽप्यथ वस्तुनि ।

पटुत्वप्रतिघातं यत्तदतारमिति श्रुतिः ॥ १६६ ॥

असुतारमतो वच्मि शृणु पन्निलनन्दन ।

आवक्रत्रयमंन्तर्पदृक्रिया व्यक्तिहेतुगम् ॥ १६७ ॥

पुंसां प्रख्यानिमित्तादिध्यानविध्वंसनक्षमम् ।

निर्विशेषतया पूर्वं सविशेषतया परम् ॥ १६८ ॥

निर्विशेषविशेषाभ्यां रूपं यत् प्रागुदीरितम् ।

नेह भूयः प्रकल्पेत प्रकृतं शृणु साम्प्रतम् ॥ १६९ ॥

तस्मिंश्चक्रत्रये पूर्वमविशेषक्रियातिगम् ।

विशेषपूर्वमपरं प्रख्यागुणविवेकतः ॥ १७० ॥

स्थितं यदसुताराख्यम् आत्मनः प्रति बन्धनम् ।

दिक्क्रियाप्रसरं मुख्ये तस्मात् तदिदमुच्यते ॥ १७१ ॥

अतारयन्तमनु यत् प्रख्याप्रच्चादलक्षणम् ।

व्यक्तिव्यङ्ग्य क्रमाक्रामी व्यञ्जकोत्साहको हि सः ॥ १७२ ॥

तपोव्यक्तिगरीयस्त्वात् स्वयमुच्चलितोल्वणः ।

प्रक्रियाप्रसरौदार्यविदारणपटुर्दहेत् ॥ १७३ ॥

आम्नायप्रोक्तसंसृष्टानुमानाच्च सदा नृप ।

व्यस्ततामेति मनसो मोहोद्यत् पातयत्यधः ॥ १७४ ॥

अतारयंतमाख्यातमनीषावृत्तिलक्षणम् ।

ऊहापोह स्वप्रतिभां भिनत्त्येव हि साम्प्रतम् ॥ १७५ ॥

अप्रमोदात्मकं वच्मि ज्ञानं वाक्पतिसम्भवम् ।

चीत्कारकरसंश्लेषादाकारकनिगूहनात् ॥ १७६ ॥

आचक्रत्रयविश्लेषाद् वैपरीत्यं ततः शृणु ।

अनित्यनित्यमानित्वाद् अशुभे शुभवेदना ॥ १७७ ॥

प्रख्याख्या मुदितामोदतिरस्काराविकारिणम् ।

वैकृते करणव्राते लयत्वाद् बाह्यवस्तुषु ॥ १७८ ॥

प्रविजृम्भित एवासौ निप्रच्छादविक्लवा ।

मलमायात्मकाद् धर्माद् यदैवोच्चरितासमम् ॥ १७९ ॥

शेमुषीक्लृप्तसंक्लृप्तैः सदाज्ञानमयीं दृशम् ।

तथा प्रमुदितन्नाम यत्प्रोक्तमनिवारितम् ॥ १८० ॥

ज्ञानैकदेशमसकृत्तदपीह विचार्यते ।

प्रकृत्यैव हि ये भावाः स्वप्नरूपा विवेकिनः ॥ १८१ ॥

स्थिताः प्रच्छादकत्वेन शृणु तानि समासतः ।

मित्रामित्रौ लाभालाभौ प्रियद्वेष्यावरिन्दम ॥ १८२ ॥

दासा धन सुता दाराः परं व्यामोहकारिणः ।

शीतातपा दंशकीटविषशस्त्र प्रकारजाः ॥ १८३ ॥

वातपित्तकफोद्भूतदस्युराजभयादिकाः ।

इष्टानां च वियोगाश्च देहयात्रादिचिन्तनम् ॥ १८४ ॥

एवमन्येऽपि ये नोक्ताः प्रियाप्रियविभेदतः ।

प्रियाणां विप्रयोगं यदप्रियैः सह सङ्गमम् ॥ १८५ ॥

प्रियप्रसाधनायैव चिन्तनं वा सुंदुःसहम् ।

वित्तान्वेषणमेवान्यदरिनिग्रहचिन्तनम् ॥ १८६ ॥

दैवोपघातजातानां प्रतीकारप्रवेदना

भूतोत्थानामपि तृप्तप्रविचाराविचारिता ॥ १८७ ॥

तथाध्यात्मिकजातानां रुजानां भेषजादिकाम् ।

तत्त्सङ्ग्रहविचारेण पुत्रदुःखसुखादिकैः ॥ १८८ ॥

सुशीलत्वमशीलत्वं चिन्तया दारचिन्तनम् ।

दासानां परतन्त्रत्वाद् वधबन्धादिचिन्तनम् ॥ १८९ ॥

लाभप्राप्त्या पुनः प्राप्तिरधिकारे कथं मम ।

अलाभाद् भौतिकं दुःखं पर्यायैर्बहुभिर्वद ॥ १९० ॥

शुद्धवीर्याधिवासोऽपि विद्याभ्यासादिचिन्तनैः ।

शुष्कतर्कप्रनष्टत्वाच्चास्त्राणां वरचर्वणात् ॥ १९१ ॥

एवमत्रेदमत्रेदं नेदमत्रेदमत्र नो ।

एवमालोचनज्ञानादनुष्ठान भवात्मकम् ॥ १९२ ॥

दुःखमास्ते स्वरूपादेरनभिज्ञत्वहेतुकम् ।

प्रख्याप्रवृत्ति रुद्धत्वात् कृपादृक् पादकैव हि ॥ १९३ ॥

एतत् प्रमुदितोज्ञानः सदा सत्प्रकटीकृतम् ।

अमोदमानमनयं तच्छृणु त्वं विभागतः ॥ १९४ ॥

व्याहृताः कर्मणः सम्यक् क्षोभा मायात्मकास्त्रयः ।

तदौकघनवृत्तित्वादाकारप्रतिपत्तितः ॥ १९५ ॥

व्यङ्ग्यव्यञ्जकयोर्भेदा व्यक्तव्यक्तात्मकादपि ।

व्यक्ततामेति पूर्वैर्यो भावैर्वृत्तिविडम्बितः ॥ १९६ ॥

कला करणकर्त्रादिप्रभेदैर्धातुरूपतः प्रमे- ।

अथ वेगेन चैत्यत्वव्यापारप्रविचारणात् ॥ १९७ ॥

अमोदमानमाख्यातमेतत्ते पन्निलात्मज ।

अतोऽहमधुमारूपास्येऽज्ञानौघमविवेकजम् ॥ १९८ ॥

मायोत्सर्गानुवेधेन व्यक्तस्यातस्तदेव हि ।

ज्ञानव्यवत्या ख -व्यक्तव्या प्रमन्तव्य- प्रसरोद्गतम् ॥ १९९ ॥

अभिस्वङ्गभिघातोस्थ प्रख्यात ं सहेतुतः ।

भाववृत्त्यनुरोधेन तद्विकारविचारणात् ॥ २०० ॥

प्रादुरासीद्दुरावापवेगः सर्वत्र संस्थितः ।

साध्यसाधनसुव्यक्त्या भाववृत्तिगतौ हि तौ ॥ २०१ ॥

यावन्मतान्तरेषु वैरमभ्यन्तरस्थितम् ।

प्रमर्थवेत्तृतायेषां सङ्गतत्वात् परार्थतः ॥ २०२ ॥

प्रधानव्यतिरिक्तोवो व ख -र्वो व्यङ्ग्यव्यञ्जक हेतुतः ।

केवलत्वमतस्तेषां पुंमात्रार्थप्रसाधनात् ॥ २०३ ॥

पुमर्थं नैव जानन्ति ख जा न्ति पाशत्रयसमन्वितम् ।

मलकर्म महामायायोगि तत्प्रलयाकलम् ॥ २०४ ॥

मायेयगहनाख्येन कलाकार्येण साम्प्रतम् ।

गुणकाम्यस्वरूपेण प्रधानेन मलीयसा ॥ २०५ ॥

दृष्टदोषेण यदि ते विविक्ता पन्निलात्मज ।

पुमर्थमात्रसंसिद्धिस्तेषां सम्यग् व्यवस्थिता ॥ २०६ ॥

ज्ञानसन्तानमात्रं यज्जगदेतच्चराचरम् ।

शुद्धाशुद्धस्वरूपेण बाह्यविज्ञानभेदतः ॥ २०७ ॥

महालयविचारस्थाः शून्यभावैकतत्पराः ।

मन्यन्ते येन विज्ञाता क्षणिकज्ञानसन्ततिः ॥ २०८ ॥

विज्ञानाकाशवृत्तिस्थास्तेन मुक्ता इति स्थितम् ।

अतीतस्मरयैताः प्रकृतस्पर्शनादपि ॥ २०९ ॥

मलमयाविचारत्वात् कर्मणामप्यनिश्चयात् ।

आत्मज्ञानविमूढत्वाच्चिद्रूपस्यार्थवर्जनात् ॥ २१० ॥

तच्चक्तिव्यक्त्यविज्ञानादरम्यं तेषु तत् स्मृतम् ।

घोरवद्धयत्वात् तत्रत्यानवभासनात् ॥ २११ ॥

तत्रैवान्तमपश्यन्तो न मुक्तास्ते तदा नृप ।

कीरो मार्गे त्र देहस्थः पञ्जरान्तर्नियामितः ॥ २१२ ॥

महता सप्रयत्नेन पञ्जरान्ताद् विनिर्गतः ।

नासौ सार्गलवेश्मद् वा तद्वद् भुवि मनस्विता ॥ २१३ ॥

एवं त्वरम्यकं तेषां ज्ञानं शास्त्रेष्ववस्थितम् ।

ये तु कालान्तरवशाच्चुक्रादेः परिणामतः ॥ २१४ ॥

अङ्कुरादिसमुत्थानं ततः पश्यन् बुधादिकम् ।

रक्तस्नाय्वस्थिसंयोगो भूतसंघातहेतुतः ॥ २१५ ॥

परिणामवशादात्मा मदशक्तिवदास्थितः ।

तद्विलापान्न किञ्चिच्च तेन तत्वविदो जनात् ॥ २१६ ॥

महामोहसमाविष्टा ह्यविद्याकृष्टबुद्धयः ।

मायासूतिरविद्या सौ तमोह्विवशीकृताः ॥ २१७ ॥

अतस्तेषु मतज्ञानमनस्यमनुकीर्तनम् ।

तत्रापि शतशाखस्थमज्ञानं पन्निलात्मज ॥ २१८ ॥

ये तु ब्रह्मणि निष्ठत्वान् मन्यन्ते ब्रह्म चैककम् ।

परमात्मेति सर्वत्र व्यवहारविराजितम् ॥ २१९ ॥

तस्य द्वे प्रकृती ज्ञेया शुद्धाशुद्धे जगत्पते ।

एकस्यैवास्य सङ्कल्पविकल्पप्रभवं जगत् ॥ २२० ॥

यद्वदेकस्य तु ज्ञानं स्वदेहे सम्प्रजायते ।

अङ्गप्रत्यङ्गपीडादौ तद्वद् ब्रह्मणि संस्थितः ॥ २२१ ॥

एवं तन्मतविज्ञानमतोऽस्य समुदाहृतम् ।

आणवस्य मलस्यैतत् तद्व्यक्त्या सर्वजृम्भितम् ॥ २२२ ॥

प्रभवे च मतज्ञानदर्पचित्तविचेतसाम् ।

स्वस्वरूपविचाराणामज्ञत्वात् पशुदृष्टयः ॥ २२३ ॥

शिवाद्वयमजानन्तो ब्रूहि तज्ज्ञानसंश्रयात् ।

अरम्यकमतं तेषां ज्ञानमुक्तमतस्थितम् ॥ २२४ ॥

शब्दार्थशतसंदेहे वाग्वृत्त्यायत् तु भावितम् ।

ये स्थितास्तेन मुक्ता स्युररम्यं ज्ञानमेव तत् ॥ २२५ ॥

शरीरव्योममरुतां  प्रभवः शब्द एव यः ।

अधिगम्य सवाग्वृत्त्या मध्यवैखरिसंज्ञया ॥ २२६ ॥

एवं सङ्कल्पमात्रेशः शब्दार्थावपि संस्थितौ ।

तन्मयं जगदेतच्च प्रत्यावृत्त्या विमुक्तवान् ॥ २२७ ॥

मन्यन्ते नविमुक्तास्ते परं पश्यंत्यलाभताम् ।

तदौत्सुक्यमजानन्तः सङ्केतत्वमथैषु यत् ॥ २२८ ॥

तत्स्पन्देनेन्दुनिष्यन्दनिसर्गज्ञानवर्जिताः  ।

अमुक्ता एव ते तस्माच्चब्दज्ञानार्णवे स्थिताः ॥ २२९ ॥

अथोहारम्यकं व ख अतो- तेषां ज्ञानमाज्ञानसंभवम्  ।

प्रमाणषट्कविच्चित्त्या प्रतिपन्ना निरीश्वरम् ॥ २३० ॥

व्यक्ताव्यक्तविरुद्धत्वाद् वेदकर्मफलोदयात् ।

क्रियातिशयवत्वाच्च अविशुद्धस्वरूपतः ॥ २३१ ॥

तवाप्यरम्यकं तस्माज्ज्ञानमज्ञानसम्भवम् ।

चित्तवृत्तिनिरोधेन यथायोगादिसम्भवम् ॥ २३२ ॥

तन्निरोधात् सुषुम्णातो व सुषुप्तातो जडः पाषाण वत् स्मृतः ।

प्रलयाकलसंज्ञोऽसौ न मुक्त इति निश्चयः  ॥ २३३ ॥

तत्राप्यरम्यकं तद्धि ज्ञानं ज्ञेयं विजानतः ।

ततस्तन्मत्त विज्ञानं तदेव प्रविजृम्भते ॥ २३४ ॥

शक्तिवीर्यबलज्ञानतेजो यद् गुणसम्भवम् ।

विचार्यन्ते मतैर्मुग्धैः षाड्गुण्य महिमायुतैः ॥ २३५ ॥

पाञ्चरात्रोपनिषदैः प्रमाणार्थविचारणात् ।

युक्तिरेवावगम्येत न तत्तत्त्वविदोजनाः ॥ २३६ ॥

यस्मादात्मस्वरूपस्य शक्तिव्यक्त हितै स्फुटम् ।

विचार्य व्यक्तिमानीय तदैक्यान्मुक्तिशालिनः ॥ २३७ ॥

एवं ते पापवृत्तीश्च न ज्ञायन्ते स्फुटं स्थितम् ।

आणवं कार्मं व ख काम मायेयं भवेयं त्रिप्रकारजम् ॥ २३८ ॥

तत्राणवः परिज्ञातोन तैरधिगतं स्थितम् ।

तत्प्रक्रमात् सुबद्धास्ते न मुक्ता निश्चितं स्थिराः ॥ २३९ ॥

तस्मादरम्यकं तेषु ज्ञानमज्ञानजं स्मृतम् ।

एवं प्रतिमतं ज्ञेयमज्ञानं तदरम्यकम् ॥ २४० ॥

सदा यदप्रमोदाख्यमधुना शृणु साम्प्रतम् ।

प्रकृतेर्यद्विकारोत्थमसमं जनरूपिणम् ॥ २४१ ॥

विवेकपदमात्रज्ञैर्दुःखैकघनता हि या ः ।

नित्यमाहङ्कृतोत्थैस्तु विकारैर्विलुलीकृतम् ॥ २४२ ॥

यत् स्वयं ततमिच्चन्ति नित्यं चैवमुदोदितम् ।

एतच्चैव हि विच्चन्दप्रतिचन्दकमागतम् ॥ २४३ ॥

अतो निष्पन्दकं नाम प्रकृतेर्विपरीतजम् ।

वैवर्त्तिकमतोद्दामशुद्धतालातभीषणम् ॥ २४४ ॥

अतुष्टिरिति नाम्नैव नवधा यद् विचारितम् ।

तदविस्पन्दप्रच्चन्दैर्विवेकातीतगौरवात् ॥ २४५ ॥

प्रतिपत्या समुत्सृज्य प्रख्या प्रत्यव योगतः ।

ज्ञेयं तन्नवधा भेदात् प्रत्येकमपि सर्वदा ॥ २४६ ॥

ऐश्वर्यादिगमाभावादप्राप्त्यालोचितक्रियाः ।

अविद्यान्ता घनत्वेन वित्तशाख्यप्रयोजनात् ॥ २४७ ॥

अनैश्वर्यं स्थितं वत्स स्वस्वरूपस्य लाघवात् ।

प्रतिच्चन्दकसद्वृत्त्या बौद्धं गुणमतन्द्रितम् ॥ २४८ ॥

एवमत्र प्रघाता ये सम्यक् ते प्रविचारिताः ।

निग्रहाष्टकरूपस्य प्रमेये यत् प्रकीर्तितम् ॥ २४९ ॥

वैवेत्त्येन समस्तं तत् सम्यगेव प्रकीर्तितम् ।

गुरुशिष्यादिकगणैर्यास्ता भुवनपङ्क्तयः ॥ २५० ॥

प्रागुक्ताः कीर्त्यमानाश्च विद्याष्टकमिदं शृणु ।

शक्तिः शान्तिकरी गौरी इडा मालाघमालिनी ॥ २५१ ॥

शान्तिः स्वाहा स्वधा ख्यातिरष्टाभिस्ते समावृताः ।

कार्यकारणरूपस्य सुखदुःखात्मकस्य हि ॥ २५२ ॥

देहभावात्मकस्यास्य उपरिष्टात् प्रकीर्तिताः ।

विकाराः षोडशैवात्र परत्वेन व्यवस्थिताः॥ २५३॥

कीर्त्तिताः कीर्त्यमानाश्च प्रविभागविचारतः।

तन्मात्रापञ्चकं तत्र बोद्धव्यं निर्विशेषकम्॥ २५४॥

अक्षाणां पञ्चकं यच्च ज्ञानव्यक्त्यर्थमुच्यते।

चिदात्मापि च तद् ज्ञेयः दृग्युक्त्या चापि कल्पनात्॥ २५५॥

प्रतिच्चन्दकरूपेण तदप्येष्वविचारतः ।

न तत्क्रियाव्यक्तिहेतौ पुंसां प्रत्यवमर्शनात्॥ २५६॥

कर्मेन्द्रियनिवासोसौ तदप्यत्र विचारितम्।

विषणागुणसंदर्भो यदप्यत्र विचारितः॥ २५७॥

तदभिष्यन्दिविस्तारिप्रकीर्णं बहुधा स्थितम्।

त्रिरुपमपि तत्रस्थमतिसर्गविचारणात्॥ २५८॥

वैपरीत्येन तत्रापि पदार्थप्रविचारणम्।

तत्प्रवृत्तिरहङ्कारस्तस्य यद्वस्तु तच्छृणु॥ २५९॥

प्रतिच्चन्दकवैवित्त्या प्रख्याव्यापारभेदतः।

वैकारिकस्तैजसश्च भूतादिश्च तृतीयकः॥ २६०॥

गुणत्रयानुरोधेन त्रिप्रकारस्स एव हि।

कारणात्माथ कार्यश्च विषयाणां प्रकीर्तितम्॥ २६१॥

षोडशात्मविकारेण त्वमागात् पुनः पुनः ।

आवृत्तिगुणताज्ञानं तामिस्त्रं चान्धपूर्वकम्॥ २६२॥

तमोरूपं त्वतो ज्ञेयं महिमा तस्य लक्षणम् ।

पतिस्तदचलत्वादि  रजसो लक्षणं स्मृतम् ॥ २६३ ॥

द्वयोरप्यनयोर्वेधाच्चगुणमिश्रकरूपताम्  ।

कामः क्रोधो लोभमोहौ दर्पः पिशुनता तथा ॥ २६४ ॥

जन्ममृत्यु जराव्याधिरागात् क्षुत्तृण्मृषा मता ।

अज्ञानञ्च मदो हर्षो रागः शोकस्तथा परः ॥ २६५ ॥

द्रौह्यं चैवानृशस्यं च वैचित्यमनृतं तथा ।

अलीककुपितत्वं यन्मायामात्सर्यमेव हि ॥ २६६ ॥

अधर्मश्चास्वतंत्रत्वं मिश्रमागन्तुकं स्मृतम् ।

गणपाशा ह्यतस्तत्र साम्येन्द्रियवशाः स्थिताः ॥ २६७ ॥

उमानन्दिमहाकालगणेशवृषभृङ्गिनः  ।

चण्डीश्वरः कार्त्तिकेयो गणेशाः परिकीर्तिताः ॥ २६८ ॥

तेषां भुवनविन्यासः  प्रागुक्तोऽपि प्रकीर्तितः ।

अतोऽन्तरालेज्ञातव्यमेषां यद्भुवनादिकम् ॥ २६९ ॥

सूक्ष्मो ह्यनन्तस्त्रितनुः श्रीकण्ठश्चैकनेत्रकः ।

शिवोत्तमः ं शिखण्डी च एकरुद्रोऽपि दान्तकः  ॥ २७० ॥

विद्येश्वरकृताः पाशा बोद्धव्याश्च समासतः ।

अभिशान्तिविकाराणां प्राक्केवलनियोगतः  ॥ २७१ ॥

गुणानुवेधान् महतः प्रतिज्ञेया विकारजाः ।

अभिष्यन्दिस्वरूपेण  मुख्या नियमहेतुतः ॥ २७२

पृथक् पृथक् च बोद्धव्यमन्योन्याभिभवादथ ।

सात्विकं चात्र तद्वस्तु लघुकृच्च प्रकाशकृत् ॥ २७३ ॥

पटूक्षत्करणव्राते यदा चाद्वन्द्वतां गताः ।

धर्मादित्रितयं पूर्वं यदत्र प्रविचारितम् ॥ २७४ ॥

तदेव प्रभवत्यत्र विविक्ते च गुहागते ।

यदा द्वन्द्वसमायोगस्तस्य ध्वान्तेन भूयसा ॥ २७५ ॥

तदा सत्त्वानुवेधेन यमीयं लक्षणं पुरा ।

तदेव व्यक्तिमायाति विचारगुणभेदतः ॥ २७६ ॥

यदानुवेधो रजसा भूयात् सात्विकतो ह्यसौ ।

तदादि गहनं किञ्चिज्ज्ञानमस्य प्रकाशते ॥ २७७ ॥

कोषषट्कं नाडिचारं हृत्य प्रप्रविचारणम् ।

मानमुन्मानचारं यत् सर्वं मत्रविचारणम् ॥ २७८ ॥

वायुर्देहगतस्योस्य यावती गतिरेव हि ।

सर्वावयवभेदेन प्रतिपत्त्या स योगतः ॥ २७९ ॥

अत्र प्रागुक्तनियमात् प्रमाणार्थविचारतः ।

प्रवृत्तिः क्रिया प्रयत्नश्च तत्त्वविद्भिर्विभाविताः ॥ २८० ॥

प्राणापानसमानानामुदानव्यानसंज्ञिनाम् ।

पञ्चानां कोशमरुतां भेदानां पञ्चधा स्थितिः ॥ २८१ ॥

प्रेरकत्वेन वपुषः स्थित्यर्थं पञ्चधा प्रिये।

वायुनामाप्त लाभेन निमित्तं भवते ह्यतः॥ २८२॥

निमित्त पञ्चकं प्रोक्तं कर्मात्मा विदुषोऽणुभिः।

अतः परं तु प्रत्यक्षमनुमानाप्तलक्षणम्॥ २८३॥

प्रमाणं त्रिविधं दृष्टं प्रमेयस्य हि साधनम्।

तदध्यात्मं न भूतानाम् आदिदेवेन कल्पितम्॥ २८४॥

स्वयमाध्यात्मिकं ज्ञेयं करणं त्रिदशात्मकम्।

बोद्धव्याचैव विषयाश्चैविभूतं प्रगीयते॥ २८५॥

ब्रह्मेन्द्रशशिवह्नीन्द्रा विष्णुमित्रः प्रजापतिः

दिशोऽनिलसवित्र्यापो भूमिश्चैवाधिदैवतम्॥ २८६॥

आध्यात्मिकं तु प्रत्यक्षं अधिभूतानुमानगम्।

अधिदैवमाप्तवर्गं स्वप्रमेयप्रसाधकम्॥ २८७॥

व्यापीदं कार्यकरणं स्थावराद्यासु योनिषु।

निरपातश्चाभ्रविश्वे पुरुषं पुरुषं प्रति॥ २८८॥

पृथक् पृथक् स्वरूपेण साधारणतया स्थितम्।

द्रष्टव्यं तूर्यसर्गस्य निश्चितार्थप्रवेत्तृभिः॥ २८९॥

अतः परमनीषाया बीजं करणगानि तु।

त्रीणि सन्ति गुणान्यत्र रजःसत्वतमांस्यथ॥ २९०॥

प्रख्याव्यापारनियमप्रवृत्तीनां फलानि तु।

चतुर्दशविधं सत्त्वं स्वर्भुजामेकधा तमः ॥ २९१ ॥

रजोऽर्कसप्तसंख्यातं पुंसां प्रख्याख्यमष्टधा ।

दलितं षोढसंख्यातं रजः पुरुतमानुगम् ॥ २९२ ॥

सत्वमेकांशकस्थायि रजस्तिर्यक्षु सप्तधा ।

तमोमरुत्मनामंशस्थायि दृष्टं तु सूरिभिः ॥ २९३ ॥

एवमन्योन्यद्वन्द्वस्थैर्गुणैः सर्वत्र पाणयः ।

विचित्रवपुषः सन्ति चासिताः स्वेन कर्मणाः ॥ २९४ ॥

भुवनाश्चरमेतेषु शृणु पन्निलनन्दन ।

क्रोधाष्टकं स्थितं तस्मिंस्तेजसा रजसीकृतम् ॥ २९५ ॥

योगिनामष्टकं सत्वे योगभूतिवरावहम् ।

संवर्त्तकैकवीरौ च ह्यनन्ता ज्ञानराशयः ॥ २९६ ॥

मृत्युहन्ता च रक्ताक्षो महाक्रोधश्च दुर्जयः ।

क्रोधाष्टकमिदं ज्ञेयं क्रोधोत्कटमरिन्दम ॥ २९७ ॥

तेजोष्टकमतोर्ध्वे तु शृङ्गाटकगृहस्थितम् ।

बलाध्यक्षो महाध्यक्षस्त्रिदशस्त्रिपुरान्तकः ॥ २९८ ॥

सर्वरूपस्तथा शान्तो निमेषोन्मेष एव च ।

ऊर्ध्वतो योगिनः सन्ति सत्त्वा हृदि निवासिनः ॥ २९९ ॥

अकृतः कृतो वैभवस्तु सूरज्येष्ठः स्वभूर्गुरुः ।

गौतमो निधनेशश्च ह्यष्टावेते प्रकीर्तिता ॥ ३०० ॥

स्ववेश्म कार्यकरणभोगास्वादनतत्पराः ।

गुणैश्च प्राक्समुत्पन्ना गुणयोनेरतः  प्रिये ॥ ३०१ ॥

अतः परं प्रधानस्य प्रागुत्पन्नास्त्रिरूपिणः ।

ऊर्ध्वभागभवाः सन्धि प्रधानार्धनिवासिनः ॥ ३०२ ॥

मायीयः कार्यकरणैः पितृभागावगाहनैः  ।

संयुक्ताः संप्रबुद्धाश्च नित्यं त्रैवर्तविद्यया ॥ ३०३ ॥

स्थानाधिपान्तिके ह्येते स्थानिनस्ते प्रकीर्तिताः ।

सुशिवाश्चापि गीयन्ते चतुर्दशभवा नवाः  ॥ ३०४ ॥

अपरिभूतनिगूढास्ततो गूढनिगूढकाः ।

एकशिवो वामदेवः भीमोग्रभवसर्वगाः ॥ ३०५ ॥

विद्याधिकस्त्वेकवीरः प्रचण्डेशो ह्युमापतिः ।

अजेशानन्तश्रीकण्ठस्थाणवो भूतसर्वगाः  ॥ ३०६ ॥

मीमांसकाहृता ह्येते वीरा वेदविदां वराः ।

सामीप्यैः  सह सायुज्यैः  सालोक्यैः स्थायिभि  प्रिये ॥ ३०७ ॥

मुण्डोद्भवैर्महाघोरैरित्येके विविधास्त्वमी  ।

एतच्चैकशिवाद्यन्तु स्तोकमुद्दिष्टलक्षणम् ॥ ३०८ ॥

लोकवैदिकसंन्यासयोगिभिर्ज्ञानदृष्टिभिः  ।

अतो भगवतीं सम्यगुमां विश्वोद्भवां विदुः ॥ ३०९ ॥

स्वयं व्यक्ता जगन्माता उपेया जगतां गतिः ९ पतिः ।

प्रोद्यद्बालार्कसद्भासा प्रतप्तकिरणच्चविः ॥ ३१० ॥

मृगेशाष्टकसच्चित्रमणिमत्पीठसंस्थिताः ।

नानापुष्पस्त्रगुद्दामसत्कान्ति ः प्रविराजते ॥ ३११ ॥

शतयोजनविस्तारे स्वासने प्रविजृम्भते ।

तप्तचामीकराकारशरीरां सिंहसंस्थिताम् ॥ ३१२ ॥

महामणिकृतापीडशेखरोद्भासितध्वजाम् ।

दिव्यकुण्डलिनीं दिव्यमणिभूषितविग्रहाम् ॥ ३१३ ॥

विचित्राहाररशनां कूजन्नूपुरमण्डिताम् ।

जया च विजया नन्दा सुनन्दा चपरा ततः ॥ ३१४ ॥

बहुभूतिभरोद्दामविभवा मोदितोल्वणाः – ।

विचित्रांबरधारिण्यश्चित्रस्त्रग्दामभूषिताः ॥ ३१५ ॥

कूर्मिकाङ्गदकेयूरहारोद्भासितवक्षसः ।

प्रतीहार्यो विराजन्ते ज्वलन्त्यः स्वेन तेजसा ॥ ३१६ ॥

प्रत्येकं संस्थिता ह्येतास्तृप्तं प्रोद्दामराजिताः ।

अतोऽनुमानगा सा देव्यः पर्युपास्यन्ति ताः पुमान् ॥ ३१७ ॥

त्रिंशत्कोटिसहस्त्राणि त्रिंशत्कोटिशतानि च ।

मानमेतत् समुद्दिष्टं देवतास्वतिविस्तृतम् ॥ ३१८ ॥

महाविभवविस्तारमहाभोगभरावहाः ।

कोटयो वहुसंख्याता विमानानां सहस्त्रशः ॥ ३१९ ॥

तेषां रुद्राः समाख्याता द्यौमान्ये चामराः ख वामनाः परे ।

विचित्रभोगबहुलाः सर्वैश्वर्यसमन्विताः ॥ ३२० ॥

त्रिनेत्राः शूलचक्रासिधारिणो वृषभध्वजाः ।

विचित्रशक्तयः सर्वे विचित्राश्चर्यकारकाः ॥ ३२१ ॥

स्वसुतास्वेव नियतं पर्युपास्यति ताः पुमान् ।

विश्वलक्ष्मी विश्ववपुर्विश्वकृद् विश्वमालिनी ॥ ३२२ ॥

यथा सा जगतां सम्यगनुग्रहवशेन हि ।

अभेत्पण्डं तथा सर्वमाकर्णय जयद्रथ ॥ ३२३ ॥

मया सहागता पूर्वं कान्ता सर्वेश्वरी शिवा ।

कल्पे पूर्वं न सत्ता स्याज्जगन्मातेति कीर्तिता ॥ ३२४ ॥

तस्मिन् विभवसङ्घाते व -तै पूर्य सर्वजनावलिम् ।

ब्रह्माण्डोदरमध्यस्थां पुनः स्वपुरमध्यगाम् ॥ ३२५ ॥

कल्पे द्वितीयेऽप्यनु च मया साकं समासवम् ।

सावतीर्णा ब्रह्मणोऽण्डं जगद्योनिरिति स्मृता ॥ ३२६ ॥

पुनः प्रयाता तत्स्थानं कृत्वा विश्वस्थितिं ह्यतः ।

पुनस्तृतीयके कल्पे मया सार्धं यशस्विनी ॥ ३२७ ॥

जगत्स्थितिनिमित्तार्थमागता ब्रह्मणोऽण्डकम् ।

शाम्भवीति च नाम्नैषा विख्याता परमाव्यया ॥ ३२८ ॥

जगद्व्यवस्थामास्थाप्य पुनरेव निकेतनम् ।

स्वमगाद् देवदेवेशी पुनरेव महामते ॥ ३२९ ॥

चतुर्थेऽथ महाकल्पे प्राप्ता सा ब्रह्मणोऽण्डकम् ।

भुवनस्थितिसंरक्षाकरणाय गणाम्बिका ॥ ३३० ॥

नाम्ना सा विश्वरूपेति विश्वमालयते सदा ।

पुनः प्रस्थानमात्मीयमालयं पन्निलात्मज ॥ ३३१ ॥

पञ्चमे तु महाकल्पे पुनर्ब्रह्माण्डमण्डपम् ।

स्थित्यर्थमवतीर्णा सा भुवनेशी मया सह ॥ ३३२ ॥

नन्दयन्ती च जगतां नन्दनी नाम तेन सा ।

जगदानन्दयित्वा सा पुनरेत्य स्वकं पदम् ॥ ३३३ ॥

षष्ठेऽथ कल्पे भूयश्चास्मत्सार्धं नृपनन्दन ।

आजगाम च ब्रह्माण्डं स्थित्यर्थं पुनरेव सा ॥ ३३४ ॥

गणाम्बिका विधानेन विख्याता सा तदानघ ।

तामसी च तदा तेन नाम्ना ज्ञेया सदैव हि ॥ ३३५ ॥

विधायैव भयाद् भूयः स्वं पदं नृपसत्तम ।

सार्द्धं मया सप्तमे सा कल्पे वैरिञ्चिमण्डकम् ॥ ३३६ ॥

अभ्याजगाम सुभगा लोकस्थितिविधायिनी ।

विभूतेरभिधानेन श्रुता साक्षाद् विभूतिदा ॥ ३३७ ॥

तया योज्यं जगत्सर्वांगमात् सा अनिकेतनम् ।

अथागता चाष्टमेऽसौ सार्द्धं कल्पे मयानघ ॥ ३३८ ॥

सर्गसंस्थितिरक्षायै भूतिनाम्नी महेश्वरी ।

समुद्धृत्य जगत्सर्वमगाल्लोकं स्वकं पुनः ॥ ३३९ ॥

पुनः स्थापयितुं सर्वजगतां संस्थितिं स्थिता ।

आनीता वै ब्रह्मणोऽण्डमानन्दी नवमे सुतः ॥ ३४० ॥

कल्पे सर्वजगद्योनिमया सार्धमरिन्दम ।

स्थापयित्वा जगद्रक्षां वितत्य सुबहुं ततः ॥ ३४१ ॥

प्रत्यागमत् स्वं भुवनं पुनरेवागता ह्यसौ ।

दर्शमेथ ख दशमेथ मया सार्द्धं ब्रह्माण्डोदरमञ्जसा ॥ ३४२ ॥

कल्पे सा स्थितिरक्षार्थं नाम्नासौ वामलोचना ।

विजृम्भा ख विजृम्भ्य सुचिरं कालं पुनः प्राप्ता स्वमन्दिरम् ॥ ३४३ ॥

अथैका दशमे कल्पे ब्रह्मणोऽण्डं मया सह ।

जगद्रक्षार्थमभ्यागाद् वरारोहेति नामतः ॥ ३४४ ॥

स्वकार्यमाचरित्वैवं गता स्वं विष्टपं पुनः ।

कल्पे द्वादशमे भूयो रमता रमया सह ॥ ३४५ ॥

जगतामनुकम्पार्थं नाम्ना ज्ञेया सुमङ्गला ।

जगदानन्दयित्वा सा पुनः प्राप्ता स्वविष्टपम् ॥ ३४६ ॥

त्रयोदशेऽथ सा कल्पे पुनरेव मया सह ।

आजगाम ब्रह्मणोऽण्डमनुकम्पाकरी शिवा ॥ ३४७ ॥

महातनुरितिख्याता जगदाप्यायनोद्यता ।

कृत्वा स्वकार्यमतुलं स्वर्विष्टपमगात् पुनः ॥ ३४८ ॥

कल्पे चतुर्दशे देवी ब्रह्माण्डं च मया सह ।

पुनरेव गतानन्ता नामतः सा प्रकीर्तिता ॥ ३४९ ॥

स्वाधिकारमसौ कृत्वा पुनः स्वर्लोकमागमम् ।

अथ पञ्चदशे कल्पे पुनरेव मया सह ॥ ३५० ॥

ब्रह्माण्डमागता देवी दृष्टादृष्टफलप्रदा ।

मातेव सर्वभूतानां भूतमाता ततः स्मृता ॥ ३५१ ॥

सा स्वाधिकारं निर्वर्त्य स्वावकाशमगात् पुनः ।

कल्पेऽथ षोडशे भूयो मया सार्द्धं विरिञ्चज ॥ ३५२ ॥

अण्डमभ्यागमद् देवी हितार्थं जगतां नृप ।

उत्तमेनाभिधानेन ज्ञेया सावुत्तमेति च ॥ ३५३ ॥

निवर्तयित्वा स्वंकार्यमगाद् भूयो निवेशनम् ।

कल्पे सप्तदशे भूयो ब्रह्माण्डं सा मया सह ॥ ३५४ ॥

प्राप्ता सहस्रधारेति नाम यस्याः प्रकीर्तितम् ।

जगदानन्दयित्वा सा पुनः प्राप्ता स्वर्विष्टपम् ॥ ३५५ ॥

कल्पेऽष्टादशमे वत्स ब्रह्मणोऽण्डं पुनर्मया ।

सहागता सुरेशानी सती नाम्नेति या स्मृता ॥ ३५६ ॥

चाक्षुषस्यान्तरे वत्स दक्षः प्राचेतसो ह्यभूत् ।

तस्यापमानतो देहमजहात् परमेश्वरी ॥ ३५७ ॥

सुधासूतिः कलाद्या या तामाश्रित्याश्रितासु च ।

ततः पूर्वतरादुच्चैरासाद्य पितरं पुनः ॥ ३५८ ॥

मां भर्तारं तपोयोगादवाप्य गिरिजाभवन् ।

दक्षस्य मखविध्वंमोदकानंशा ह्युमा स्मृता ॥ ३५९ ॥

भद्रकालीति चान्यासौ नाम प्राप्ता तनुद्वया ।

अस्मिंश्चतुर्युगे कृष्णसहिता कृष्णपिङ्गला ॥ ३६० ॥

अवधीर्महिषं तेन दुर्गासौ विन्ध्यवासिनी ।

भक्तानामनुकम्पार्थमवतीर्य सुमध्यमा ॥ ३६१ ॥

या त्वामाराध्य तपसा मामद्राक्षीर्जयद्रथ ः ।

रहस्यभाक्तं संजातोऽस्यतिक्रूराशयोऽभवम् ॥ ३६२ ॥

एवमस्याः समाख्यातं भुवनं पन्निलात्मज ।

अथोपरिष्टाद् भुवनमुमाकान्तस्य शोभनम् ॥ ३६३ ॥

सहस्त्रार्ककरव्रातभासुरं सर्वसुन्दरम् ।

सर्वेषामपि तादृक्षमस्तीह भुवनं न हि ॥ ३६४ ॥

सर्वस्माद् भुवनत्राता चारुत्वं विद्यतेऽस्य हि ।

सुचारु नित्यमेतस्मात् सहस्रादित्यसन्निभम् ॥ ३६५ ॥

हिमवत्पर्वताकारं शुद्धस्फटिकनिर्मलम् ।

सर्वशोभासमायुक्तमत्याश्चर्यशताकुलम् ॥ ३६६ ॥

महाविमानसङ्घातं कोटचर्बुदसमन्वितम् ।

चक्रवर्त्तिसुरेन्द्रौघविमानशतसङ्कुलम् ॥ ३६७ ॥

प्रधाने भुवने तस्मिन् सूर्यार्बुदसमप्रभे ।

शिरःसहस्रदोर्दण्डसहस्रचरणेक्षणम् ॥ ३६८ ॥

सर्वानुग्रहकृच्चा सावुमाकान्तः परापरः ।

तस्योद्यानमतो वामे बहुभोगभरावहम् ॥ ३६९ ॥

शतयोजनसाहस्रमनेकमणिराजितम् ।

बहुपर्यङ्कसोद्दाममास्कन्धशतसङ्कुलम् ॥ ३७० ॥

सहस्रसूर्यप्रतिममनेकगुणमण्डितम् ।

गोपत्यष्टकसंरुद्धमासनं मणिचित्रितम् ॥ ३७१ ॥

रत्नपद्माकरापीडमनेकाद्भुतसङ्कुलम् ।

तत्रोपरिमहान्तस्वतेजोराजितविग्रहम् ॥ ३७२ ॥

केयूराङ्गदसन्मौलिमहाहारविभूषितम् ।

हेमचित्राम्बरं हेममालालङ्कृतिवर्णकम् ॥ ३७३ ॥

विराजते कुण्डलाभ्यां रम्याभ्याः रत्नराजिभिः ।

ते सूर्यपरिवेशाभे सप्तकाञ्चनचित्रिते ॥ ३७४ ॥

पर्वतोत्तुङ्गसंकाशैः पाशरत्नैर्विराजितम् ।

मौलिर्मणिशतच्चायाविडम्बितबिडौजसा ॥ ३७५ ॥

प्रलम्बमुक्तास्रग्दामविराजितसुवक्षसम् ।

स्वर्धुनीवाहमतुलमिव वर्षा विराजते ॥ ३७६ ॥

शेखरेन्द्रप्रभापीडप्रकाशितदिगन्तरम् ।

स्वर्धुनीधूर्जटोत्तुङ्गकपालशतमालितम् ॥ ३७७ ॥

प्रमथैरावृतं घोरैः सर्वैश्वर्यप्रवर्तकैः ।

शूलिभिर्जटिभिस्त्र्यक्षैः सर्वाभरणभूषितैः ॥ ३७८ ॥

गुदोदरैः कुक्षिमुखैः पञ्चचूडैर्महोदरैः ।

वल्लीग्रीवैः स्कन्दमुखैर्गृध्रवक्त्रैर्भयानकैः ॥ ३७९ ॥

चिपिटैश्चिपिटास्यैश्च वामजैर्जटिलैर्वृताम् ।

तालुजङ्घैर्ज्वलज्जिह्वैः कुक्षिवक्त्रैः स्तनाननैः ॥ ३८० ॥

पृष्ठलिङ्गैर्गूढलिङ्गैर्घण्टाकर्णैः सवाटुकैः ।

दरीमुखैः कङ्कवक्त्रैःमत्तोन्मत्तप्रमत्तकैः ॥ ३८१ ॥

उमाकान्तमवृतं तैस्त्रिंशत्कोटिसहस्रकैः ।

त्रिंशत्कोटिशतैश्चान्यैः समन्तात् परिवारितम् ॥ ३८२ ॥

एवंविधैस्तथा रुद्रैर्नानाभूतगणैश्चितम् ।

मदोन्मत्तमहानारीविमानशतमालितम् ॥ ३८३ ॥

महाभोगभराक्षी च प्रमदाजनसेवितम् ।

सर्वतः परिवार्योच्चैर्मातरस्तं व्यवस्थिताः ॥ ३८४ ॥

प्रभापीडैर्यथा भानुः सर्वतः प्रविराजते ।

वह्निकाष्ठागता ब्राह्मी पद्मपत्रप्रभेदगा ॥ ३८५ ॥

दिव्याभरणचित्राङ्गी श्रीरिवोत्तमरूपिणी ।

ब्रह्ममाता जगद्योनिर्जगज्ज्येष्ठा सनातनी ॥ ३८६ ॥

शुभ्राभ्रभूरिहारेन्दुस्फुरत्स्फटिकसन्निभा ।

माहेश्वरी महारत्नप्रभोद्भासितदिङ्मुखा ॥ ३८७ ॥

माहेश्वरीदिशं श्रित्य संस्थिता मारतोत्तमा ।

उत्तरस्यां दिशि गता कौमारी शुभ्रभूषणा ॥ ३८८ ॥

सर्वासुरासुरव्रातपादपद्मविभूषिता ।

शक्त्युद्गतकराटोपसर्वाभरणभूषिता ॥ ३८९ ॥

पद्मगर्भप्रभाकारा हाराङ्गदविराजिता ।

दिश्याश्रिता दक्षिणस्यां नीलोत्पलदलप्रभा ॥ ३९० ॥

वैष्णवी विष्णुजननी हारकेयूरभूषणा ।

महाविभवसंयुक्ता परमेशमुपासते ॥ ३९१ ॥

क्रोडानना घोरदंष्ट्रा घोरनीरदनिःस्वना ।

स्रवद्गगनजीमूत यमुनातोयसन्निभा ॥ ३९२ ॥

केयूराङ्गदचित्राङ्गी लम्वहारविराजिता ।

वारुणीं दिशमाश्रित्य महेशं पर्युपासते ॥ ३९३ ॥

हंसकुन्दसुधाशङ्खचन्द्राम्बुदसमन्विता ।

काञ्चीनूपुररत्नौघ चित्राम्बरविराजिता ॥ ३९४ ॥

शाक्री वज्रकरव्यग्रा गजस्कन्धनिवासिनी ।

पूर्वां दिशं समाश्रित्य सहस्रनयनोज्ज्वला ॥ ३९५ ॥

पर्युपासति विश्वेशं वहुभागभरालसा ।
नैऋर्तीं दिशमाश्रित्य चामुण्डा मुण्डमालिनी ॥ ३९६ ॥
चर्ममुण्डकरव्यग्रा शवाभरण चित्रिता ।
करालवदना तीक्ष्णदंष्ट्रिणी घोरदर्शना ॥ ३९७ ॥
चण्डोग्रा चर्ममुण्डा सा देवमेवमुपासते ।
समीरकाष्ठामाश्रित्य  योगेशीं पर्युपासते ॥ ३९८ ॥
सुशुष्की कोटराक्षी सा घोरनीरदनिःस्वना  ।
महाकटकनद्धाङ्गी  शवाभरणभूषिता  ॥ ३९९ ॥
ऊर्ध्वकेशी सर्पनद्धा दंष्ट्राली प्रेत संस्थिता ।
एतास्ता देवदेवेश मातरो लोकविश्रुताः  ॥ ४०० ॥
उमेशमखिलैर्भोगैः पर्युपास्यन्ति मातरम् ।
ब्रह्माद्यमरसन्दोहैः खेटचमानेव भूरिशः  ॥ ४०१ ॥
सहस्रांशेन तपसा भूर्लोकमवतारित ।
न कदाचित् स्वकात् स्थानाच्चलन्त्येताः  सदैव हि ॥ ४०२ ॥
आगत्यासुरसङ्घातक्षयकार्ये महोद्धता  ।
प्रपूजयेदिमा ब्रह्मा तथान्ये लोकरक्षिणः ॥ ४०३ ॥
परापरेण वपुषा त्रिस्कन्धं व्यापकं स्थिताः ।
एवमेषा भोगवती नाम रूपविपर्ययैः  ॥ ४०४ ॥
न मे चाष्टविधा वत्स परिवार्य व्यवस्थिताः ।

न भिन्ना परमार्थेन क्रीडेयमिति संस्थिताः ॥ ४०५ ॥

स्थितस्त्वेवं जगन्नाथो भुवने सर्वदारुणः ।

एवं प्रद्योतनं सर्वं जगतां पतिरादरात् ॥ ४०६ ॥

आस्ते परमया लक्ष्म्या वृतः परपुरञ्जयः ।

अस्यैवाष्टौ समाख्याता स्तरवोपारिताः शृणु ॥ ४०७ ॥

येन विश्वमिदं व्याप्तमचरं चरमेव च ।

शृणुष्व नरशार्दूल विभागाद् गदतो मम ॥ ४०८ ॥

शर्वो भवश्च भगवान् रुद्रः पशुपतिस्तथा ।

ईशानो भीमसंज्ञश्च महादेवोग्र एव च ॥ ४०९ ॥

अष्टावेताः समाख्याता मूर्तयः परमेशितुः ।

एताभिरेव भगवान् भवः परमकारणः ॥ ४१० ॥

विदधाति जगत्सृष्टिमतुलां पन्निलात्मज ।

कौम्भेऽनलमरुद्व्योमसूर्यात्मोदधिधूर्मही ॥ ४११ ॥

सृष्टिरेषा जगत्यस्मिन्नंशांशाज्जगतां गता ः ।

जगत्स्रष्टा वंशमात्रेणावतीर्णा जयद्रथ ॥ ४१२ ॥

एवमत्र ब्रह्मलोके मेरौ त्रितयमाश्रितः ।

आस्तेऽत्र भोगदो देव वरुमाकान्तः परादिना ॥ ४१३ ॥

योगाष्टकमग्रयं पन्निलनन्दन ।

श्रीकण्ठेत्यभिधानोऽयं स कैलासगिरावपि ॥ ४१४ ॥

स चाष्टतनुभिर्व्याप्य जगदुद्धरणे विभुः।

तमोरजःसत्त्वभेदैः सर्वज्ञानगुणैरपि ॥ ४१५ ॥

महेश्वरं योगिवरमुपासन्ते हि ये नराः।

श्रद्धाभक्तिपुरस्कारैर्नियमैश्च यमैरपि ॥ ४१६ ॥

दृष्टमण्डलिनो ये च देहे सर्वमयं शिवम्।

पश्यन्ति ते प्रयान्त्यत्र तत्कराघ्रातमूर्त्तयः ॥ ४१७ ॥

अशिवाद् द्वादशैवात्र उपरिष्टाद् व्यवस्थिताः।

सूर्यकोटिप्रभाः सर्वे कुङ्कुमाकारविग्रहाः ॥ ४१८ ॥

भौवनं भोगमेषां यत्तत् कथाकृतिमुत्तमम् ।

अत्रान्तराले विज्ञेयो मण्डलाधिपतिः प्रभुः ॥ ४१९ ॥

वीरभद्र इति ख्यातो महादेवाष्टकाद् युतः।

अङ्गुष्ठमात्रपूर्वास्ते मायाञ्जनविवर्जिताः ॥ ४२० ॥

शेमुषीभुवनाभोगमेतत् ते परिकीर्तितम्।

अतो गौणं समाख्यास्येऽध्यासरूपं जयद्रथ ॥ ४२१ ॥

गुणातुर भमात्रादि गुरुपङ्क्तित्रयं महत्।

ध्वान्तोपरिऽटात् प्रथमं नामान्येषां यथा शृणु ॥ ४२२ ॥

शिवश्चण्डः प्रभुर्वामो ब्रह्मादो भीम उत्तमः।

दिनकृत् पिङ्गलः कालो माहेन्द्रश्चन्द्रमोदकः ॥ ४२३ ॥

कटं कटः कटिवर अम्बुहार्ध नरेश्वरः।

ऋग्यजुःसामथर्वश्च शिवगण्डोदरश्च हा यमे ॥ ४२४ ॥

यमः माली गहनेशः पीडनश्चेति ते स्मृताः ।

एते द्वात्रिंशदाख्याता उपरिष्टात्ततः शृणु ॥ ४२५ ॥

शुक्लाः सुदामदामानो लोकदिक्सूत्र एव च ।

गृध्रो होता कपालश्च शिवेशो गौतमस्तथा ॥ ४२६ ॥

ऋषभो दधिदोर्योगी गुहेशो गाग्रतिः  परः ।

जटी माली गृहेशानः शिखंड्युग्रो भृगुः शिखी ॥ ४२७ ॥

शूली सुमाली सुगतिर्हृष्टहासो  पदारुकः  ।

लाङ्गली चित्रदण्डी च लकुलेशश्च भावनः ॥ ४२८ ॥

एतत् पूर्वधरं प्रोक्तमानुपूर्व्या व्यवस्थितम् ।

प्रणेतारमदृष्टस्य वादस्योक्तं तु सुन्दरि ॥ ४२९ ॥

किं त्वस्य च विशेषोऽयं योनिजे साध्यसाधने  ।

दृष्टादृष्टार्थवादस्य प्रणेतारोऽधुना प्रिये ॥ ४३० ॥

रुद्रो भूतिर्विगूढाख्यः कथ्यन्ते शिशुभिः सह ।

हरो झण्टीशनामा च दारुकोऽर्थान्तरेश्वरः ॥ ४३१ ॥

ईशानरुद्रसंज्ञन्यो एष्टानरुद्रसज्ञोन्यो कृष्णपिङ्गेश्वरः परः ।

वृषः शिखेन्द्रनियमाः साक्रूराबलशालिनः ॥ ४३२ ॥

त्रिवेगधार्युमाभर्तृभूतेश्वरकपर्दकाः ।

शङ्करः स्थाणुसंज्ञश्च ह्यर्धनारीश्वरः परः ॥ ४३३ ॥

श्वेतपिङ्गेश्वरो देवो महाकालैकवीरकौ ।

संवर्तरुद्रोमाकान्तौ मण्डलेशश्च वीर्यवान् ॥ ४३४ ॥

भारभूत्यन्तिका ह्येते पञ्चविंशतिसंख्यया ।

अमीषां वच्मि शिष्याणां नामानि शृणु सैन्धव ॥ ४३५ ॥

मस्करिः पूरणश्चैव कृष्णकौशलकावुभौ ।

सनत्कुमारः कपिलो गौतमः सवसिष्ठकः ॥ ४३६ ॥

अष्टांशको नाशकेतुः कश्यपो गालवस्तथा ।

भौतिकश्च सशाकल्यो वल्मीकिः क्रोधतापसः ॥ ४३७ ॥

गुरुः पराशर लवो पिप्पलादश्च योगभृत् ।

संवर्तश्चायुतश्चैव दम्भपुष्पश्च दम्भकः ॥ ४३८ ॥

प्रणेतारो ह्यदृष्टस्य वादस्यामी वुधा नवः व रु णवः ।

त्रयोविंशतिराख्याता शिष्यानेषां प्रिये शृणु ॥ ४३९ ॥

जग्नुम् रु जह्नुः सुनीतस्तृणबिन्दुरिक्षुश्चैवाथ विश्रवाः ।

दीर्घहारो भगराख्यो विप्रो वसुतराधिपः ॥ ४४० ॥

अगस्त्युपाध्यायशुकौ भृगुवश्चैवाङ्गिरास्तथा ।

योगिराड् जमदग्निश्च ऊर्ध्वगः स्थूलमौलिकः ॥ ४४१ ॥

वालखिल्योमुनिश्चैव वज्रस्तेयस्तपोधनः ।

वाक्शुद्धः शिवस्सुचारुस्त्रयोविंशतिरप्यमी ॥ ४४२ ॥

शिवादिपीडनान्तास्ते रुद्रा द्वात्रिंशतिः प्रिये ।

गुरवः प्रथमोलिस्था शृणु क्षेत्रज्ञसंयुताः ॥ ४४३ ॥

शिवोऽनन्तः प्रचण्डश्च एकवीरो महेश्वरः ।

प्रदापनः प्रधानश्च भीमो भौतिक एव च ॥ ४४४ ॥

यज्ञः करालः कपिलो महेन्द्रो दिनकृत् परः ।

दक्षः प्रतोदनामा चरुरेव कटं कटः ॥ ४४५ ॥

अम्बुहर्ता च ऋग्वेदो नादोऽन्यः संज्ञसंज्ञकः ।

अथर्वाचार्यनामान्यो विरूपाक्षस्तथा परः ॥ ४४६ ॥

ज्येष्ठो नारायणो विप्रो गुढोदरगुहेश्वरौ ।

यमपालो गुण्डनश्च क्षेत्रज्ञान् वच्मि विस्तरात् ॥ ४४७ ॥

स्वचितोऽनङ्गसङ्गीत सङ्क्रंदनविलोमकौ ।

वैवर्त्तौ दुन्दुभिदिशो हेलालीलाप्रकम्पनः ॥ ४४८ ॥

माधवो मन्मथो नीलः सावित्रो विभवो नलः ।

शिवादीनाममी शिष्या दश पञ्च प्रकीर्तिताः ॥ ४४९ ॥

कथिता भूतनिर्गुढा विश्वरूपा : मया तव ।

अधुना गूढनिर्गूढां पङ्क्तिं युग्मवतां शृणु ॥ ४५० ॥

श्वेतादिवषट्कारान्तान् तां भवान् षट्षष्टिमानगान् ।

श्वेतश्चैव सुतारश्च सुवामो गौतमस्तथा ॥ ४५१ ॥

लोकाक्षश्च सुहोता च तथा वैशिरसः परः ।

एकपादो जिगीषुश्च वृषभो दशवाहनः ॥ ४५२ ॥

श्रीकर्णश्च गुहावासी शिखण्डी जटिमानुषः ।

भृगुश्चैव शिखी शूली वालिश्चैवाट्टहासकः ॥ ४५३ ॥

दारुको लाङ्गलिश्चैव त्रिदण्डिरषढिः परः ।

सोमेशो लकुलीशश्च ह्यष्टाविंशत्यमी शिवाः ॥ ४५४ ॥

व्याख्यानानुग्रहकराः प्रमाणज्ञानभेदतः ।

प्रासङ्गिकी त्वसौ तेषां सद्योनुग्रहकारिता ॥ ४५५ ॥

तृतीया गुरुपङ्क्तिर्या वरेशाद्यष्टत्रिंशिका ।

सद्योनुग्रहकर्तृत्वे तस्या देव्यधिकारिता ॥ ४५६ ॥

वरेश्वरश्च देवश्च भूतिर्दीर्घभुजो रविः ।

सद्योजातस्तथा स्थाणुर्झण्टीशः षण्मुखः परः ॥ ४५७ ॥

चतुराननः परः क्रूरो भुजङ्गोदम एव च ।

चक्रपाण्यर्द्धनारीशौ मेघसंवर्तकः प्रियः ॥ ४५८ ॥

भस्मीशः कामनाशश्च कपाली भूर्भुवस्तथा ।

विशालाम्बुधनीलोर्णवीरशान्तोग्रमाठना ः ॥ ४५९ ॥

केतुकान्तकुमारार्याः ककुभीशानलक्षणा ।

वौषट्कारो वषट्कारः कथितास्तु गुरूत्तमाः ॥ ४६० ॥

भैरवाप्तप्रवक्तारः स्वाधिष्ठानगतायुशः ।

चतुर्वक्त्राश्चतुर्दंष्ट्रा ये द्विपर्वप्रकाशिताः ॥ ४६१ ॥

रुद्रास्ते द्विभुजैकास्याः क्षेत्रज्ञाः शिष्यकोटिगाः ।

एवमेतत्समाख्याता अव्यक्तव्यक्तलक्षणम् ॥ ४६२ ॥

तत्त्वभावसभूताख्यं रुद्रसर्गसमन्वितम् ।

गुणादीनि तु तत्त्वानि विशेषान्तानि सुन्दरि ॥ ४६३ ॥

सिद्ध्यादयः स्मृता भावा महत्तत्वसमाश्रिताः ।

प्रत्यायकाश्च ये तत्र ते सवर्णाः प्रकीर्तिताः ॥ ४६४ ॥

ज्ञानाज्ञानविभेदे तु क्रमशः संस्थिताः सुराः ।

विपर्ययस्वरूपस्तु बिन्दूनां पञ्चचङ्क्रमात् ॥ ४६५ ॥

वैराग्यञ्च अवैराग्यं कादितादिषु संस्थिताम् ।

शेषेषु शक्तिसंस्था वै विज्ञेयानुक्रमेण तु ॥ ४६६ ॥

भूतान्येकशिवादीनि रुद्रा गूढा निगूढका ।

तथा भूरिनिगूढा च ह्येतत् सर्गचतुष्टयम् ॥ ४६७ ॥

सन्ति मण्डलिनो मूर्ध्नि प्रधानस्य महामते ।

विग्रहेशबलाघ्राता विशुद्धज्ञानविग्रहाः ॥ ४६८ ॥

नायकाः सर्व जगतो मूलप्रकृतिवासिनः ।

वीरभद्रो महादेवो वामदेवो भवोद्भवः ॥ ४६९ ॥

एकपिङ्गेक्षणेशानौ भुवनेशस्तथा परः ।

अङ्गुष्ठमात्रदेवश्च कथितोऽत्राष्टमो मया ॥ ४७० ॥

शतकोटिप्रविस्तीर्णा मायानन्ता प्रकीर्तिता ः ।

तस्या ऊर्ध्वमधोदीनि प्रधानान्तानि सुव्रत ॥ ४७१ ॥

दशदशोत्तराण्याहुस्तन्त्राध्वान्तविचारकाः ।

शतान्तराण्यजादीनि वीजान्तान्यनुपूर्वशः ॥ ४७२ ॥

निवृत्तेरधिकारोऽयमशुद्धाध्वनि गीयते ।

सहस्रधा प्रतिष्ठाख्यं सन्तानमीश्वरान्तिकम् ॥ ४७३ ॥

विद्येशान्तं विद्यया च लक्षधा तदपीक्षिताम् ।

शान्तिरष्टगुणा माया कोटिधा सा प्रतिष्ठिता ॥ ४७४ ॥

ततो मेयमनन्ताख्यमाख्यातं शान्त्यतीतगम् ।

व्याप्तिरेषा समाख्याता तत्त्वमात्रासु सुन्दरि ॥ ४७५ ॥

गुणसाम्यप्रमाणस्य प्रसङ्गं तदनादिनः ।

यत् स्थितं तत् प्रवक्ष्यामि शृणु त्वं चावधारय ॥ ४७६ ॥

षट्पूर्वं पाशजालन्तु तथा विग्रहिणो हराः ।

सिद्ध्यादयस्तथा भावास्तत्वान्मूर्धादिकानि तु ॥ ४७७ ॥

रागाद्यञ्जनजालञ्च सफलं सम्प्रतिष्ठितम् ।

सा मया भूतभैरोधा देहात् तत्त्वार्थकर्मजा ॥ ४७८ ॥

सामयाः समयध्वंसा निरोधाश्चाप्यकारणात् ।

भौताः पुर्यष्टकं तत्वा रागाद्याश्चाप्यपश्चिमाः ॥ ४७९ ॥

दैहाः प्राधानिकाः कार्मा नरके यातनात्मकाः ।

एते पाशाः समाख्याताः कथ्यते निग्रहाष्टकम् ॥ ४८० ॥

विग्रहो विग्रहाधारो रुमण्वांश्चोदकाक्षकृत् ।

मलयोत्कृवीजयोत्कृकर्मयोत्कृस्तमोमयः ॥ ४८१ ॥

भावास्तत्त्वानि रागाद्यं सफलं प्राक् प्राकीर्तितम् ।

अस्मद्रागगृहावस्थां चित्रभोगबुभुक्षवः ॥ ४८२ ॥

सपत्नीका विचेष्टन्ते सुखनीला नियोगिनः ।

अजानः प्रथमस्तेषां तथा भवभवोद्भवौ ॥ ४८३ ॥

एकपिङ्गक्षणेशश्च भुवनेशश्च वीर्यवान् ।

गहनेशस्ततः श्रेष्ठोऽङ्गुष्ठमात्रप्रजानुकः ॥ ४८४ ॥

हरः शङ्करनामा च रञ्जको जञ्जिकेश्वरः ।

भोगसंसाधनान्येषां कार्याणि करणानि च ॥ ४८५ ॥

बीजोत्थानि तु तद्योग्यं तत् स्वगोचरसंस्थितम् ।

अध्वन्यविमलो ह्येव ये स्थिता वेश्मभूमिषु ॥ ४८६ ॥

तेषामेषा व तेषां मेथा क्रिया देवि साधारणगतिं गता व ख गताः ।

संस्थात्र बाह्यतो देवाः सन्ति खण्डेन्दुमौलयः ॥ ४८७ ॥

त्रिशूलिनः प्रिया मिश्रा ः स्वस्थभोगा निराकुलाः ।

कपालीशोर्द्धनारीशावेकाक्षो विश्वसंज्ञकः ॥ ४८८ ॥

विरूपाक्षः पिनाकी च सर्वज्ञः पाकशासनः ।

नियोक्ता भीतिबाहुश्च यथायोग्यनियामकः ॥ ४८९ ॥

धूरेयो धूमकेतुश्च धन्वी चानिलवाहनः ।

कौशिकः षोडशेशानाः कथिताःशृण्वतः परम् ॥ ४९० ॥

विद्यानियोगिनो वीराः वीरभोगैकलालसाः ।

जायामिश्राः समदृशो जटिलोग्रकपालिनः ॥ ४९१ ॥

विचरन्ति महाभोग्यभोगिनां भुवनेश्वर ः ।

उमाकान्तः प्रचण्डाख्यभीमवामैकवीरकाः ॥ ४९२ ॥

सर्वेश्वरोग्रानन्ताख्यौ भवैकशिवसंज्ञकौ ।

कोटिसंस्थाप्यजे शोऽत्र स च द्वादशगो मतः ॥ ४९३ ॥

कलावस्थापितो विष्णु रुद्रवृन्दस्ततो भवेत् ।

नागोपवीतिनं भीमं चन्द्रोष्णीशं कपर्दिनम् ॥ ४९४ ॥

नारीनिरुद्धदेहार्द्धमवितृष्णं स्वगोचरे ।

वामो ज्येष्ठश्च रुद्रश्च कालश्च कलविकरणः ॥ ४९५ ॥

चलविकरणोदेवो बलः प्रमथनस्तथा ।

दमनः सर्वभूतानां मनश्चैव मनोन्मनः ॥ ४९६ ॥

अधिकारप्रदस्तेषां देवो विग्रहभैरवः ।

स्थानमेतत्चाधिकारं ततो भोगोज्ज्वलं महत् ॥ ४९७ ॥

वागेशी विष्टपं देवि भोगस्थानं प्रकीर्तितम् ।

लयो मनोमनीषाभ्यां जायते कारणेच्चया ॥ ४९८ ॥

गारुडे भूततन्त्रे तु शिशुशास्त्रे च भैरवि

ये प्राप्ता मानुवीं सिद्धिं भैरवः क्रियया नराः ॥ ४९९ ॥

तेषां स्थानत्रये प्रोक्ते त्रिस्वरूपागतिः स्मृता ।

ततो विकृतसंस्थानसंस्थिताश्चन्द्रमौलयः ॥ ५०० ॥

लीलावतीमुखाम्भोजप्रचुम्बन षडञ्जयः ।

नवेन्दुलेखाचिह्नोद्ध्र्वे जटामण्डलमण्डिताः ॥ ५०१ ॥

व्यालकल्माषजव्याघ्रचर्मवासो युगाङ्किताः ।

शावपुष्पधरा देवा नीलग्रीवाः कपालिनः ॥ ५०२ ॥

कालरूपी पटद्रुश्च कालाख्यो घोरनामकः ।

मातङ्गश्चण्डगर्भोग्रदीर्घरेखौ वराहकः ॥ ५०३ ॥

उच्चुष्मः शाबरो गन्धो याम्योऽफल फलोऽपरः ।

क्रोधनोन्मत्तचण्डश्च शूलाध्र्वौ ह्यधशूलकः ॥ ५०४ ॥

एवमन्ये च वीरेशा घोरतन्त्रा वतारकाः ।

कालतत्वे विजृम्भन्ते कालसङ्कर्षणीप्रियाः ॥ ५०५ ॥

भैरवानुप्रसक्ताश्च तन्त्राचारविलोपकाः ।

विद्यया तपसा कर्म निश्चयेनाथवा प्रिये ॥ ५०६ ॥

पिण्डयोग्यतया वाथ तत्वसिद्धिगताश्च ये ।

ततो भोगां विभुज्याशु क्रमशो यान्ति निर्वृतिम् ॥ ५०७ ॥

अधोविषचरी घोरानन्तस्त्रोतोविमालिनी ।

कर्कन्धुरिव प्रेंखद्भिः फलाण्डैर्भाति मण्डिता ॥ ५०८ ॥

महाकक्षपुटाकारः षट्पदा दीपमालिनी ।

रुद्रक्षेत्रजसंकीर्णा मानहीना लयाकुला ॥ ५०९ ॥

मण्डलान्तेषु वक्ष्यामि वासिनो भैरवाणवः।

अथो विरुद्धदेहार्धाः सर्वे भस्माङ्गरागिणः॥ ५१० ॥

विधुमण्डलरश्म्यौघाःशिखण्डोल्लसिताः ।

कल्माषकन्धरात्युग्रत्र्यक्षामुद्भासितानराम् ॥ ५११ ॥

शर्वाध्वस्थो ह्यसाध्यस्तु गहने गहनेश्वरः।

हरिणो मेषकेतुश्च दीर्घपाणि रजोधिपः ॥ ५१२ ॥

कुमारोऽथ देवो देवेशानस्तथा परः।

व्यस्तशीर्षोर्ध्वगेशश्च ऊर्ध्वचेता फणीश्वरः ॥ ५१३ ॥

भगीशो ह्लादनश्चैव तथा हरिहरः प्रभुः।

हरिस्तनो हरिश्चैव कुन्दरः कुञ्जरोनघः ॥ ५१४ ॥

वैद्युतो ह्युद्भवः कामी महाकामी विचेतनः।

भागीश्वरो मदोन्मत्तो ह्यष्टाविंशत्यमीश्वराः॥ ५१५ ॥

अधः पुटे विजृभन्ते पशुपत्यर्थबोधकाः।

एषामूर्ध्वे दशेशास्तु गोपनिर्ग्रन्थिमाश्रिताः ॥ ५१६ ॥

महामायी विमायी च मायावी मदनस्तथा ।

मोहनो मन्मथश्चैव ब्रह्मणोधिपतिस्तथा॥ ५१७ ॥

प्राक्स्रवन्तु समाश्रित्य स्थिता भुवनपालकाः।

वरीयांस्त्रिकलो ह्येषां मध्यावस्थानमाश्रिताः ॥ ५१८ ॥

आगस्त्यज्ञानसंतापक्रियाप्रान्ता मनीषिणः।

स्वगोचरपतिज्ञानबोधकः  साधकः शिशुः ॥ ५१९ ॥

क्षोभणोन्मादनश्चैव  दुन्दुभिस्तथा ।

शिखेशः स्वशिवश्चैव क्षेमेशो दक्षिणे पुरे  ॥ ५२० ॥

ज्ञानधृक् प्रवरोह्येष मध्यमस्थानमाश्रितः  ।

गूढज्ञानक्रियाप्राप्ता गूढज्ञानविचारकाः ॥ ५२१ ॥

गूढज्ञानार्थशिष्येभ्यो गूढज्ञानप्रयच्चकाः ।

विकृतोऽविकृतः  पिङ्गो दुर्धरो दुर्मतिस्तथा ॥ ५२२ ॥

विद्येशानोऽधिकारी च सप्तैते भुवनाधिपाः ।

जन्मजन्मन्यगुर्वेषामष्टौ स्थायिमहेश्वराः  ॥ ५२३ ॥

ज्ञानोभयोग्रमार्गस्था ज्ञानोभयविचारकाः ।

ज्ञानोभयप्रसिद्धास्तु ज्ञानद्वयविमर्शकाः ॥ ५२४ ॥

ज्ञानोभयार्थशिष्येभ्यो वारुण्यामधुना शृणु ।

दीर्घबाहुः कलेशश्च  कालीशः क्षेमकस्तथा ॥ ५२५ ॥

धृतिः प्रीतिकरश्चैव धृतिप्रीतिकरः परः ।

सर्वोन्नत स्थितिस्थापिमुख्यपक्षप्रतिष्ठितः ॥ ५२६ ॥

प्रपञ्चालोचनायुक्तज्ञानद्वयविमर्शकः ।

तत् समासगुणं प्राप्य श्रेयः सौन्दर्यनिर्मिताः  ॥ ५२७ ॥

नानाभोगरसास्वादमदिरामत्तचेतसः ।

भवो भावस्तथा भीमः श्रीवत्सश्चतुरङ्गकः  ॥ ५२८ ॥

वीराधीशशिवो यश्च सममध्यप्रतिष्ठिताः।

भस्मान्तकप्रधानोऽत्र स्वपरिच्चदमध्यगः॥ ५२९॥

एतैः संसाधितं स्थानं प्रपञ्चज्ञानविद्यया।

एते यत्र सदा रेमुर्मायाभोगैकलालसाः ॥ ५३०॥

मदमूर्च्छितगम्भीरो कारणेशो विभुस्तथा।

अजस्रः स्रंसनोऽनन्तः शिवोऽविद्याविभावरी ॥ ५३१॥

भोगाध्यक्षो दशैकश्च सप्तपञ्चप्रमाणगम्।

तेजोनिधिगुणोद्भासि ज्ञानमेतत् सुजाज्वलम्॥ ५३२॥

तत्प्रभावाच्च मायाध्वपुटस्थाननिवासिनः।

मिश्रशक्तिगुणावाप्तिर्वपुषोमी बुभुक्षवः ॥ ५३३॥

जुषन्ति विविधान् भोगांश्चिरजन्मश्रियावहा ।

एते वीराणवः सर्वे विग्रहेशनियोगिनः ॥ ५३४॥

असौ चक्रप्रभुः साक्षात् कर्तृत्वे संव्यवस्थितः।

द्वारद्वारितयान्ये तु स्थिता : विश्वेशि योगिनः॥ ५३५॥

भैरवेच्चानियोगेन तदिच्चा संप्रवर्तते।

तदिच्चाप्रेरिताः सन्तः प्रवर्तन्ते नियोगिनः॥ ५३६॥

नियोगिनामभिप्रायाच्चक्राणि विविधानि तु।

स्वर्गोच्चराधिकाराय प्रवर्तन्तेऽत्र एव हि॥ ५३७॥

प्रकृतौ विग्रहेशस्य वक्ष्यंत्यतुलया फलम्।

विश्वरूपधरः शम्भुर्लोहितो दीर्घजिह्वकः ॥ ५३८ ॥

महानासो हिरण्याक्षो महारुद्रश्च सुभ्रुवः ।

चपलो रतिश्च विरतिः अघोरः सर्वगः परः ॥ ५३९ ॥

त्रिदशामी समाख्याता नानामणिकृतालयाः ।

वागेशीज्ञानसंशुद्धास्तनुमासाः कृशोदराः ॥ ५४० ॥

सप्तनवतिमुख्यानि दुर्गेऽस्मिन् भुवनानि तु ।

कथितानि महाबाहो शेषसंख्या न विद्यते ॥ ५४१ ॥

शुद्धाशुद्धाध्वविष्कम्भस्थायि वागीश्वरी गृहम् ।

ततोऽनन्तशिवावासं स्वशिवश्च विराजते ॥ ५४२ ॥

ओंकारपद्मविस्तीर्णं साध्योंकारस्य शोभनम् ।

धात्राधारमनीशस्य ध्याताधारस्य चैव हि ॥ ५४३ ॥

वीरस्य बन्धुमानस्य प्रपञ्चस्यामृतात्मनः ।

रेमुस्तत्रैव ते वीराः प्रमाणाशुविचारकाः ॥ ५४४ ॥

पञ्चार्थाङ्कुशहृद्दृह्या ऊहलक्षणकादयः ।

आदर्शाकर्षसंयुक्ताः सर्वचिद्वेगपारगाः ॥ ५४५ ॥

विद्याधिपतिवीरेशतारोदयविरामगाः ।

चतुर्दश महादेवाः प्रबुद्धा निरहङ्कृताः ॥ ५४६ ॥

ऊहाज्ञानप्रवृत्तिस्था आद्यष्टौ ये प्रकीर्तिताः ।

महाविशारदाः षट्वना नागमक्रियाचितः ॥ ५४७ ॥

मायेयं पञ्चरूपं तु मया सम्यक् प्रकाशितम् ।

विष्टपाटोपसङ्घट्टघटितं शुद्धमार्गगम्॥ ५४८ ॥

यत् तद् यथास्थितं देवि विद्याद्यं प्राक् प्रकीर्तितम्।

देव्युवाच ।

या प्रागेकविधा प्रोक्ता माया पञ्चविधा पुनः ॥ ५४९ ॥

युक्तिमस्या ः वदेशान सन्देहविनिवृत्तये ।

श्रीभैरव उवाच ।

साधारणार्थं सा धार्या प्रभूताख्या शरीरिणी ॥ ५५० ॥

सन्ताख्या चेति विख्याता माया पञ्चविधा प्रिये ।

कलादिशाखाकलिलैः साधारणगतिं गताः ॥ ५५१ ॥

विश्वे तु जन्तुचक्रस्य सा धार्या देहदर्शनात् ।

साधारणाध्वनिर्देश्या सा धार्यास्तु शिवाणवः ॥ ५५२ ॥

माया साधनभोगस्था सा धार्या च तदुक्तितः ।

ऊर्ध्वादितत्त्वदल्यां ये कण्टका भुवनात्मकाः ॥ ५५३ ॥

तद्भेदावस्थया सा तु प्रभूताख्या प्रगीयते ।

शिरोमुखगलोरस्कस्तनोदरकृकाटिका ॥ ५५४ ॥

गुह्योरुजानुजङ्घासु गुल्फपादविभागतः ।

सर्वावयवभेदेन ध्यानपिण्डप्रतिष्ठया ॥ ५५५ ॥

परमाणुस्वरूपेण लक्षणोद्येन वा प्रिये ।

शरीरिणा महामाया विज्ञातव्या शरीरिणी ॥ ५५६ ॥

विनष्टे तत्वसंस्थाने रुद्रक्षेत्रज्ञसंयुते ।

प्रलयेऽपि न योनित्वं या जहाति कदाचन ॥ ५५७ ॥

विश्लिष्टानां तु बीजानां ग्रसनाद्धूरिजात् पुनः ।

बीजानां सृजनायात्मा नात्मानञ्च नियामयेत् ॥ ५५८ ॥

सृष्ट्याहर्मुखकाले तु यस्मिन् यद्बीजमाश्रितम् ।

तस्याविर्भावहेतुत्वे भजते सन्निधानताम् ॥ ५५९ ॥

तत्र तत्रैव तेनासौ सन्ताख्या मोहनी मता ।

औपचारिकरूपाणि पञ्चैतानि मया तव ॥ ५६० ॥

कथितानि महादेवि वास्तवी वाक् प्रकाशिता ।

ज्ञात्वा ह्येतत् समस्तं सकलगुणगणा पूरितं विश्वमार्ग-

भावस्थानापहार प्रतिनिधिगणनासंयुतं संयुतं भ्रान्तिहीनम् ।

हेयोपादेयवस्तुस्थितिदिवसकृताक्षिप्त मोहान्धकारा ः ।

विश्लेषोद्दामधाम्नः परहरसमतां जन्तवो यान्ति रागम् ॥ ५६१ ॥

श्री भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां नवमः पटलः ॥ ९ ॥

दशमः पटलः ।

श्रीदेव्युवाच ।

कियती स्थितिसङ्ख्यास्य जगतः संक्षयस्तदा ।

कियन्त्यङ्गानि विकृते रजोगादीन् वदस्व मे ॥ १ ॥

श्रीभैरव उवाच ।

पञ्चपञ्चकवर्षस्थाणु ः प्राणो यो प्रयत्नगः ।

हृद्व्योम्नो निर्गतो व्योम्नो भूयो हृत्पद्ममाश्रितः ॥ २ ॥

प्राण एव समाख्यातः स्वस्थस्योध्व रव –र्द्धं प्रयाणिनः ।

यवषट्कं त्रियूकन्तु अणुकद्वयमेव च ॥ ३ ॥

तुटिरेषा समाख्याता तुटियुग्मं लवो भवेत् ।

लवपक्षौ निमेषस्तु निमेषश्च दशाष्टभिः ॥ ४ ॥

काष्ठाकलापिकाष्टाभिः त्रिंशद्भिः संप्रतिष्ठिताः ।

तावतीभिः कलाभिस्तु मुहूर्तः प्रोच्यते बुधैः ॥ ५ ॥

दशविंशमुहूर्तैस्तु नक्तंदिवमुदाहृतम् ।

तस्यापि त्रिविधं रित्थं दैवं पित्र्यं च मानवम् ॥ ६ ॥

दशपञ्चत्रियामाहैः पक्षमेकं वदन्ति हि ।

यवोर्ध्वे पक्षयुग्मन्तु मासयुग्ममृतुः स्मृतः ॥ ७ ॥

त्रिविक्रमक्रमान्तश्च ह्ययनं गीयते बुधैः ।

सम्पुटेनायने नैव समैका संप्रतिष्ठिता ॥ ८ ॥

मासं चार्तेन मानेन मया पैत्रमुदाहृतम् ।

सितासितक्रमात् पक्षावहोरात्रस्तु सूरिभिः ॥ ९ ॥

शब्दसागरिकं दिव्यमयनमुदग्दक्षिणम् ।

पक्षादि कल्पना प्राग्वद्द्वयोः स्वदिन पूर्वकाः ॥ १० ॥

संवत्सरः कलाभिस्तु त्रयस्याप्यैकसंख्यया ।

मानवोशनसा वेदा व्योमत्रयसमन्वितः ॥ ११ ॥

प्रोक्त स्त्रिंशद्धृते पैत्र्यः कलाःस्युर्दिव्यकाष्ठगाः ।

शतानि नवदेव्यास्तु पैत्रा द्वादशभिर्हृते ॥ १२ ॥

चतुर्विंशद्विभक्तेयं संख्या स्यात् प्राणमालिनी ।

वक्ष्यामि तेऽधुना सर्वं पितृकालं युगादिकम् ॥ १३ ॥

महाकल्पावसानन्तु कालं कालविदोदितम् ।

सन्ध्यासन्ध्यांशसंयुक्तं नाप्राकृतयुगं तु यत् ॥ १४ ॥

द्विर्नभोर्तुस्वराष्टाणां संस्था यावत् प्रतिष्ठितम् ।

तावन्नभोक्षिवह्न्याधिस्त्रेतादीनि विजानथ ॥ १५ ॥

द्विरन्ध्राष्टाष्ट्युगलैर्द्वापरं परिकीर्तितम् ।

कलियुगः समाख्यातो द्वापरः सकलीकृतः ॥ १६ ॥

चतुर्युगमिदं पैत्रं पिण्डीभूतं सबिन्दुकम् ।

वेदाब्धीन्दुयुतं प्रोक्तं नगयन्त्रमिदं स्फुटम् ॥ १७ ॥

पित्र्यन्तरं समाख्यातमेकसप्ततिभाजितम् ।

व्योमत्रयाद् द्विपक्षाक्षिकाष्ठाभिस्तत् प्रतिष्ठितम् ॥ १८ ॥

षट्के षट्के सह प्रोक्ता प्रवेशे निर्गमेऽपि च ।

नियमस्तु भवेत् संध्यासन्ध्याशश्चापि सुन्दरि ॥ १९ ॥

ततस्तस्मिन् महादेवि दशतुर्येण भाजयेत् ।

भाजते कल्पिका देया सन्ध्यासन्ध्यांशसंयुता ः॥ २० ॥

निर्गमे च प्रवेशे च सूर्या मानसहस्रगा ।

एतद्युगसहस्रन्तु पैत्रमुक्तं तु सूरिभिः ॥ २१ ॥

इन्द्राग्निव्योमषट्केन स्फुटमेतत् प्रकीर्तितम् ।

कल्पोऽयं पैतृकःप्रोक्तो महाकल्पो द्विराहतः ॥ २२ ॥

शब्दकृष्णं समिच्चन्ति सुरज्येष्ठस्य सूरयः ।

कालेनानेन कर्तव्याः पक्षाद्याः कल्पनोदिताः ॥ २३ ॥

पित्र्यन्तरं महादेवि व्योमवह्निसमाहतम् ।

शतमन्त्रान्तरं प्राहुः पुंसां वर्षप्रमाणकम् ॥ २४ ॥

एवं पैत्रो विकल्पस्तु प्रोक्तो भाजनभाजितः ।

प्रयाति युगसाहस्रं वासरं पद्मजन्मनः ॥ २५ ॥

कोटिशतानि चत्वारि कोटयो द्विजवर्षगाः ।

द्विगुणोऽयं महाकल्पः शेषं पूर्वोदितं विदुः ॥ २६ ॥

इन्द्रान्तरे च पितरः पतन्त्यग्निखमानगाः ।

स्थविराननभोयुग्मवेदसंख्याविभागगाः ॥ २७ ॥

रात्रावपि तथैवं हि वारे नक्तंदिने प्रिये ।

विलीयन्ति शुनासीरा देवि मङ्गलयुग्मगाः ॥ २८ ॥

निजवर्षसहस्रान्ते सुरज्येष्ठो विनश्यति ।

तच्चेते पितृवर्षाणि दिक्वर्ताष्टाङ्कबिन्दुभिः ॥ २९ ॥

तच्चब्दस्थायि त्रैलोक्यं तन्निमषाभङ्गिमान् प्रिये ।

कालानलस्थं कुरुते सटाटोपविभासुरः ॥ ३० ॥

लीने वेधसि ब्रह्माण्डं लयं यान्ति स्वसंभवे ।

दशवारं प्रलीने तु ह्यस्मिन् तोयं विनश्यति ॥ ३१ ॥

एवं वह्नयादितत्वानां संस्थितस्तु दशोत्तरः ।

प्रधानान्तो नराद्यन्तो यथा व्याप्तो तथा प्रिये ॥ ३२ ॥

स्थिता व पिशिनान्तस्तु विज्ञेयः प्राक् प्रचोदितः ।

यस्य यन्त्रोद्भवं विद्धि लयस्यैव च यत्र तु ॥ ३३ ॥

शतायुषः स्मृता जीवाः सर्वे संपूर्णकर्मिणः ।

निकृष्टकर्मणामायुर्न तु वक्तुं प्रपार्यते ॥ ३४ ॥

आधारविभवाः केचिल्लीयन्त्याम्रेडयन्ति च ।

शुद्धाशय बाशाः केचित् स्वोद्ध्र्वस्थानं व्रजन्ति हि ॥ ३५ ॥

अत्यन्तविमलत्वाच्च केचिद् भाजसिताध्वनः ।

जयद्रथ उवाच ।

विश्वक्सेनोग्रयोर्देव स्थितिनाशौ निवेदितौ ॥ ३६ ॥

तावाचक्ष्व विशालाक्ष सन्देहविनिवृत्तये ।

श्रीभैरव उवाच ।

सरोजजन्मवश्चाब्दैः सरःस्वाननसंस्थितैः ॥ ३७ ॥

नक्तंदिनं भवेदेकं पक्षिपत्रस्य सैन्धव ।

सप्तविन्दुरसैर्नन्दै स्थितं तत्र दिवाकरैः ॥ ३८ ॥

पित्रब्दैः संस्थितं तद्धि तैश्च पक्षादिकल्पना ।

मधुहर्त्तुः प्रकर्तव्या विप्रवच्चायुषो गतिः ॥ ३९ ॥

एवं शौर्यश्च मात्रेण अहोरात्रं तु वैमलम् ।

व्योमाष्टकं रसाष्टन्तु रसवेदयिता न तु ॥ ४० ॥

प्रयान्ति नृपशार्दूल पितृवर्षाणि तत्र तु ।

अस्यापि मुदिते ज्ञेयाः पक्षाद्या द्वादशान्तिकाः ॥ ४१ ॥

स्थिते तस्यावसाने तु भवेऽते ॡ भवते विशरारवः ।

रूपन्तु स्वरूपन्तु रूपेषद्रुद्रविन्दकम् ॥ ४२ ॥

मया पुरोपदिष्टं हि सगुणस्य गुरूत्तमैः ।

दिग्व्योमरूपन्तन्तुसु रसवेदसमन्वितम् ॥ ४३ ॥

विष्टरश्रवसो मानं जीवितस्य प्रकाशितम् ।

मानवो भवते पैत्र्यः कालस्त्रिंशतिभाजितः ॥ ४४ ॥

पैत्र्योऽपि जायते दिव्यो द्वादशांशविभाजितः ।

प्रागुद्दिष्टमतिः कार्या शेषे पन्निलनन्दन ॥ ४५ ॥

परमार्थयुतः पिण्डो दृश्योऽणुः संप्रतिष्ठितः ।

दशभिस्तैः शिरोजन्म फलैका संप्रति ॥ ४६ ॥

युकाष्टकेन संप्रोक्ता सस्य राजमितिर्मता ः ।

सस्यराजाष्टकेनैव हृत्स्थोऽङ्गुष्ठप्रतिष्ठितः ॥ ४७ ॥

चतुर्विंशतिभिर्स्तैस्तु हस्तमानमुदाहृतम् ।

पदं वै हस्तयुग्मेन चत्वारिंशत्पदो गुणः ॥ ४८ ॥

आयामविस्तरसमा तस्माज्ज्ञेयं निवर्तनम् ।

अथ यामद्विरूपेण तदा तत् प्रविभाव्यते ॥ ४९ ॥

निवर्तनशतेनैव क्रोशः सिद्धोऽत्र शासने ।

तैश्चतुर्भिः समिच्चन्ति योजनां गणितद्दशः ॥ ५० ॥

अनेन योजनेनोक्तं मानं भूमण्डलादिके ।

विशदमिदंमशेषं कालमानन्ददेशो

विदितभुवनमालासंभवस्थानवासः ।

मतिकुटिलसन्नद्धं ख पति प्राप्य मन्त्रार्णमेकम् ।

न जुषति न प्रसिद्धः कोऽत्र लोकेशसिद्धः ॥ ५१ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसंकर्षण्यां दशमः पटलः ॥ १० ॥

एकादशमः पटलः ।

श्रीदेव्युवाच ।

देवदेव महादेव सर्वज्ञेश महाद्युते । ब्रूह्येकवीरं मन्त्रज्ञ पूर्वोक्तं

मन्त्रसिद्धये ॥ १ ॥

देव्योऽथ शम्बरा दूत्यो ह्यनुदूत्यश्च किङ्कराः ।

गणाश्च लोकपालाश्च कार्यमन्त्रगणाश्च ये ॥ २ ॥

एकायां संप्रविष्टास्तु यथा सन्ति सुरेश्वर ।

तथा प्रकाशयेशान सर्वेशाननमस्कृतः ॥ ३ ॥

यया यत्नेन सिद्धयन्ति जपहोमेन साधकाः ।

निःशेषमन्त्रवर्गोयं यस्याः सम्यक् प्रतिष्ठितः ॥ ४ ॥

यया च विद्यया युक्ताः सदेवासुरमानुषाः ।

क्रियन्ते वशगा देवाः सर्वकालफलप्रदाः ॥ ५ ॥

पिहनाद् गोपितायाश्च च गूढा सर्वज्ञसिद्धिदा ।

प्रबोधकरणी विद्या कृत्यावेतालसाधनी ॥ ६ ॥

त्रैलोक्यराज्यप्रदया ययातुल्या न विद्यते ।

आश्चर्याणि महीयांसि प्रत्ययाश्च तथैव च ॥ ७ ॥

यया जायन्ति वीराणां विधानार्पितचेतसाम् ।

यया सर्वाणि कार्याणि एकया साधयेत् सदा ॥ ८ ॥

या न किलयितुं शक्या यदन्योग्रा न विद्यते ।

मन्त्रमुद्राथवा विद्या या त्वयाध्यासित सकृत् ॥ ९ ॥

कालरूपा महाविद्या जगत् कर्षयते यतः ।

कालसङ्कर्षणी तेन प्रोक्ता या प्राक् त्वया मम ॥ १० ॥

सा मुहुः कृपया नाथ सैन्धवस्य प्रकाश्यताम् ।

भैरव उवाच ।

यत्तदादौ महादेवि तत्वविक्त्वं प्रकाशितम् ॥ ११ ॥

अकलं तिमिरं शान्तं निर्द्वन्द्वं वस्तुरूपिणम् ।

तत् स्वभावात् तु संकृष्य कालरूपात्मनात्मनः ॥ १२ ॥

सूक्ष्मरूपमगाद् भावं सूक्ष्मशक्त्यात्मकं प्रिये ।

सा शक्तिर्देवदेवस्य कालसङ्कर्षणी मया ॥ १३ ॥

गोपिता सर्वशिष्याणां त्वामेकां वर्ज्य शैलजे ।

त्वदुक्त्या सांप्रतं ब्रूमि सैन्धवस्यापि निश्चितम् ॥ १४ ॥

जीवबन्धकरी घोरा महामायाचलेश्वरी ।

कालसङ्कर्षणी विद्या या मयाध्यासिता सकृत् ॥ १५ ॥

महागुह्यातिगुह्यैषा सर्वमस्यां प्रतिष्ठितम् ।

अनया जप्तया देवि सर्वमन्त्रगणो महान् ॥ १६ ॥

अथवा सप्तकोटयस्तु मन्त्राणामुग्ररूपिणाम् ।

जप्ता भवन्ति यष्टारो इष्टाश्च नात्र कार्या विचारणा ॥ १७ ॥

सकृत् संस्मरिता ह्येषा सिद्धिदा स्याद् विजन्मनि ।

विभक्ता जन्महीनैस्तु सिद्ध्यते ह्येकजन्मना ॥ १८ ॥

ब्रह्महत्यायुतं कृत्वा हत्वा स सचराचरम् ।

अमेध्याशी मातृगामी ह्यस्याचाराद् विशुध्यति ॥ १९ ॥

काव्येनैषा च यस्योक्तां दानवाधिपतिः पुरा ।

वाचस्पतेश्च गरुडो गरुडस्य सरस्वती ॥ २० ॥

निजगाद सरस्वत्यां भैरवः परमेश्वरः।

ज्ञानस्यास्यैकरूपस्य प्राक् स्कन्धः संप्रकाशितः॥ २१॥

द्वितीयोऽपि जगत्यन्धो मलस्त्वन्तो दशास्यतः।

प्ररूढः सैन्धवश्चैव शतशाखो भविष्यति॥ २२॥

कश्चिदन्यो न जानाति सत्यमेतन्नगात्मजे।

इति गुह्यातिगुह्यैषा तेन गोप्या वरानने॥ २३॥

प्रकाशिता निहन्त्येषा नात्र कार्यं विचारणा।

तेनैषा गूहिता देवि प्रज्ञायोगेन लभ्यते॥ २४॥

नान्यथा ज्ञायते ह्येषा विना गुरुनिषेवणा ।

कालसङ्कर्षणी ज्ञाता सदाशिवसमो गुरुः॥ २५॥

निबध्नाति सुरारातिकिन्नरोरगरक्षसाम्।

पिशाचयक्षगांधर्वसिद्धा योग्यं विकासि च॥ २६॥

भयाभयकरः श्रीमान् दर्शनात् स्पर्शवन्दनात्।

विश्लेषयति पापानि रुजासुभिषग्योगवत्॥ २७॥

प्राप्य ज्ञानमिदं तस्मात् तद्दूरं तत् फलद्वयम्।

तेनोद्धार्या महाविद्या प्रत्ययात् स्थाप्य भूतले॥ २८॥

गवां सकृदुपालिप्ते दर्पणोदरसन्निभे।

मृगनाभिपयःसिक्ते व मृगनाभिः शङ्खाङ्गमसृणीकृते ॥ २९॥

सिन्दूरकुङ्कुमक्षोदरजोरङ्गरञ्जितविस्तरे।

मेचकागरुकर्पूरवनौकः स सुकेशिभिः ॥ ३० ॥

धूपिते मधुनिष्यन्दिसुगन्धिकुसुमाकुले ।

चन्द्रचन्दनजम्बालरूषिताङ्गः प्रसन्नधीः ॥ ३१ ॥

महारजतसद्वासो दुगालम्बितविग्रहः ।

अथानुलेपनाभिख्यावासो देशावलम्बकः ॥ ३२ ॥

चित्रपुष्पविचित्रोऽर्द्धकोरटीशोभितोत्तमः ।

मालतीमल्लिकाकुन्दसिन्दूरतगरात्मवान् ॥ ३३ ॥

जयामिलातकादीनां सुमनःशेखराङ्कितः ।

हेमकुण्डलताटङ्कडिड्डिकारोपितश्रुतिः ॥ ३४ ॥

नानारत्नकरालातस्थापिग्रैवेयकन्धरः ।

मुक्ताफलगुणाटोपशोभितोरः स्थलाश्रयः ॥ ३५ ॥

विचित्राङ्गदकेयूरसमारोपितदोर्द्धयोः ।

सकलास्त्रसमुत्कीर्णकाटकलादिकः ॥ ३६ ॥

पुष्पायसमयं तच्च तारजं जातरूपकम्

पञ्चलोहमथाभ्यङ्गं कर्तव्यं रुचिरं दृढम् ॥ ३७ ॥

चित्ररत्नसन्नद्धमुद्रिता चित्रिताङ्गुलिः ।

शंयापिप्पलपत्राग्रप्रचुम्बितवरोरुकः ॥ ३८ ॥

कार्तस्वरसमालब्धतलिकाक्षुरिकाश्रयः ।

पट्टिकाग्रन्थिसंस्थानात् प्रशोभितकृकाटिकः ॥ ३९ ॥

मकराननमञ्जीरसमालङ्कृतपद्युगः ।

त्रिफलागर्भताम्बूलरञ्जिताधरपल्लवः ॥ ४० ॥

अञ्जिताक्षो मुदा लब्धो मन्त्रसन्नद्धविग्रहः ।

एतद्रूपधरो मन्त्री महाव्रतधरोऽपि वा ॥ ४१ ॥

प्रणवं योगपीठं तु हेरम्बं ज्ञानदं गुरुम् ।

पूजयित्वोपचारैस्तु तथोद्धार्य मनोभवा ॥ ४२ ॥

मूकारूहं समावर्त्तं प्रमोदारम्यलाञ्चितम् ।

प्रथमं बीजमेतद्धि सर्वाकृष्टिविधायकम् ॥ ४३ ॥

अन्धतामिस्रकस्तस्माद् भवप्रभवच्चन्दकः ।

सुतारालिङ्गितावर्तास्थितो यन्त्रप्रवाहकः ॥ ४४ ॥

अरम्याक्रान्तमूर्तिस्तु सुतारो लेख्य मंत्रवित् ।

अवेणिकामसलिला मन्वन्तं तत् प्रमोदितम् ॥ ४५ ॥

आधाराधिपतो लिख्य तस्मादोघं समुद्धरेत् ।

सुतारयन्त्रसंभिन्नां जडतां सौधमूर्ध्वगम् ॥ ४६ ॥

तारयन्तीं हतां देवि मूकतां च समुद्धर ।

आरम्भां केवलां लिख्य तथा चैव सुनेत्रिकाम् ॥ ४७ ॥

सुताराथ तथोद्धार्या यथा जीता वरानने ।

नोत्तमाम्भसिका तस्मादुत्तमांभसिकांतिका ॥ ४८ ॥

तारहीना समुद्धार्या किन्तु युक्तमिदं स्फुटम् ।

पञ्चधा लेखनीयन्तु विद्या सा नवधा प्रिये ॥ ४९ ॥

सिद्धि तुष्ट्याक्षरा वर्ष्मप्रतिष्ठेयं  महाबला ।

कालसङ्कर्षणी विद्या कथिता कालकर्षणी ॥ ५० ॥

अथ दीप्ता महाघोरा दीपनादिविवर्जिता  ।

भैरवाण्डगणाकीर्णप्रभा ह्यधिकपौरुषा  ॥ ५१ ॥

न तद्घोरा जगत्यस्मिन् पीठं तुर्ये न विद्यते ।

येनैवासन्नभूतेन लघुतामुपनीयते ॥ ५२ ॥

हर ईमर विश्लेषा द्वादशाराधिकारिणी ।

अनुलोमेन     देवता देवमण्डले ॥ ५३ ॥

असुतारान्तिकामूलाद् दूतीवृन्दविधायिनी ।

वाचका चानुदूतीनां जागर्युक्ता विलोमतः ॥ ५४ ॥

असुनेत्र्यानुचारा  स्युः किन्नराश्चाप्यनन्तया ।

जडतान्तकागणां नामामादितो मूकतादितः ॥ ५५ ॥

आघर्ण दशमा देवि दशलोकेश्वरात्मिका ।

असुतारांतिकं यत्तु युग्मपञ्चकमीरितम् ॥ ५६ ॥

लोकेशायतजातस्य द्विगुणं तत् प्रशस्यते ।

अनम्भःसलिलामब्धोलिपितुर्येन यत् स्थितिम् ॥ ५७ ॥

तदनुक्रम यत्तपदं कर्ममनुद्भवेत् ।

समस्ता मूर्त्तिरूद्दिष्टा तथा बाह्या च सैन्धव  ॥ ५८ ॥

अन्धतामिस्त्रकाद्यन्तु मातृकात् सावसानिकम्।

अनन्ताद्युपवेशस्य पदनिर्माणकृद् भवेत्॥ ५९॥

पुरोक्षरं गुहाज्ञेयं तस्मादस्ताक्षरं ।

असुतारा शिखा प्रोक्ता तनुत्राणमनम्भिका॥ ६०॥

असुनेत्रा दृग्गुद्दिष्ट शेषं चेद्येषु भेदकम्।

विद्या गात्रक्रमाल्लेख्या ं विद्या देहविधायिनी॥ ६१॥

मूत्त्वाक्रान्तिमूर्त्तिन्तु पायुरुग्भवबीजकम् ।

मूकत्वाद्दीपितं तच्च प्रमोदालिङ्गितं प्रिये॥ ६२॥

असदाप्रमुदितों नमः शिवशक्त्याक्षरं परम्।

विभिन्नं क्रमशो ह्येतच्चिवाङ्गानि तत्रशिवाङ्गानि भवन्ति हि॥ ६३॥

असदास्त्रं प्रमोदा ं दृग्मूकता पिङ्गलं मतम्।

मूलिकां चान्धतामिस्त्रं शिरःपायुसुतिर्मता ॥ ६४॥

मन्दिरं मूकता चैव कोशोऽयमण्डसम्भवः।

प्रकाशितो महीपाल संसारः सर्पजंतुरः ॥ ६५॥

कालसङ्कर्षणीदेहो विपुलोदन्वतोमलः

निष्क्रान्तो भाति भास्यूह मणीनामिव विस्तरः॥ ६६॥

कालसङ्कर्षणःह्येष जायते पीठतो नरः।

एतावच्च विशेषोऽत्र शक्तिशक्तिमतोर्मतः ॥ ६७॥

रुचिताराधनाद्देवौ फलद्वयविधायकौ।

किं स्वंतन्त्रगुणं ह्यस्मिन्नितरं शक्तिसेवनम् ॥ ६८ ॥

च्युतः परममीक्षयानि जवलैकमुल्लिलया ।

च्युतः सकलवन्धनं पतति मूलविच्चेदकः ॥ ६९ ॥

हिताहितविवेचको विततबोधसम्पत्प्रदः ।

स्फुटाखिलविनिर्णयः प्रकटिताह्वि विद्यात्मकः ॥ ७० ॥

अमृतसाधनमूलमिदं प्रिये  स्फुटतरं च वदन्ति च ये नराः ।

स्वपरयोरपि तेऽमृतकारिणो न हि भवन्ति नते ष्विव मण्डकाः ॥ ७१ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसंकर्षण्यामेकादशः  -दशमः पटलः ॥

११ ॥

द्वादशमः पटलः ॥

श्रीदेव्युवाच ।

विद्यानुभवरूपा या तया मुच्यन्ति जन्तवः ।

ज्ञातमेतद्यथार्थन्तु यद्यन्यत् साधनं प्रभो ॥ १ ॥

विद्या ते युक्तये तद्धि चित्रयोनिवपुर्वद ।

श्रीभैरव उवाच ।

योगक्रियाथ चर्या च साधनानि बहुनि च ॥ २ ॥

व्यङ्ग्ययोर्व्यञ्जकान्यत्र पुंसां सन्ति क्रियोदिताः ।

स्थिराक्षी  जगतश्चातो योगमार्गं शृणु प्रिये ॥ ३ ॥

पुंसां कैवल्यदातारमनायासमनात्मनाम् ।

अङ्गिनोऽङ्गानि योगस्य षट् प्रशंसन्ति सूरयः ॥ ४ ॥

प्राणायामो  धारणा च प्रत्याहारो वितर्कता ।

ध्यानं समाधिस्तामाह इत्यङ्गानि स्फुटानि तु ॥ ५ ॥

व्यञ्जकात्मान्त रङ्गस्थव्यङ्ग्ययोगस्य सुन्दरि ।

बहिरन्तर्विशुद्धात्मा भावः स्वच्चोदकादिभिः ॥ ६ ॥

सुप्रसन्नमनो योगी धाम्नि शुद्धे सुगन्धिनि ।

मूत्रोत्सर्गसुखत्यागी स्निग्धप्रलघुभोजनः ॥ ७ ॥

निरुगनम्व्राहारो ख निरूगेनाम्वाहारो वा मृदुपीठप्रतिष्ठितः ।

विशुद्धदन्तवक्रोच्चस्ताम्वूलादिसुगन्धवान् ॥ ८ ॥

स्वेच्चास्वरूपधारी च सुगन्धामोदकायवान् ।

मलशुद्धःसुवक्रो वा मन्त्ररत्नांशुलाञ्चितः ॥ ९ ॥

हृषीकाधिपतिः कोटे ध्रुवं कृत्योच्चशीर्षकृत् ।

ततोऽभ्यन्तरमानीय जिघ्रेत् स्वान्तं नियम्य तु ॥ १० ॥

सिद्धार्थान्तरं संस्थाप्या धरोष्ठौ संविधार्य तु ।

निराधाररसातालुवदनान्योन्यस्पृष्टगः ॥ ११ ॥

मरुद्वारिप्रवरेण्यभृङ्गमालास्वरूपिणम् ।

द्वादशान्तान्तगं कृत्वा नाडीशूलेन योगवित् ॥ १२ ॥

पूषा प्रणालिकायाता व्योमामृतजलेन तु ।

मुहुरापूरयेत् कायं मयूरांकितमस्तकः ॥ १३ ॥

स्रोतांसि ह्यथ चित्तेन घटवत् पूर्णमण्डलः ।

स्थित्वा ग्लानिं मुहूर्तन्तु मन्दं मन्दं ततोऽनिलम् ॥ १४ ॥

रेचयेत् त्रिपथा व्योम्नि ज्योतिर्गणगणाकुलैः ।

तस्मिल्लीने तु मरुतः स्वस्थः स्वान्तो निराकुलः ॥ १५ ॥

लीनो व्योम्नि परेशान्ते प्राणोत्कलिकया चिता ।

प्रशान्तायामलीनात्मा प्रशान्तपदगो भवेत् ॥ १६ ॥

ऊद्ध्र्वं संप्रेरणं वायो ः रेचकः कायकृष्टिकृत् ।

पूरकः पूरणं तद्धि पुष्टिकृच्च प्रशंसितम् ॥ १७ ॥

न तूद्यत्स्मरकारी च निरोधः कुम्भको मतः ।

प्राणायामत्रयत्यक्तः शून्यलीनमनाःप्रिये ॥ १८ ॥

निराधारः प्रशान्तात्मा प्रशान्तस्तूच्यते बुधैः ।

एषा यामलताघातशासने मनसि प्रिये ॥ १९ ॥

धारणा योगिनाभ्यस्या धारणामथ कर्मणाम् ।

विश्रामो वा चलाकारा स्थितिः पञ्चविपर्ययात् ॥ २० ॥

महामोहसमायुक्तामकाराकृतिगां निधिम् ।

स्वस्तिकाटोपघटितां सटामण्डमालिनीम् ॥ २१ ॥

धूम्रशब्दप्रनाडीञ्च मन्दानिलसमीरिताम् ।

चित्तस्थैर्यगतो योगिसञ्चिन्त्यामन्यथा मतः ॥ २२ ॥

तया निर्दग्धदेहस्तु भस्मकूटप्रतिष्ठितः ।

सामीरीं तु शतमेषां षडनस्वरमण्डिताम् ॥ २३ ॥

चिन्तयेत्तूभयानन्तविक्षिप्तं भस्म भावयेत् ।

ततो बहला वपुषो वारिधाराकदम्बकैः ॥ २४ ॥

एकोदन्वत्प्रभापूर्णे धाम्नि धाम सुवर्तुलम् ।

वृषधृङ् मौलिमाणिक्यशिखाटोपोपमं प्रिये ॥ २५ ॥

अमृतश्चाब्धिवद् वस्तं बालमाभानु भास्वरम् ।

तच्चावयवशाखाढ्यं सन्निधीकृत्य योगवित् ॥ २६ ॥

ततः स्वरसितोग्रोग्रकण्टकाटोपमण्डितम् ।

समन्तात् तुर्यवर्णान्तजातरूपप्रभालयात् ॥ २७ ॥

चिन्तयेत् कठिनं योगी कठिनत्वप्रसाधकम् ।

स्फाटिकोपलशिखिनां मालारूपविलम्बितम् ॥ २८ ॥

स्वच्चच्चायं स्थिरं व्योम मुक्ताफलप्रभामयम् ।

चिच्चित् समरसीकृत्य योगी तन्मयतां गतः ॥ २९ ॥

अन्धतामिस्रबीजस्थः साधयेद् व्योमधारणाम् ।

विकोशं भोजमालाढ्यं कोदण्डाटोपशालि च ॥ ३० ॥

मोहालोक्यं निधिजलमानन्त्यतमसापि च ।

पुष्टिकं तामसं विद्धि मोहमाप्यायने हितम् ॥ ३१ ॥

सा कदा  सादतेजसाश्च विवृद्धये ।

लाघवे श्लेष्मणो हानौ महामोहःप्रशस्यते ॥ ३२ ॥

संक्रामे व्यूहोत्प्लवने परं चिह्ने ह्यनास्पदे ।

स्थानान्तरा क्रान्त्यैर्लघुकृष्णे श्मणस्तनौ ॥ ३३ ॥

प्रशंसितं पटस्थत्वं तामिस्त्राभिविकल्पगम् ।

मूर्तीनां व्योमरूपाणां प्रवेशयति सर्वतः ॥ ३४ ॥

निर्गमायत तदाकाशमण्डलं मण्डमिष्यते ।

एवं योगात्मकें काये धारणायोगनिश्चये ॥ ३५ ॥

नाभ्यधो यत् स्थितं कन्दं तस्योर्ध्वे वालमुज्वलम् ।

कण्टकाटोपगहनं शिराजालसमाकुलम् ॥ ३६ ॥

तत्रुटासितश्रीवत्सतारं तारदलाकुलम् ।

सुरकोटीरकिञ्जल्कं बीजसप्तदशाङ्कितम् ॥ ३७ ॥

उदग्रकर्णिकाकारं भास्वन्तं स्वेन तेजसा ।

भास्वन्मयानि पत्राणि केसरा विविधा मताः ॥ ३८ ॥

चित्रभानुमयी चित्रा कर्णिकास्योदिता बुधैः ।

तस्या ह्यन्तर्गतं भाति मण्डलं धूमजन्मनः ॥ ३९ ॥

तदन्तर्भासिता शेषजगतो विश्वकर्मणः ।

तस्याप्यन्तर्गतं देवि तव वक्रस्वरूपिणः ॥ ४० ॥

मज्जटापञ्चकस्थानसुखिनः शशिन ःप्रिये ।

स्फुरद्रश्मिसहस्त्राढ्यममृतोतं सुमण्डलम् ॥ ४१ ॥

तन्मध्ये ह्यङ्कुरं पत्रं स्थितं मुक्ताशलाकवत् ।

ऊर्ध्वसंवित् स्फुरन्त्यन्तममृताम्बुगणाकुला ः ॥ ४२ ॥

तस्मिंश्चित्तं विनिक्षिप्य लोलीभूतस्तु योगवित् ।

यदा तन्मयतां याति सर्वचित्वं तदा लभेत् ॥ ४३ ॥

यस्माच्चित्तच्च्युतो योगी श्रुतदृष्टानुभूतजैः ।

विषयैः कर्षितो भूयस्ते उत्खाय्य चिताचितम् ॥ ४४ ॥

ध्येयस्थाना च्चलत्वाय यत्प्रत्याहरणं मुहुः ।

प्रत्याहारः स्मृतः सो हि ध्यानं ध्येयविवेचकम् ॥ ४५ ॥

आलोचने तथालोच्ये युक्तिर्या प्रविमर्षिता ः ।

तामुह्याखंज्ञा चितायोथे ध्येयः प्रवर्तते ॥ ४६ ॥

सोऽहमिति योगगात्रं यो योगिनां योगसाधकम्

आलोचनं यदालोच्यं यदालोचयितापि च ॥ ४७ ॥

समप्रज्ञाचलत्वेन निर्द्वन्द्वैकत्वमागतम् ।

अभातस्तिमिताक्षोभ्यः समाधिः स तपस्यतः ॥ ४८ ॥

अषचोक्ताङ्कुराग्रेण कालो भूतमनाः प्रिये ।

स्थानात् स्थानान्तरास्वादी शक्त्याकाशे लयं व्रजेत् ॥ ४९ ॥

योगी हृदम्बुजावस्थो द्वादशारकशालिनि ।

कला द्वादशकोपेते शुभ्रांभोजे विवस्वतः ॥ ५० ॥

परितिर्यग्दलाटोपं कर्णिकाकेसरान्तरम् ।

तस्यां सूर्यांशुसंमिश्रं सुप्रवृद्धं तदङ्कुरम् ॥ ५१ ॥

कदम्बसुमनोभासि यदा पश्यति योगवित् ।

दृग्दृशा क्षोभमापन्नस्तदा व्यक्तांतिकाश्रयः ॥ ५२ ॥

तस्य भोग्यत्वमायाति स्थित्यन्तं पद्मजन्मनः ।

तस्माद्र्थोऽर्थसं सर्पी अङ्कुरः कन्दराश्रयः ॥ ५३ ॥

षोडशाच्चदविस्तीर्णे कलाजालविशालिनि ।

पुष्करं नाभिमध्यस्थं हिममुग्रश्मिमालिनः ॥ ५४ ॥

स्वच्चामृतकलालब्धः शुद्धमुक्ताफलाकृतिः ।

योगिनां चित्तसंवृत्तं समत्वान्महतः प्रियम् ॥ ५५ ॥

विष्वक्सेनात्मको योगः कलास्ताः साधयेच्चिॄयः ।

लब्धकाशेषपत्रान्तश्चित्रभानुशिखाकुलः ॥ ५६ ॥

जज्वालालम्बकाग्रे ते प्रमाणप्रोदितां कुलः ।

समाधौ योगिनां धत्ते मायान्तां भोगसंततिं ॥ ५७ ॥

भवस्थानीयमेतद्धि योगं यस्तु समभ्यसेत् ।

भवभावगतो योगी भवभाग् जायते न सः ॥ ५८ ॥

भ्रुवोरन्तर्गतं पद्मं कर्णिकारं चतुर्दलम् ।

तदालिङ्गनसम्पर्कात् क्षान्तिमात्रातिरेकगः ॥ ५९ ॥

प्रकाशमात्रसंलक्ष्य उपमानविवर्जितः ।

सोऽङ्कुरं प्रागुपन्यस्तो व्याप्त्यव्याप्तिप्रकाशकः ॥ ६० ॥

स्यात् समाधिवशाद् देवि योगिनामन्तरं गतः ।

व्यतिक्रम्याब्जमालान्तु द्वादशान्ताम्वुजाग्रतः ॥ ६१ ॥

यदासावङ्कुरः शुभ्रः सुलीनो ह्यस्वरूपगः ।

निराधारमहाव्योमसङ्कल्पैकक्रियावहः ॥ ६२ ॥

एष सादाशिवो ख साषा योगः सदाशिवपदप्रदः ।

नैर्वृत्तः स्थाविरो योगः प्रातिष्ठो मौञ्जिकेशिकः ॥ ६३ ॥

वैद्यो वैऽमलमार्गस्थः प्रशान्तोऽसौ हि शान्तिगः ।

सादाशिवो महायोगः शान्त्यतीतपदानुगः ॥ ६४ ॥

सदार्चावर्तको देहे योगिनां बहुभोगदः ।

अनुलोमविलोमेन मालेयं ज्योतिषां प्रिये ॥ ६५ ॥

अभ्यासान्निश्चलीभूतःसर्वकामान् प्रसाधयेत् ।

देहावर्तेषु सर्वेषु वक्रमध्ये तदा दृशि ॥ ६६ ॥

मनःस्थैर्यात् स्फुटं तेजो दृश्यते ह्यन्धकारगैः

अथ व्यक्तात्मको योगो योगिनां बलदो नृप ॥ ६७ ॥

असावुद्धिश्यमानस्तु समाधिः क्रियतां स्फुटः ।

यामासीर्णविनी प्रोक्ता गम्भीरावर्तसुन्दरी ॥ ६८ ॥

अव्युच्चिन्नो ध्वनिस्तस्यामव्यक्तोऽर्धार्धे सर्पिगः ।

नरों विप्रहविष्कम्भे प्रसक्तो ह्यप्रपन्नगः ॥ ६९ ॥

वहतस्तस्य हृद्गर्भात् संयोगाच्चगतत्स्वरः ।

चिञ्चिणीति समाकर्ण्या योगिनां हितचेतसा ॥ ७० ॥

कृत्वा हृत्पद्मगं चित्तं स्थिरं सर्वार्थवर्जितम् ।

यदा तं विषदं स्वस्थं योगी संशृणुते ध्वनिम् ॥ ७१ ॥

विरिञ्चिव्याप्तिमध्याप्य तदा स्वस्थाभिनन्दते ।

कण्ठाब्जास्त्वलना देवं वीरवाक्याद्ध्यगात् स्वारात् ॥ ७२ ॥

मेधानियोगभोगाढ्यो निष्पन्नो योगविद् भवेत् ।

घण्टिकावर्त सङ्घट्टो घोषो घण्टाध्वनिस्फुटः ॥ ७३ ॥

तस्याप्यलब्धसंचित्तेर्भोगान् भुक्ते च सङ्गभाक् ।

नासिकान्तर्गतं स्पर्शं वहतस्तस्य योगवित् ॥ ७४ ॥

प्रत्यक्षं कुरुते यस्तु तस्याध्यक्षेश्वर स्थितिः ।

स्पर्शादतीतसंवित्तिमस्तित्वस्थितिलक्षितम् ॥ ७५ ॥

भास्वद्भावा वपुष्मन्तो माला निर्भ्रान्तरूपिणम् ।

ज्ञानात्मकं दृश्यत्यन्तं योगनित्कृत्यनिश्चिलम् ॥ ७६ ॥

श्रियं सादाशिवीं याति योगविद्गुणलाञ्छितम् ।

विज्ञानालयगं कृत्वा समाहृत्याचलं मनः ॥ ७७ ॥

शृणु याद्वर्णमाला वा तत्सूच्चारविदां वरम् ।

अक्षराक्षरसन्तानं स्फुटार्थं शृणुते यदा ॥ ७८ ॥

तदा वागीशतां याति योगी योगविनिर्मलः ।

स्वप्रवृत्तहृदग्रस्थो लोलीभूतः सुषुम्णया ॥ ७९ ॥

याति धूमध्वजज्वालामालालिङ्गनगोपितम् ।

आयाति च सुतेजःस्थो नातिवाह्यो नभोन्तरे ॥ ८० ॥

अधोऽर्ध गमनाद् देवमग्निश्चक्रे स्थिरोदयः ।

भवते तदाग्निसाध्यानां साधनत्वं प्रयाति हि ॥ ८१ ॥

बहित्वाधोर्ध्वगे व्योम्नि प्रलीनस्तिमितो यदा ।

तदा सुविसुवो योगो योगिनाममृतप्रदः ॥ ८२ ॥

एवमुत्तरचारोऽपि चन्द्रवक्रत्वमागतः

चन्द्रमाद्यानि कार्याणि प्रसाधयति लीलया ॥ ८३ ॥

यत् तद् भानुमतो दीप्तं चक्रं चैव स्वताश्रितम् ।

ज्योतिष्मतां श्रियं धत्ते तनिष्पन्नं स्वरूपतः ॥ ८४ ॥

मुक्ताफलशलाकेव हरिमूर्तिरिडा मता ।

मध्यन्दिननभोरत्नचाया ब्राह्मी च पिङ्गला ॥ ८५ ॥

रौद्री ततः सुषुम्णोक्ता व सुषुम्नोक्ता कालानलसमप्रभा ।

आसां सम्पर्कमापन्नो ध्वनिरासां स्वरूपधृक् ॥ ८६ ॥

वाहयेद् यन्त्र चक्राणि देहिनां कालयोगतः व योगः ।

कालोऽपि द्विविधः प्रोक्तो बाह्योऽध्यात्मस्तथा परः ॥ ८७ ॥

बाह्योऽसौ सौरमानेन स च तुभ्यं प्रकाशितः ।

स्वरानन्दादिरूपश्च वामे सावहितस्वरः ॥ ८८ ॥

ततः संक्रमतो मध्ये तत्राप्युक्ता स्थितिः स्थितः ।

विषुवं पात चारी च प्राणान् वहतेति च ॥ ८९ ॥

मुहुर्धा संपरिक्रम्य वाहयेद् यंत्रसंहितम् ।

समधातुगते काये नातिपाकातिवृद्धिके ॥ ९० ॥

गतिरेषा समाख्याता प्राणस्याशेष जन्तुषु ।

तिस्रो वामायने चोक्ता संक्रान्त्यो वासरान्तरे ॥ ९१ ॥

तावत्यो दक्षिणे येन विषुवेति प्रतिष्ठिता ।

एवं सागरिकेऽप्यङ्गे सम्यग् वेद्या विपश्चिता ॥ ९२ ॥

अष्टादशैताः सङ्क्रान्त्यो योऽहोरात्रे विजानते ।

स योगी योगनिद्रालुर्योगनिद्रालुवद् भवेत् ॥ ९३ ॥

लम्बिनीताम्बरं स्पृष्ट्वा पुनस्पृशति लम्विनीम् ।

प्राण एष समाख्यातो दिनोऽयमुपरिक्रियः ॥ ९४ ॥

अधः क्रियोधिनी प्रोक्ता ह्येवं त्रिदशरूपिभिः ।

अहोरात्रैः स्मृतो मासस्तैस्त्रिंशत्प्राणकैः प्रिये ॥ ९५ ॥

संवत्सरः स्मृतः प्राणो व्योमन्तु गुणलक्षणैः ।

संवत्सरान् व्रजन्षष्टिसौरमन्तर्दिनान्तरे ॥ ९६ ॥

शतानि नव पक्षे च मासे च द्विगुणानि तु ।

यान्ति युग्माम्वरधराः शुक्रादीक्षा समांतरे ॥ ९७ ॥

सौराहोरात्रसंस्थानं प्राणैरेतैर्भवत्यपि ।

घटिकाध्यात्मवर्षेण यामः सप्तार्धवर्षिकः ॥ ९८ ॥

चतुर्याममहः प्रोक्तस्तत्समा यामिनी भवेत्।

अत्र संख्यां तन्त्रगतां शृणुपन्निलनन्दन॥ ९९॥

प्राणानामत्र नियतं सहस्राण्येकविंशतिं ः।

शतानि षट् च जानीयात् प्राणोदयविशारदैः॥ १००॥

ये प्रसक्ताः प्राणहंसे सदा तद्गतमानसाः ।

तेषां तद्गतमाख्यातमुदयं मन्त्रसंज्ञितम्॥ १०१॥

तद्योगभावनावेशाद् योगिनो मन्त्र योगिनः।

तदा भुक्तिर्मुक्तिरेव तेषां दूरस्थिता न हि॥ १०२॥

आगमादत्र संसिद्धिर्विज्ञेया सर्वलक्षणा।

सादाख्यं यावदेवात्र साधकानां सदैव हि॥ १०३॥

उर्ध्ववाहप्रयोगेन मुक्तिरत्र भवेद् ध्रुवम्।

प्राणप्रवाहमेवाषमच्छिन्नं प्रवहेत् सदा॥ १०४॥

सर्वजन्तुषु सामान्यमज्ञत्वान्न विभाव्यते।

योगिनां तत्समा संख्या तादात्म्य प्रतिपत्तितः॥ १०५॥

भुक्तिर्मुक्तिर्न सन्देहमिति सम्यग् भवन्ति हि।

द्वादशाब्दोदयं चात्र प्रविभागविचारतः॥ १०६॥

लेशानुलेशसंयोगात् प्राणभागविभाजनात्।

तथा षष्टिसमा संख्या विश्लेष्या पूर्ववत् सदा॥ १०७॥

एतत्प्राणविभागेन गणितेन विचारणात्।

विश्लिष्य योगिराजेन्द्र तत् संसर्पितमानसः ॥ १०८ ॥

यदातिसूक्ष्मदर्शी सौ ऐकात्म्यप्रतिपत्तितः ।

फलं जपसमायोगाद् वाह्यकालोक्तवद् भवेत् ॥ १०९ ॥

एकोच्चारेण सर्वं तत् शास्ति द्वादशभेदतः ।

एतत् प्रतिसमादिष्टमनन्ताचारचारिणाम् ॥ ११० ॥

ग्रहोपरागभेदेन फलमत्र च यत् स्थितम् ।

योगिनां पुण्यकलया तदपीह विचार्यते ॥ १११ ॥

प्राणगत्या ह्यहोरात्रमूर्द्धाधःक्रमभेदनः ।

सूक्ष्मासूक्ष्मतरो वाथ तत्रेदं प्रविचार्यते ॥ ११२ ॥

समागमेन तत्रापि मासमानं भवेत् सदा ।

पूर्वनुद्या च यत्रस्थमपरस्थं तथैव च ॥ ११३ ॥

तन्मुक्ता पञ्चदशमे अहस्तेन विचारणात् ।

तत्रापि पूर्वापरतावहोरात्रौ व्यवस्थितौ ॥ ११४ ॥

कासश्वासनियोगेन ऋणता धनतात्र हि ।

अत्रचारेण चात्रस्थः कृष्णपक्षः सुभावितः ॥ ११५ ॥

अभिचारु निरुंचारु कर्म सिध्यति साधके ।

त्रुटिप्रान्ते शक्तिरेव प्राणाख्ये विशते यदा ॥ ११६ ॥

अमावास्येति सा ज्ञेया कृष्णपक्षांतिभाग् भवेत् ।

तन्मधोर्ध्वविभागेन तुटयर्द्धं यद् व्यवस्थितम् ॥ ११७ ॥

अमावास्याथ प्रतिपत् स्पर्शिनी सन्धिरेव सा।

तिथिश्चेदान्तरा तत्र सूर्यग्रहणमेव हि॥ ११८॥

तस्मिन् माने तथा चन्द्रः सूर्यबिम्बान्तरे भवेत्।

सुधा सूतेर्लुलम्यत्वाद्राहुरन्यत्र सर्वदा॥ ११९॥

स्वर्भानुभानुचन्द्राणां यदा चैकत्र संस्थितिः।

तदा ग्रहोपरागं तन्महदित्युपचर्यते॥ १२०॥

पुण्योदयमहोरात्रं  योगिनामुपवर्णितम्।

यत् सूक्ष्मदर्शिनः शूरास्तन्निष्ठा योगिनः सदा॥ १२१॥

ते विन्दन्ति हितं कालं जपयोगप्रसिद्धिदम्।

अत्राचिरेण कालेन सिद्धिमायाति सत्वरम्॥ १२२॥

पूर्वार्द्धार्द्धे त्रुटेरेवं त्यक्ता शक्तिर्यदा विशेत्।

स च शुक्लोदयः प्रोक्तः शक्त्यधोगामिनी यदा॥ १२३॥

अत्र सर्वाः सिद्धयः स्युः साधके योगतत्परे।

यदा पक्षद्वयत्यागी धर्माधर्मविवर्जितः॥ १२४॥

मृतशोकविनिर्मुक्ता तदा मोक्षस्य योगदा।

वाहावाहे क्षीणकालैर्काले ह्यकलतां गते॥ १२५॥

तदा मुक्तो मोचयेच्च योगी नास्त्यत्र संशयः।

ब्रह्मक्षत्रवधिवृत्ते योगखड्गधरो हि यः॥ १२६॥

वलाते योगिराट् चोक्तः सर्वसिद्ध्यारुहे नृपः।

जयद्रथ उवाच ।

जय योगीन्द्र नमित प्रधानवर पूरुष ॥ १२७

कामान्धक महाकाल दर्पविध्वंसनोद्यत ।

जय दैत्येन्द्रदर्पौघनिपातन महोग्रक ॥ १२८ ॥

त्रैलोक्य सा चण्डार्चिया पिम्बनद्धानल रव पेन्दनदवानल ।

जयाबद्ध जटाजूटसुधासूतिकलेवर ॥ १२९ ॥

फणीन्द्रहारकल्पान्तपावकारिमूर्त्तये ।

जयाखिलसुरारातिसुरघट्टनघोरदृक् ॥ १३० ॥

कालकूटस्तद्विलापिस्तद्भासाङ्कितकन्धरः ।

जय पूष्णोर्दन्तनाश जयेन्द्रभुजजृम्भन ॥ १३१ ॥

जय डविडदक्षघ्न बालरूप जयेश्वर ।

जय त्रैलोक्यनाथाय मौलिरञ्जितशेखर ॥ १३२ ॥

ब्रह्मक्षत्र वधे नाथ नोपायं विद्म साम्प्रतम् ।

येनोपायेन नासिद्ध्येत् प्रभवामि तथा वद ॥ १३३ ॥

भक्तस्यार्तस्य शुश्रूषोः श्रद्धालोः परमेश्वरः ।

इति निशम्य जयद्रथभाषितं सकरुणेन शिवेन विचारितम् ॥ १३४ ॥

शृणु नृपेश्वर वच्मि तदाखिलं प्रतिजगच्च सुरेश्वर एव हि ।

श्रीभैरव उवाच ।

उपायान् विविधानत्र वक्ष्यामि तव साम्प्रतम् ॥ १३५ ॥

योगावसर एवात्र संस्थितस्तं तथा शृणु ।

नाभेरधस्थात् तत्रस्थः कन्दः कन्दाभ एव च ॥ १३६ ॥

भासुरात् स च ईशोऽसौ गोपुरौ वाक्पुरस्सरः ।

तत्र नाडीसमूहोऽसौ निबद्धः संस्थितः सदा ॥ १३७ ॥

तिर्यगूर्ध्वमधस्ताभिर्जगद्व्याप्तं समन्ततः ।

तत्र स्थितं यथा पर्णे पालाशं सर्वतन्तुभिः ॥ १३८ ॥

तासामेका प्रधाना स्यात् सुषुम्णा नाम नामतः ।

तद्वद् द्वे पिङ्गले देव दश चानुभवन्ति हि ॥ १३९ ॥

चक्रवत्तासु संस्थानं कन्दे सर्वासु संस्थितम् ।

ताभ्यस्तत् पुनरेवान्या द्वासप्ततिसहस्रशः ॥ १४० ॥

पुनरेव विनिष्क्रान्तास्तिस्रः कोट्योऽर्धमिश्रिताः ।

आसु वायुः प्रवहति सप्राणमय एव हि ॥ १४१ ॥

भेदाद्भिन्नत्वमायाति बहुधा पन्निलात्मज ।

आसां प्रधानभूतानां नाडीनां वायुभिः सह ॥ १४२ ॥

शृणु संज्ञाप्रकरणं यथा च नृपसत्तम ।

सुषुम्णेडापिङ्गलाख्यास्तिस्रस्तासां निकेतनम् ॥ १४३ ॥

मध्ये वामे दक्षिणे च शुक्राधारेषु मर्मसु ।

पूर्वपश्चिमदिग्भागे चतुर्दन्ता पदे परे ॥ १४४ ॥

प्राणो जीवकलायुक्तः आसु नित्यं चरत्ययम् ।

गान्धारी गजजिह्वाख्या  यशा पूषा ह्यलम्बुसा ॥ १४५ ॥

कुहू च शङ्खिनी नाम पूर्वयुक्ता दश स्मृताः ।

आसां ये वायवस्तेऽपि शृणु पन्निलनन्दन  ॥ १४६ ॥

प्राणापानसमानाख्या उदानव्यानसंज्ञकाः  ।

नागःकूर्मोऽथ कृकरो देवदत्तो धनञ्जयः ॥ १४७ ॥

सामुदायिकमेतत्तद्रूपं नाडीषु वायुषु  ।

परत्वे त्रितयं पूर्वं संस्थितं सर्वतः सदा ॥ १४८ ॥

हृन्मध्यगं सदा ख्यातं बिन्दुनादात्मकं प्रिये ।

अत्र चारविभागज्ञा योगिनो योगवित्तमाः  ॥ १४९ ॥

ते प्राप्नुवन्ति नियतं वस्तत्क्षत्रवधान्तरम्  ।

महाविनोदसंस्थानचक्रपीडनयोगतः ॥ १५० ॥

क्रमव्युत्क्रमसंयोगात् कन्दचक्रप्रवेशनम् ।

तत्प्रवेशावतिष्ठेत व्याप्तिरेकान्ततो द्विधा ॥ १५१ ॥

त्रिधा चतुर्धा दशधा नाडीवायुप्रभेदतः  ।

द्वासप्ततिसहस्रान्तां यावलोमावशानुगम्  ॥ १५२ ॥

महाव्याप्तिप्रकारोऽयं प्रभुशक्तिविवेकतः ।

तत्प्रवेशात् समेभ्येति परमानन्द लक्षणम् ॥ १५३ ॥

ब्रह्मक्षत्रवधो येन भवत्येवास्य योगिनः ।

मत्तगन्धं  मन्दचक्रं शूलनादो निपीडयेत् ॥ १५४ ॥

भ्रमद्विभ्रमयोगेन घूर्म्मिरस्य तदा भवेत्।

ज्वलन्ती चापतत् परमा जम्भानादगतोऽत्र च॥ १५५॥

पश्चाद्विकासमायाति ब्रह्मक्षत्रवधात्मकम्।

ब्रह्मक्षत्रवधे वृत्ते परमा जायते दशा॥ १५६॥

यामाप्येव न शोचन्ति साधकाः सिद्धिकांक्षिणः।

पुरप्रवेशमात्रस्थःकुरुते साधकेश्वरः॥ १५७॥

आवेशस्थो सरोमाञ्चो तत्रस्थः कुरुते सदा।

लीलया साधकेन्द्रोऽसौ वेधं षोढा करोति हि॥ १५८॥

घट्टनं सर्वजगतां प्रकरोति यथेच्चया।

अतिदूराद् वेधमुग्रं मुद्रास्फोटं करोत्यसौ॥ १५९॥

अनग्निज्वलनं वृक्षे स्याल्लम्भनमिवाद्भुतम्।

खलनिर्दशहस्तां तात्र्या यामात् सप्तमाभिधान्॥ १६०॥

पिण्डसिद्धिर्भवत्यस्य साधकस्य न संशयः।

चक्रदर्दुरकाण्डानां पारावतखगामिनाम् ॥ १६१॥

प्लुतीर्विचित्राः कुरुते महाहास्यं शिवारुतम्।

कालत्रयज्ञता सम्यक् त्रैलोक्यवशकारिता॥ १६२॥

अणिमाद्यष्टकं सर्वं मन्त्रप्राप्तिर्भविष्यति ।

मन्त्रवीर्यविकासोऽत्र ध्वन्याकर्णनमद्भुतम् ॥ १६३॥

मन्त्रपाशान्तरङ्गोत्था भासश्चित्राः सदैव हि।

आलोकयति वीरेन्द्रः समन्तात् तद्गताशयः ॥ १६४ ॥

अनुक्तमपि यच्चान्यत् तदत्र प्रविचारितम् ।

गतानुगतयोगाद् वा सर्वनाडीगमस्फुटम् ॥ १६५ ॥

तद्गमादेव सर्वत्र महदानन्दवृत्तिमत् ।

समस्थायी समन्तेजः समन्तान्मतिभाग्भवेत् ॥ १६६ ॥

व्युत्थाने वीरराड्डी यत् समाधिस्थो न संशयः ।

अस्यैवान्यत्समावायो नियोगक्ष पणात्मकः ॥ १६७ ॥

वातावर्त्तप्रयोगेन ब्रह्मघात्यविकल्पतः ।

तमाक्षिप्यात्र कर्मान्तः क्षत्रियस्य वधो भवेत् ॥ १६८ ॥

तद्वधादमलं सर्वमसकृत् प्रतिपद्यते ।

तस्मादमलसंयोगाद् व्यक्तिवैभवरूपिणा ॥ १६९ ॥

समुदेति रुगित्येव सर्वा वा युक्तिलक्षणा ।

सन्दर्शप्रविभागोक्त्या ह्यनुषङ्गफलोद्गमः ॥ १७० ॥

तदुद्गमात् सिद्धयोऽन्याः प्रभवन्ति बहिर्नृप ।

यस्यान्तरगतत्वेन कलामाली ह्यविग्रहः ॥ १७१ ॥

भवत्यवश्यं सर्वत्र नाभिचारविभेदगः ।

तत्प्रचारविरोधेन कलनात्मककल्पना ॥ १७२ ॥

विनिरुद्धा भवेत् सर्वं तदा कालोऽप्यकालता ।

जायते तदभावाद् वा सर्वसत्त्वं सकृत्रिकम् ॥ १७३ ॥

तद्वाप्य महाभाग भवेत् कालान्तकः स्वयम् ।

मत्तगन्धप्रयोगेण चक्रावा प्रविदारिणा ॥ १७४ ॥

विदार्य ग्रन्थयः सर्वा ब्रह्मक्षत्रवधे रतः ।

निपात्य पातगं क्षत्रमन्तरस्थं द्विजं नृप ॥ १७५ ॥

तत्क्रम ं प्रान्तविश्रामात् तद् वधः प्रभवेत् तदा ।

तद्भवप्रान्तविश्रामा द्वितीयात् पन्निलात्मज ॥१७६ ॥

सदारोहावरोहाद् वागतिचारनिरोधतः ।

चारचारगती ध्वन्ये ऋक्षराशिविभागतः ॥ १७७ ॥

त्रुटित्रुटयन्तरारूढो मासवासरभेदतः ।

सन्धिसन्ध्यंतरालज्ञो कालचारगतीश्वरः ॥ १७८ ॥

तत्तद्विश्रान्तियोगाद् वा ब्रह्मक्षत्रवधः स्मृतः ।

रूढक्रमेण विहतो येन तस्याज्ञता भवेत् ॥ १७९ ॥

ब्रह्मक्षत्रा महाभाग तस्य सिद्धिः करे स्थिता ।

गतिचारनिरोधेन निहतो येन तस्य हि ॥ १८० ॥

पुरप्रवेशमावेशं सम्यक् सिद्धिमुपैति हि ।

चारगत्या येन नृपो निहतो यो न साम्प्रतम् ॥ १८१ ॥

परोक्षवेधसः सिद्धिस्तस्य सिद्ध्यत्यसंशया ।

चारगत्या ब्रह्मक्षत्रौ निहतौ येन तस्य हि ॥ १८२ ॥

कालस्य प्रभुता सम्यक् तस्य सम्पद्यते नृप ।

रक्षाभेदक्रमेणैव येनैतौ विनिपातितौ ॥ १८३ ॥

उडुचक्रेश्वरत्वं स्यात् पुरक्षोभो महान् भवेत् ।

लग्नक्रमविभागेन करणेन्दुबलेन च ॥ १८४ ॥

पातितौ येन तस्यापि भवेद् दूरावलोकनम् ।

मरणं कालचक्रस्य प्रभूतं नास्ति संशयः ॥ १८५ ॥

त्रुटिस्त्रुटयन्तरेणैव येन सम्यङ्निपातितौ ।

तस्य मन्त्र प्रसिद्धिः स्याद् वाक्पतित्वं प्रवर्तते ॥ १८६ ॥

सर्वशास्त्रार्थवेत्तृत्वं विच्छिन्नज्ञानमेव च ।

प्रस्फुरद् विमलं ज्ञानं विभूत्यास्य स्फुटं भवेत् ॥ १८७ ॥

मासायामनियोगेन करणक्रमयोगतः ।

ब्रह्मक्षत्रौ हतौ येन तस्य सिद्धिः करे स्थिता ॥ १८८ ॥

वृक्षस्यालम्भनं वह्नेर्ज्वलनं तद्धि योगजम् ।

असङ्गफलं प्राप्य षट्मासात् सिद्धिरेव हि ॥१८९ ॥

परेणैव हतो येन ब्रह्मक्षत्रौ नृपात्मज ।

षष्ट्या द्वादशभेदेन तस्य तद्वत् स्वरोदयम् ॥ १९० ॥

विचारितं बाह्यकाले तत् तस्य स्यात् फलप्रदम् ।

परदेहप्रवेशादि वृक्षालंभनपूर्वकम् ॥ १९१ ॥

अनग्निज्वलनं वेधं दुरालोकोऽज्ञतादयः ।

तदा सिद्ध्यन्त्यनायासाद् ब्रह्मक्षत्रवधैषिणः ॥ १९२ ॥

सत्त्वयोगविधानेन करणानुक्रमेण हि ।

द्विजहा नृपहा यस्मात् तस्य सिद्धिः प्रवर्तते ॥ १९३ ॥

फलानुकूल्याच्चक्रस्य पूर्वोक्तस्योदयेन हि ।

चञ्चलत्वादस्थिरत्वात् तन्निरोधः स्फुटं यदा ॥ १९४ ॥

तदा पूर्वोक्तयोगेन सिद्धयः संव्यवस्थिताः ।

प्राणकालप्रयोगोत्थप्राणोच्चारगतिः सदा ॥ १९५ ॥

संप्रवृत्त एवास्य साधकस्य महात्मनः ।

सन्ध्यन्तरालसंयोगाद्  ब्रह्मक्षत्रौ हतौ यदि ॥ १९६ ॥

वाडवेन्द्रप्रयोगेण पूर्वोक्तक्रमयोगतः ।

तदा परोक्ष एवास्य सिद्धयन्त्येवं न संशयः ॥ १९७ ॥

एकस्माद् योजनात् तावद् दशयोजनमन्तरम् ।

तत्रस्थो योजनः सो वै वेधयेन्नात्र संशयः ॥ १९८ ॥

वृक्षस्यालंभनं सम्यग् दर्शनादेव सिद्ध्यति ।

अनग्निर्ज्वलनं सर्वं प्रकरोति यदृच्छया  ॥ १९९ ॥

दूराकर्षणमेवास्य योजनानां शतैरपि ।

सिद्ध्यत्येव न संदेहो नरेन्द्रादिविधेयता  ॥ २०० ॥

भवत्ययत्नतोभ्यासान्नित्यमेव जयद्रथ ।

अणिमाद्यष्टकं प्राप्य मोदते साधकेश्वरः ॥ २०१ ॥

कालचक्रक्रमेणैव करणाभ्यासयोगतः ।

तत्र देशादिबन्धेन रात्रिसञ्चारयोगतः ॥ २०२ ॥

ब्रह्मक्षत्रौ यदा मन्त्री हन्ति वीरेन्द्रयोगतः ।तत्र देशादिबन्धेन

रात्रिसञ्चारयोगतः ॥ २०३ ॥

इडादिरूपसंयोगाच्चक्रभेदोपभेदतः या रूढिरभितो जायेत् साधकस्य

प्रसर्पतः ॥ २०४ ॥

तया पूर्वोक्तमखिलं योगिनोऽस्य भविष्यति ।पुनरप्यत्र या वृत्त्या

निबोधगदतो मम ॥ २०५ ॥

येन सम्यक् प्रजायेत ब्रह्मक्षत्रवधोत्तमम् ।

शब्दवृत्त्यनुसन्धानाद् दशधा सा निगद्यते ॥ २०६ ॥

चिञ्चिनी वीरवान् घोषरावस्वरविशेषणैः ।स्फोटझाङ्कारनामान्यः संयोगः

साकृतिः स्वनः ॥ २०७ ॥

एतास्ता व्यक्तयो ज्ञेया शब्दस्यैकत्रसंस्थिताः ।

अत्र चैकैकशो व्यक्तो यदा रूढिः प्रजायते ॥ २०८ ॥

साधकेन्द्रस्य नियतं मनोमन्तव्यरूहितः ।

तल्लयादनुपाल्येव तल्लयस्तस्य धीमतः ॥ २०९ ॥

ब्रह्मणः क्षत्रियाणां स्याद् वध एव न संशयः ।

स्पर्शरूढ्या व्ययस्यैवमास्तां शृणु नृपात्मज ॥ २१० ॥

बाह्याभ्यन्तरभेदेन बाह्याश्च सुखदुःखजाः ।

आन्तरो द्विप्रकारः स्यादालेख्यः करणोद्गतः ॥ २११ ॥

कन्दचक्रक्रमोद्भूतः परः स्याच्च द्वितीयकः।

तत्र सम्यग् यया रूढस्तदा साधकसत्तमः॥ २१२॥

ब्रह्मक्षत्रौ विनश्येते साधकस्य न संशयः।

रूपभेदेन यो बिन्दुश्चतुर्धा वर्णभेदतः॥ २१३॥

दशधा वा सवर्णात्मा तदाभ्यासेन सर्वदा।

ब्रह्मक्षत्रवधो ं जायेत् तद्वच्चात्र स योगतः॥ २१४॥

गन्धोद्विरूप एवासौ तदभ्यासात्तु तत्क्षयः।

ब्रह्मक्षत्रवधं जायेत्तद्वच्चात्र स योगतः॥ २१५॥

गन्धो द्विरूप एवासौ तदभ्यासात्तु तत्क्षयः।

ब्रह्मक्षत्रवधस्त्वेवं दिनरात्रिविभागजः॥ २१६॥

समं दिनं योगिनोऽस्य तत्समा यामिनी भवेत्।

एवं प्राणोदयात् कालोऽप्युक्तोऽसौ योगिनां प्रिये॥ २१७॥

तथा वै वञ्चते तद्वत् सम्प्रदायं ब्रवीमिते।

नासाग्रे मूर्ध्नि लक्ष्मे वा संहृत्यैकाग्रगं मनः॥ २१८॥

ऊर्ध्वाधः प्रवहत्त्यक्तो यावतस्त्यजतेऽनिलम्।

तावत् कालविभागन्तु योगी वञ्चयते स्फुटम्॥ २१९॥

तुट्याद्यं प्राक् समुद्दिष्टं समन्तं मुनिनन्दनः।

समावासरसङ्ख्याता लक्षमालां विकर्षयेत्॥ २२०॥

उक्तोपदेशभेदोर्ध्वे त्यक्तप्राणस्तु योगवित्।

प्राणोत्कलिकया हीना समासाद्यन्तपालिका ॥ २२१ ॥

घटिकायुर्वृद्धिकरी योगिनां कर्षिता प्रिये ।एवमाधिक्यनैभृत्याद् बलस्य बलवर्धनम् ॥ २२२ ॥

प्राणिनामायुराद्यस्य योगाभ्यासवशाद् भवेत् ।

अथाचलाक्षमालायां चित्तस्थैर्यगतो मुनिः ॥ २२३ ॥

निराधारान्तरंगस्तु शक्तियोगं समभ्यसेत् ।

तेनास्याकाशगामित्वमचिरात् सम्प्रजायते ॥ २२४ ॥

अथ द्वयोस्तु यद् रूपं चित्तशक्त्या विभावयेत् ।

तत्तत् तन्मयतत्वस्य चित्तं यत् समुपैति हि ॥ २२५ ॥

पश्याधः कर्मजातस्य साध्यस्यानंतरूपिणः ।

मनः साधनमुद्दिष्टं साधर्मयाद् धर्मभावगम् ॥ २२६ ॥

दीपनं वायुवह्नीनां संयोगः कार्यतः स्मृतः ।

निवृत्तौ चाप्युपायोगः शंसितो योगवित्तमैः ॥ २२७ ॥

स्वकार्यं नान्यचित्तेन वान्ये नैवोदकात्मना ।

समत्वागतचित्तेन चलाचलगुणं न हि ॥ २२८ ॥

चलं चाचलभावेन साधनीयं विपश्चिता ।

मित्रारिसामभेदन्तु ज्ञात्वावरण संस्थितम् ॥ २२९ ॥

कर्मसाधनयुक्तानां नान्यथा याति पार्वति ।

अथ गुप्ततरं योगं शृणु भैरवभाषितम् ॥ २३० ॥

देहेऽनुभवगम्यन्तु वीरवीर्यसमुद्भवम् ।

सरोजासनमारूढो योगी स्वस्तिकमेव वा ॥ २३१ ॥

आतानितशिरोरस्था मूर्द्धिर्न निक्षिप्तसंभ्रमः ।

तुङ्गीकृतगलोदीर्णविवृताधरपल्लवः ॥ २३२ ॥

ओंकारमुच्चरेदूर्ध्वं न च तत्शव्दरूपिणं ।

तस्य वृत्तिं समालम्ब्य नभस्वन्तं महौघगम् ॥ २३३ ॥

खद्योतकनिभाकारैः खचितं परमाणुभिः ।

समाहितमना योगी निर्गच्चन्तं निरालयम् ॥ २३४ ॥

व्योम्ना त्रिकूटसंस्थानं स्थायिनो ब्रह्मरूपिणः ।

तत्स्पर्शं पिपीलिकावदारम्भे भाव्य योगवित् ॥ २३५ ॥

ततः कण्टकवद् भेदो वेदना च तदात्मिका ।

त्रुटयद् रश्मिवदस्तुल्यं ततो वृत्कालसम्पदम् ॥ २३६ ॥

ततोऽम्वुरुहरागोच्चशिखापुञ्जसमच्चविम् ।

पूरिताकाशमार्गन्तु प्रवृद्धं दृश्यतेऽमलम् ॥ २३७ ॥

तस्मिम्ल्लीनस्तु तद्योगी शृणु ते पश्यतेऽथवा ।

कथितं योगिनां तद्धि निर्व्याजं तादृशं भवेत् ॥ २३८ ॥

समतागतचित्तत्वात् तत्स्वरूपमुपागतः ।

प्रयात्ययं गुणं धाम धाम्नां निधिरनामयम् ॥ २३९ ॥

अथ तद् द्रुतमध्यस्थविशुद्धे त्रैकटे तु वै ।

निर्गत्य लीयते व्योम्नि तीव्रोद्घातबहिष्क्रिया ॥ २४० ॥

न च प्रच्यवते तस्मादाकर्षाकारितेऽनघ ।

योगोऽयममृतात्मा तु योगिनाममृतप्रदः ॥ २४१ ॥

अथ द्वन्द्वेन कं मूर्ध्नि कृत्वा निश्चलमादरात् ।

आयामापानसङ्कोचः कार्यो देहविकम्पगः ॥ २४२ ॥

क्रियमाणे भृशं तस्मिन् यच्चन्दमुपजायते ।

तत् तावदुपलभ्यन्तु यावत् स्यादुषानागमः ॥ २४३ ॥

प्राग्लवे बिन्दुसंयोगः स्वरयोगो द्वितीयके

तृतीये बालसंस्पृष्टो बलवद् विषयात्मवान् ॥ २४४ ॥

प्रत्यङ्गं वीक्षते योगी साध्यानि भवगानि तु ।

योगानां जायन्ते परिकीर्तितः ॥ २४५ ॥

भोगमुख्यमिमं प्राप्य राजनिर्वाणभाग्भवेत् ।

देहेऽनुभवरूपन्तु सम्प्रदायैकसाधनम् ॥ २४६ ॥

भ्रमन्तं चिन्तयेच्चित्तं पादाङ्गुष्ठाग्रयोर्द्वयोः ।

तत्र कान्तमणिप्रख्यं गोलकं दृष्टनष्टकम् ॥ २४७ ॥

कृत्वाग्रं चित्तसंरोधात् तस्मिन् तन्मयतां गतः ।

निवृत्तेरधिकारन्तु योगी भुङ्क्ते स्वलीलया ॥ २४८ ॥

ध्वजाग्रस्थायिनी ह्येवं प्रतिष्ठावृद्धिमर्चति ।

मन्दिरावर्त्तगोविन्दसिद्धो वेद्यं पदं ददेत् ॥ २४९ ॥

ध्रुवमन्तर्गतोऽगाधः साधयेच्चान्तिगोचरम् ।

यत् तद्धि परमं धाम कन्दलत्रयवन्धकम् ॥ २५० ॥

श्वेतपत्रसुपत्राङ्गं चायाबिन्दुकदम्बकम् ।

प्रस्फुरन्तं समन्तात् तु तस्मिन् वीक्ष्य स्थिरात्मवान् ॥ २५१ ॥

चित्तशक्त्यैकभावत्वात् पिण्डिभूतं तु कुम्भवत् ।

तन्निष्पन्नं यदा सम्यक् तदा तद् रूपतां गतः ॥ २५२ ॥

शान्त्यतीतात्मकाभोगकालसङ्कर्षणीसमः ।

योगी सर्वगुणं भुक्त्वा योग्यानामयमिच्चया ॥ २५३ ॥

षोढा शिवात्मकाद्योगात् को न याति परं पदम् ।

भुक्त्वा परापरां लक्ष्मीमसमानं त्यजेच्चिरं ॥ २५४ ॥

विशुद्धां सुस्थवीर्यां च सदानन्दां सदोदयाम् ।

प्राणायामादिकैरङ्गैस्थिरः स्वान्तात्मवान् गुणी ः ॥ २५५ ॥

वाचकोच्चारसंसारचितमेवास्य रूपकः ।

सर्वावयवसंपूर्णमनुलोमविलोमतः ॥ २५६ ॥

भावयेच्चित्तशक्त्या तु शिववीर्यैकतन्मयः ।

तत्तन्मयत्वमापन्नस्तत्स्वरूपमवाप्नुयात् ॥ २५७ ॥

द्विरेफोत्तुङ्गमुच्चाभजटामण्डलमुत्तमम् ।

तापिच्च पुष्पविस्तारि चायापल्लवविस्तरम् ॥ २५८ ॥

रत्नालङ्कृतभोगाढ्य भोगसंयमिताश्रयम् ।

भावयेच्चांशुसंघट्टं हृतवेतालसञ्चरम् ॥ २५९

समन्ताच्चादितापाङ्गशाङ्गचन्द्रकलामलम् ।

मुकुटं भावयित्वा तु ललाटं भावयेत् सुधी ः ॥ २६० ॥

तरूरपाच्चिखातोपैर्निर्गतं गगनाश्रयम् ।

चक्षुरत्र विभाव्योच्चैरुपेतं भूतले सिते ॥ २६१ ॥

ज्यासज्जुकार्मुकाभिख्ये ततश्चाम्बुजवर्चसम् ।

चक्षुषी पक्षशोभाढ्ये चिन्तयेन्मनसा हितम् ॥ २६२ ॥

प्रलम्बश्रवणाधन्मात्रालङ्करणान्वितम् ।

भास्वद्विकाससद्रूपां नासिकां चिन्तयेत् ततः ॥ २६३ ॥

प्रस्फुरद्दर्पणाभासिकपोलोष्ठौ समौ शुभौ ।न्यग्रोधोदर्कसंकाशमुन्नताधरप

ल्लवम् ॥ २६४ ॥

इन्द्रनीलरुगुद्बाहि द्विजपंक्तिविराजितम् ।अट्ट

हासोत्थचायाभपरिवेशावगूहितम् ॥ २६५ ॥

मोहनं शोभनायाङ्गं नतो वक्रं विचिन्तयेत् ।शशिकान्तरुगूर्ध्वन्तु

माघोनं किंशुकश्रियम् ॥ २६६ ॥

शृङ्गालीवलयाभासशिरोरुहदिगाश्रितम् ।

विशुद्धालककलावण्यच्चायालोकरुगागमम् ॥ २६७

अपांपतौ स्फुटाटोपसफाटिकोल्लासितच्चविम् ।

ततोऽम्भोजोज्ज्वलग्रीवासमानं कन्धराश्रयम् ॥ २६८ ॥

सार्धमम्बुवर्णिव्रातसरोमण्डलमण्डितम् ।

सुश्लक्ष्णमणिहारोरुसूत्रान्तरम्बिलम्बितम् ॥ २६९ ॥

भावयेच्चित्तशक्त्या तु बहिरर्धविमुक्तया ।

मृदुवृत्तोन्नतौ तस्या दशदोर्दण्डलालसौ ॥ २७० ॥

दोष्णश्चापि सदा ध्येया ः बहुमार्गेण सङ्गता ।

विस्तीर्णशाखाकलिताश्चन्दनानां द्रुमा इव ॥ २७१ ॥

नरास्थिकटकाटोपसुभ्रूटकमण्डिता ः ।

कलाचितास्तु सर्वासु दोर्लतासुविचिन्तयेत् ॥ २७२ ॥

नागपाशकृतां नागैः प्रस्फुरद्दन्तभोगिभिः ।

बाहुमध्येषु दीप्यन्तां स्वप्रभास्वप्रकाशिकाम् ॥ २७३ ॥

उद्यद्विमिश्रतां चिंचभासि नक्तगणानिव ।

चिन्तयित्वा कराग्रस्थं चिन्तयेद् वेदिमण्डलम् ॥ २७४ ॥

त्रिकण्टकमण्डलं कुब्जं तमालमणिकुट्टिके ।

त्रिशृङ्गं मार्गणं शब्दं वरदं मध्यगोचरे ॥ २७५ ॥

कार्मुकं भयमम्भोजं शिरः पाशं च घण्टिका ।

खट्वाङ्गं मुद्गरं चर्म दर्पणं चापि मध्यतः ॥ २७६ ॥

शिखिनावुन्नतौ ध्येयौ न्यस्तावेशप्रियान्वितौ ।

त्रिवलीराजि जठरं सुकुक्षिं च विभावयेत् ॥ २७७ ॥

उरोचिसरसंस्थाने प्रेङ्खत् पञ्चवटः शुभैः ।

शिरोजन्मजटः सोहि समालोच्यस्तु योगिना ॥ २७८ ॥

स्रवद्रक्तकणाटोपवैयाघ्रमजिनं नवम् ।

निबद्धं तन्महानागैर्भोगरत्नप्रभोज्ज्वलैः ॥ २७९ ॥

विस्तीर्णजघनस्थानस्थगिताशेषगुह्यकम् ।

चरणाक्रान्तकालञ्च चिन्तनीयं विपश्चिता ॥ २८० ॥

सतम्भोरुमग्रसंस्थानादूयुग्मं सुजङ्घकम् ।

चिन्तयित्वा तु गुल्फस्थं भौजङ्घं नूपुरद्वयम् ॥ २८१ ॥

शिरोमणिशिखाजातदीपोद्योतनपद्युगम् ।

विकोशाम्बुरुहप्रख्यं पादयुग्मं विचिन्तयेत् ॥ २८२ ॥

गोनासान्तरिताभिस्तु रञ्जिताभिर्द्विजिह्वकैः ।

मुद्रिकाभिः कृताभोगकरपादधृताङ्गुलि ॥ २८३ ॥

रुचिरैर्मणिबद्धांश्च भावयेद् भावितात्मधीः ।

सर्वाङ्गपिङ्गलं भाव्यं मणिं सकलसम्भवम् ॥ २८४ ॥

खोलोरगमयी रम्या भावनीया शिरस्थिता ।

सर्वावयवसंपूर्णां कालसङ्कर्षणीमुमाम् ॥ २८५ ॥

स्वचितरचिताकारां चिन्तयेद् वा स योगवित् ।

ज्येष्ठाग्राद् यावन् मूर्द्धान्तमूर्ध्वपादावसानिकम् ॥ २८६ ॥

प्रस्फुरावयवद्धाव्यं रूपकं रूपिणां प्रिये ।

तत् तत् तन्मयतां प्राप्य यस्या योगविशारदे ॥ २८७ ॥

तत्प्रागेवोपदिष्टन्तु शृणु वाचकध्यानजम् ।

फलं सर्वात्मकं देवि किन्तु भूभृद्धितैषिणः ॥ २८८ ॥

पर्यङ्कासनमालम्ब्य चेतोऽग्राग्रे नियामयेत् ।

आदावारभ्य चैकैकं वर्णं दिव्याङ्गसंस्थितम् ॥ २८९ ॥

हविः स्फुलिङ्गसंकाशमधरोष्ठान्तशालिनि ।

मुखाग्रे प्रविशन्तं तु मन्दसञ्चारसञ्चरम् ॥ २९० ॥

स्वमात्रा मण्डलापूर्णं लीयन्तं नाभिगह्वरे ।

अनन्तार्णविरामन्तु दृष्ट्वा च क्रमशः प्रिये ॥ २९१ ॥

मुहुस्तेनैव मार्गेण ह्यूर्ध्वप्राणावलम्बिनि ।

खद्योतकगणं दीप्तं निर्गच्चन्तं चलादिव ॥ २९२ ॥

लीयन्तं शक्तिपद्मे तु वीक्ष्य तद्योगचक्षुषा ।

यदा साक्षरपङ्क्तिस्तु स्थिरा प्रत्यक्षतां गता ॥ २९३ ॥

तदा पदक्षरैः किञ्चित् साध्यते सिद्धिलक्षणम् ।

तदायत्तं भवेत्तद्धि विश्वेऽस्मिन् भूरिविक्रमम् ॥ २९४ ॥

वाचो वाचस्पतेर्यद्वदप्रमेयार्थविस्तराः ।

नावधारयितुं शक्त्या मादृशैरपि गौतमि ॥ २९५ ॥

काल्याः सत्यो द्विरूपाश्च प्राणिनां हितकारिकाः ।

शास्त्रद्वारेण जायन्ते गिरोऽस्या गिरिसम्भवे ॥ २९६ ॥

यद्यद्वर्णाश्रितो योगी कार्यजातमुपक्रमेत् ।

तत्तद् विचित्रभेदेन तस्य तन्मयतां व्रजेत्॥ २९७॥

सम्मोहे भैरवे भीतेऽसौवर्णाद् वाप्तसन्ततौ।

यत् किञ्चित् कर्मरूपस्य योगिनो भोगसङ्गमः॥ २९८॥

भवते देवता यासां स्वाधिकारपदानुगः।

विरक्तो भोगयोगस्य यदा योगी ख योगो सुरेश्वरि॥ २९९॥

तदा याति परां काष्ठां योगत्वान्न निवर्तते।

अथवा प्रक्रिया दृष्टाः प्रमेयं प्रविचिन्तितम् ॥ ३००॥

योगिनान्तु कलाध्यानं तमेवार्थं प्रसाधयेत्।

तत्वध्यानमतो वक्ष्ये योगिभ्यो योगभोगदम्॥ ३०१॥

निवृत्त्यादिस्वरूपाणि पृथिव्यादीनि चिन्तयेत्।

धरादिरूपलावण्यप्रथितानि तथा नृप॥ ३०२॥

गन्धतन्मात्रकादीनि त्मात्रकादीनि तन्मात्राणि तु भावयेत्।

प्रसन्नं विमलाक्षन्तु कुङ्कुमोदकसन्निभम् ॥ ३०३॥

स्रगिष्ठं शोचमानन्तु रागेभ्योमत्सथ श्रियम्।

शवप्रजेशवपुषं चिन्तयेत् सुखसिद्धये॥ ३०४॥

नीलाम्भोजजच्चविध्येयो वायुर्मित्रस्वरूपगः।

महेन्द्रापरजाकारौ पादौ पीनेन्दुरूपकौ॥ ३०५॥

ध्यातव्यं साधकेन्द्रेण तत्वध्यानाहितात्मनः ।

वाक् वागीश्वरीरूपा प्रतिष्ठाकारधर्मिणी॥ ३०६॥

भावनीया स्थिताक्षेण वाक्क्रियार्थप्रसिद्धये।

श्रोत्रं ककुन्मयं भाव्यं तच्च लोकेशरूपकम्॥ ३०७॥

मातरि स्वस्वरूपा ं तु वैजयन्ति गणाकुला।

त्वग्वेपालघवे देवि शीघ्राय च विपश्चिता॥ ३०८॥

कुण्डली कवची धन्वी स्कन्धनारूढमूर्तिमान्।

आलोकं सूर्यवद् ध्येयो जगतां दर्शनाय ॥ ३०९॥

रसनात्वद्रूपका ध्येया नासिका धरणी गुणा।

भास्वरप्रतिमं चित्तं तद्रूपं तत्स्वरूपकम्॥ ३१०॥

स्थविराकृतिर्मतिर्ध्येया योगिना भावितात्मना।

बालहेलास्वरूपस्तु प्रद्युम्नाङ्गविलासधृत्॥ ३११॥

भावनीयं रजो देवि मन्मथानन्दलिप्सया।

भिन्नाञ्जना रुक्मृमहिषी पत्नी चण्डी घनप्रभा॥ ३१२॥

करालवदनो घोरः स सेव्यो योनिशान्तये।

पद्माक्षं सुप्रसन्नात्मा शङ्खकुन्देन्दुसप्रभः॥ ३१३॥

पद्मजायुधवृद्धये यः सत्वोऽहं शासनस्थितः ।

प्रख्याख्य कर्मणो नित्यं तत्त्वध्यानविदा प्रिये॥ ३१४॥

दशशीर्षां महाघोरां त्रिंशत्तीक्ष्णां शताशयाम्।

शतार्द्धजघनां देवि शतपादां शतोदराम्॥ ३१५॥

हृदन्तमरुणामूर्ध्वक्रूराकारप्रतिष्ठिताम्।

भावयेत् प्रकृतिं धीमांस्वाधिकारमिन्दिराप्रभाम् ॥ ३१६ ॥

चक्रावर्तस्वरूपेण ध्येया तारुण्यरूपधृक् ।

रजोवद्वागरूपन्तु तमोवच्चिन्तयेत् त्रुटिम् ॥ ३१७ ॥

प्राकृतेन तु रूपेण संस्थानं वेदिनी कला ।

चिन्तयेद् वर्णभेदस्थां च भ्रूमाञ्जिष्ठकर्बुराम् ॥ ३१८ ॥

सहस्रमूर्ध्वसंघट्टमुकुटाटोपभास्वराम् ।

सहस्रवदनां भीमां व्ययुताक्षविराजिताम् ॥ ३१९ ॥

भुजायुतयुतां नीलभास्वज्ज्वालाप्रभोज्वलाम् ।

सर्वभूमिप्रदेशेषु फणीन्द्रकृतभूषणाम् ॥ ३२० ॥

लम्बोदरसहस्रां तु पादायुतगतिक्रियाम् ।

गजाजिननिविष्टाञ्च गुह्यानेकवराधराम् ॥ ३२१ ॥

आगुह्याकृष्णवर्णाभामाहृदं पीतवर्णकाम् ।

आगलाद् रक्तवर्णाञ्च तदूर्ध्वे सर्वतः सिताम् ॥ ३२२ ॥

मायामेवंविधां ध्यायेन्मायाभोगैकलालसः ।

विद्यावच्चिन्तयेद् विद्यां स्मरेदीश्वरमीशवत् ॥ ३२३ ॥

विद्याधिपं सदेशोक्त्या प्रत्यया दृष्टमार्गतः ।

प्रोक्तोपलब्धिलक्षेण शेषं सर्वं विचिन्तयेत् ॥ ३२४ ॥

स्वव्याप्तिविभवास्वादधामकं भवते प्रिये ।

निष्पन्नं योगिनां तत्वं ध्यानयोगे तथा पुरम् ॥ ३२५ ॥

तच्चापि प्रक्रियादृष्टरूपकेन विचिन्तयेत्

भूतघातकजं ध्यायेत् पदमव्यक्तरूपकम् ॥ ३२६ ॥

पुद्गलाकृतिगन्धाख्यं वाक्यसंस्थास्वरूपगम् ।

यत् तद्वत् तेजस्तत्वं त्रुटिरूपं विचिन्तयेत् ॥ ३२७ ॥

प्रपञ्चप्रतिमं ध्यायेद् यत् तद् योगीश्वरीपदम् ।

तथा चण्डपदं देवि विद्याविश्वविलासगम् ॥ ३२८ ॥

महापदं महेशाङ्गलीलालोकावलंक्षितम् ।

ध्यायेच्चक्तिपदं दीप्तं शक्तं शबलशालिनम् ॥ ३२९ ॥

प्रणवं महाप्रणवं प्राणवृत्त्यां विभावयेत् ।

पदं यत्तत् स्वरूपन्तु तद्व्याप्तिव्यापकं स्थितम् ॥ ३३० ॥

यच्च स्यात् तेन सिद्धेन प्राङ्मयं तदुदीरितम् ।

शब्दध्यानमतो ब्रूमि श्रूयतां पद्मलोचने ॥ ३३१ ॥

प्रोदिते धाम्नि योगीन्द्र सानन्देष्वष्टसङ्गमे ।

पर्यङ्कासनगः कुर्याच्चित्तं शून्ये समानसम् ॥ ३३२ ॥

चेतांसि सन्ति भूतानि नाहं चिन्त्यं न चिन्तनम् ।

चिन्तयेत्खं खयोगीन्द्र परेवपुषि निश्चलः ॥ ३३३

प्राप्नोति परमां काष्ठामशोच्यां वचनच्युताम् ।

नित्यानन्दां परां विद्धि मसृणां निरुपद्रवाम् ॥ ३३४ ॥

ततो ज्ञानदृशा वीक्ष्य स्वरषोडशकेन तु ।निजवक्रन्तु निष्पन्नं सकण्ठं

दक्षिणं भुजम्॥ ३३५॥

कवर्गेण तथा वामं चवर्गेण टवर्गजम्।

नितम्बमध्यवह्न्यन्तं वामं चैव तवर्गजम्॥ ३३६॥

दक्षपार्श्वन्तु निष्पन्नं वामे चैव परेण तु।

तदन्तेनोत्तरं देवि जाठरं चैव निर्मितम्॥ ३३७॥

पृष्ठं कृष्टेन निष्पन्नमन्धतामिस्त्रजां गुहाम्।

अर्चात्मकां त्वचं देहे मूकत्वेनाम्भमेव च॥ ३३८॥

निष्पन्नं जिघ्रमाफुल्लं सूत्रमुन्मादकेन तु।

जत्वेन रु जात्वेन च तथास्थीनिमज्जां कुणितसम्भवाम् ॥ ३३९॥

रेतः पङ्कविनिष्पन्नं चैतन्यं त्रिवलेन तु।

संहारकं महाघोरं नयनांबुमनन्तजम् ॥ ३४०॥

एवं वर्णात्मकं वीक्ष्य वपुरुत्तुङ्गविस्तरम्।

भगणैर्भासितं तद्वद् तद्वत् ध्रुवदेहं तथोत्तरे॥ ३४१॥

रोमरन्ध्रांग चिद्रैस्तु सन्तानं वर्णजातजम्।

निर्गच्चन्तमजस्त्रन्तु ताराबिन्दुस्वरूपिणम्॥ ३४२॥

स्तिमितेन समालोच्य मनसापूरीताम्बरे।

तस्य संस्थानसंघट्टघट्टितो गगनान्तरे॥ ३४३॥

चन्द्रादित्यौ न दृश्येते न ग्रहा न सुरालयः।पूर्णं सर्वं जगद् दृष्ट्वा

ततो योगी स्थिराक्षवृत्॥ ३४४॥

प्राणशक्त्योत्तमैकैकां लिपिमाहृत्य लीलया ।

पीयूषगोलकाकारं ग्रसेताश्रुदनाहितः ॥ ३४५ ॥

यत्तद्विलम्बिनीचक्रं तस्मिन्युक्तस्तु योऽङ्कुरः ।

तं दृष्ट्वा सितकुम्भाभं तद्रागं ग्रसितं क्षिपेत् ॥ ३४६ ॥

तावत् तावत् स योगीन्द्रो यावद् बाह्यमनक्षरम् ।

पूर्णञ्च वीक्षयेत् कुम्भं सुधिया स्नापिताङ्गिनम् ॥ ३४७ ॥

एवं काये प्रसूयन्ते प्रविशन्तं मुहुर्मुहुः ।

चिन्तयेद् योगवित् तावद् यावत् प्रत्यक्षतां गतम् ॥ ३४८ ॥

निष्पन्नेऽस्मिन् महाध्याने न तज्जगति विद्यते ।

यदस्य न स्याद् वस्तूयं सर्वज्ञत्वादिकं प्रिये ॥ ३४९ ॥

प्रारम्भेऽक्षरवेत्तृत्वं दृष्टनष्टादिका क्रिया ।

प्राणस्थिरेऽपि ध्यातेऽस्मिन् सर्वशास्त्रार्थविद् भवेत् ॥ ३५० ॥

कादिक्षांतार्णरूपेषु ध्यानस्तन्मयगा गिरः ।

पृथिव्यादीश्वरास्ते भोगं भुङ्क्ते यथाक्रमम् ॥ ३५१ ॥

लघुमात्राप्रसिद्धौ तु तेजोनिधिपदास्पदौ ।

देदीप्यते गुरूणाञ्च गुरुवक्रसुनिर्मलः ॥ ३५२ ॥

षडध्वे चोपदेशेन योगोऽयमुक्तः स्फुटार्थोऽर्थसन्तानसंयोगकारी ।

विभक्तो विशेषैर्विचित्रैरमेयैः सुबुद्ध्यापि यः सोऽपि दध्यौ स्ववीर्यम् ॥

३५३ ॥

श्रीदेव्युवाच ।

त्रिनेत्राग्निसंदीपितानङ्गदेह-भृगुद्योतपिङ्गीकृतोत्तुंगजूट ।

विषोल्लासलावण्यकीकृष्णकण्ठ परित्राहि लोकोस्त्वमीशेषभक्तान् ॥

३५४ ॥

जयाशेष विश्वेन्दिराक्षीरसिन्धो ।

जयानन्त दुःखाधिप क्रूरसिंह ।

जयाशुद्धिभीमान्धकारोग्रभानो

जयात्यन्तसंतप्तसौधाम्बुवाह ॥ ३५५ ॥

जयालोलगङ्गाम्बुनिर्धूतजटा जयेन्दुश्रियाभासिताशेषमूर्ध्वम् ।

जयोद्दामशङ्खावलीहारलील जयोल्लासिदंष्ट्रेंदुरश्म्यास्यवेश ॥ ३५६ ॥

जयाविर्भवद्धूममालाग्निदृष्ट्या समालोकिताराद्वरेण्य प्रदातः ।

जयोदग्रशूलाग्रभिन्नान्धकार जयानन्त रक्तपूर्णोत्तमाङ्ग ॥ ३५७ ॥

जयोपेन्द्रभयभीतदैत्येन्द्रभिन्नान्धकार जयात्यन्त दृप्तारिसंभग्नमान ।

जयानन्तवीर प्रदत्तप्रसिद्ध जयापूर्णगाम्भीर्यतत्त्वेन शुद्धा ॥ ३५८ ॥

जयालोललोलो हि कर्णावतंस जयोत्फुल्लनेत्रोत्तमारामशोभ ।

जयान्धासुरं वाश्रमैरेयमत्त जयाहीशमौलाङ्गसंदीपिताशेषदेह ॥ ३५९ ॥

जयानन्यजातिक्षयाकारि दृष्टा जयामोघशक्ते महावीरमूर्त्ते ।

जयास्वादिताशेषविश्वस्वभावः जयाक्रोडितानेकशत्रुस्वभाव ॥ ३६० ॥

जयानन्त विघ्नौघ दुष्टाशयात्मन् जयावद्यसंरुद्धचिद्दत्त शर्मन् ।

जयाद्यंत-वाम-क्रियाराध्य देव जयानन्त ब्रह्माप्तवामोक्तसिद्धः ॥ ३६१ ॥

जयाचोर्मिविद्याचलासिन्धुनाथ

जयाशेषशक्तिप्रबन्धोर्ध्वपीठ ।जयध्वस्तवीर्याणुवीरोर्ध्वकेश

त्वदुक्तेन योगेन तृप्तास्मि नाथ ॥ ३६२ ॥

कल्पासनानि तन्त्रेऽस्मिन् योगसंसाधकानि तु ।

तानि मे ब्रूहि शूलाग्रभिन्नान्धकशवोद्वह ॥ ३६३ ॥

श्रीभैरव उवाच ।

श्रवित्सं स्वस्तिकं दण्डं पर्यङ्कशकलोद्वहम् ।

प्रलम्बं भैरवं वीरं चगलं सुप्रसादिनम् ॥ ३६४ ॥

लीलं लीलाकरं चैव द्वादशैतानि सुन्दरि ।

आसनान्यनुमेयानि प्रतिपन्नानि सूरिभिः ॥ ३६५ ॥

मन्त्रविद्यायुजां देवि सिद्धियोगदिनानि तु ।

कार्पासशाल्मलीतूलपूरिते पक्षवस्त्रजे ॥ ३६६ ॥

त्वङ्मयेव द्विहस्ते तु षडङ्गुलसमन्विते ।

समन्ताच्चतुरस्त्रे तु वृत्ते वा सुमृदा सुधीः ॥ ३६७ ॥

सपूरके स्थितो योगमासनस्थोऽभ्यसेत् सदा ।

द्वौ तुलौ तु समुत्थाना धूरूर्ध्वे पादयोर्द्वयोः ॥ ३६८ ॥

सव्यञ्जकादधःकार्या वामा मूर्ध्नि निवेशयेत् ।

श्रीवत्समिदमुक्तन्तु स्वस्तिकं शृण्वतः परम् ॥ ३६९ ॥

जङ्घोरुसंपुटाधोर्ध्वस्थितौ मध्योत्तरौ च तौ ।
स्वस्तिकाकारकृत्पृष्ठो  दण्डेषूच्चिरतजानुभिः ॥ ३७० ॥
अन्योन्यवलिते जङ्घे काये तिर्यङ्मनाः प्रिये ।
तदेव योगबन्धेन पर्यङ्कं श्लथमादिशेत् ॥ ३७१ ॥
दक्षिणां यो नयेज्जङ्घां वामां शुद्धां निवेशयेत् ।
न कृष्णाञ्जलितद्योगी बन्धयेत् सकले ध्रुवम् ॥ ३७२ ॥
करौ यथा सुखं स्थाप्यौ वामाङ्गि भुवमास्थितः ।
दण्डमीषत्पुरोभागे प्रलम्बं विस्तृतं भवेत् ॥ ३७३ ॥
वामजानूर्ध्वगः सन्धिः किन्तु कार्यस्तु दक्षिणः ।
अग्रगे जानुनी कार्ये जङ्घे किञ्चित् प्रतिष्ठिते ॥ ३७४ ॥
पृष्ठप्रतिष्ठितौ पादौ बहिःस्थौ तौ नितम्बयोः ।
काये भैरवभावेन प्रोदितं भैरवासनम् ॥ ३७५ ॥
वामपादोपवेशेन वीरं साध्यकरालिनम्  ।
उपधानकयोगेन पृष्ठे जङ्घाप्रसारणात् ॥ ३७६ ॥
सुप्रसारितमुद्दिष्टं सरेष्टाच्च निकृष्टयोः ।
सव्यजङ्घोरुसन्धिस्थं वामगुल्फं निधापयेत् ॥ ३७७ ॥
इषन्निपतिता जङ्घा वामा लोला प्रशंसिता ।
स्वीय जङ्घोरुगं स्थाप्य नूपुरस्थानमुत्तमम् ॥ ३७८ ॥
घटिते सन्निवेष्टव्ये वामे कूर्परजानुनी ।

प्रसारितभुजो योगी विस्तृतोरुः शिरोन्नतः ॥ ३७९ ॥

लीलाकरं विजानाति प्रभुलीलाधरः प्रिये ।

लक्ष्मीहस्ते निधित्वञ्च ज्ञानमष्टगुणोद्भवम् ॥ ३८० ॥

शौचाप्यायनमुष्टिश्च मातृवीर्यश्रियामलः ।

मन्त्रविद्यास्त्रं देहि त्वमनन्यज गुणात्मज ॥ ३८१ ॥

ऐश्वर्यं चक्रमादेवि वीर्यमेषामुदाहृत्तम् ।

उदर्काजः सुसन्नद्धा नैस्पृहान्ततत्वदर्शिवान् ॥ ३८२ ॥

एकान्ते स्थितिशीलत्वाद् योगः सिद्ध्यति योगिनाम् ।

सममन्त्रममन्त्रं वा योगमेकस्वरूपकम् ॥ ३८३ ॥

निष्पाद्य नौस्तितीर्षुर्यो घोरात् संसारसागरान् ।

अतो रहस्यमन्यद्वा साधकः स्ववते यदा ॥ ३८४ ॥

तदा रहस्यभेदेन सुखोपायव्यवस्थया ।

तदानायासतः सिद्धं रहस्यत्वान्महेश्वरि ॥ ३८५ ॥

वृत्तिक्रमप्रयोगोऽत्र व्यक्तवृत्तिव्युपाश्रयात् ।

वीरेन्द्रवृत्तिजों योगः प्रभवेत् तन्न संशयः ॥ ३८६ ॥

कटुतिक्तकषायस्य मधुराम्लस्य सांप्रतम् ।

लावण्यस्यापि यत्रेच्चा तत्रारंभानुशीलनात् ॥ ३८७ ॥

पर्यन्तेऽपि च सा व्यक्तिः स्थिता सर्वानुषङ्गिनी ।

तत्रत्याज्ञत्व चार्तृत्वं उपजायत एव हि ॥ ३८८ ॥

अत्र संयोगिकां वृत्तिं यदा भजति साधकाः।

तदास्य सर्वसंपर्कक्रोडीकारो निवृत्तिमान् ॥ ३८९॥

सत्वानुस्यूत एवासौ समुदेति महाफलः।

भव्यतन्त्रीस्वराद्यन्ते यदा तल्लीयते स्थिरा॥ ३९० ॥

तद्वेत्तृत्ववाध्यत्वात् तदास्य व्यज्यते परम्।

येन व्यक्तेन सर्वज्ञ कर्तृता स्यादकृत्रिमा॥ ३९१ ॥

दृश्यार्थप्रतिभानान्तर्यदि तन्मयतां भवेत्।

तन्मयत्वात् तदन्तस्य परावाप्तिः प्रजायते॥ ३९२ ॥

तन्निरासेन वा स्वान्तविवेकप्रविकासनात्।

विकसत्येव चिद्वृत्तिस्तत्स्थं स लभते शिवम्॥ ३९३॥

तदुपालध्वयोगेन पररूपस्वरूपभाक्।

दृक्स्वरूपेऽत्ति संलीना तन्निरासेन पश्यति ॥ ३९४॥

तस्योदेति परः साक्षात् स्वरूपस्थः शिवोऽव्ययः।

अथ दृश्ये स्वात्मसत्ता स्वदेहामोक्षणे कृति ः॥ ३९५॥

सदावरणभावेन तात्स्थ्यात् तद्वत् स्वयं स्थितः।

स्थिरः समाधियोगेन योगाकारविचारयुक् ॥ ३९६॥

व्यापकः प्रभुतामेति परदेहानुजीवने।

मृतजीवशरीरादौ विचरत्यविशङ्कितः॥ ३९७॥

प्राग्वस्तु ग्व प्राग्वसु दृष्टतादात्म्यसत्ताधिगमयोगतः ।

सर्वाकारादिवैचित्र्यात्स्वरूपोद्योगयोजनात्   ॥ ३९८ ॥

व्यापकत्वमतस्तस्य सर्वगं प्रविजृम्भते ।

दृश्यद्रष्टोर्निरासेन प्रवृत्तिः प्रभवोत्तरा ः॥ ३९९ ॥

तया व्यक्तेरुदारा सा साटोपा विहिता भवेत् ।

आहारपानसंश्लेषाद् रासहासकृती स्मृते ॥ ४०० ॥

जृम्भाक्षतशरीरस्य तनुता स्फुटसन्धिनः ।

स्फोटान्ता शक्तिरतुला चिद्रूपा व्यक्तिमेति हि ॥ ४०१ ॥

यथा तथा शृणुष्वैव तद्विलोमनिभालनम्  ।

आहारादौ यावदिष्टा मूलप्रसरयोगतः ॥ ४०२ ॥

निरोधं यदि कुर्वीत तदा व्यक्तिमुपैति हि ।

परितृप्त्यवसानांते प्रारम्भे मध्यपूरणात् ॥ ४०३ ॥

मूलस्वरूपचिद्व्यत्त्या मूलतः प्रभवोत्तराम् ।

प्रेयसीकण्ठसंश्लेषप्रारम्भे मध्ययोगतः ॥ ४०४ ॥

पर्यन्ताद्यनुसन्धानात् स्मृतिमूलमुपाश्रयात् ।

तत् स्मृतिर्वा केवलैव चिद्व्यक्तिकरणी स्मृता ॥ ४०५ ॥

तद्भोग एव सा सम्यङ् मूलप्रसरयोगतः ।

निरोधकृत् समाख्यातो ज्ञात्वा कर्तृत्वलक्षणः ॥ ४०६ ॥

तद्भोगः स्यात् स्वसंवित्त्या विवेकानन्दनन्दितः ।

महानन्दमयः सम्यक् चिद्रूपः प्रभवेदसौ ॥ ४०७ ॥

तदाकारविकाराद्यैस्तत्तद्रूपनिभालनात् ।

तद्बोधपरिणामाभ्यां सर्वज्ञत्वं भवेदतः ॥ ४०८ ॥

शत्रुशस्त्रमहाभूतविद्युत्स्तनितवातजम् ।

त्रासमुत्रासजं यच्च तन्मध्याद्यंतयोगतः ॥ ४०९ ॥

मूलप्रसरयोगोऽत्र भाव्यस्तद्रूपमानसः ।

निरुद्धः सर्ववेत्तृत्वं प्राप्नोतीति किमद्भुतम् ॥ ४१० ॥

सर्वज्ञत्वमतोऽभ्यासाज्ज्ञानान्ते साधकस्य च ।

आनन्दलाभसंप्राप्त्या हर्षाच्चातीवसुन्दरम् ॥ ४११ ॥

आद्यन्तमध्ययोगेन मूलप्रसरयोगतः ।

आसीत् तत्प्रविवेकेन चिद्व्यक्तिः स्फुटमेव हि ॥ ४१२ ॥

विस्मृतस्य महाभाग स्मृतिसन्ध्यंशयोगतः ।

अनुसन्धिक्रमादेव मूलयोगप्रकाशनात् ॥ ४१३ ॥

समुदेति परः साक्षाद् येन व्यज्यति तत् पदम् ।

आद्यमध्यान्तगं मूलं जृम्भाकेलिं विभावयेत् ॥ ४१४ ॥

तद् बोधात् तत्प्रतीघाताच्चिवताव्यक्तिमेति हि ।

तद्वक्त्रं तस्य सौभाग्ये मूलवृत्तिविकासनात् ॥ ४१५ ॥

अभ्युदेति परः साक्षात् तद्वद् देहादिताडने ।कृते सति समभ्येति

मूलप्रसर एव हि ॥ ४१६ ॥

वर्णव्यक्तौ यदा व्यक्तौ गुणेतरविचालितौ ।

तद्गुणेतरयोगेन स्फुटः स्फोटादयः कृतः ॥ ४१७ ॥

एवमादिपदार्थानां संस्थिता शिवता हि या।

प्रतिभेदप्रभेदेन साख्याता ते यथार्थतः॥ ४१८ ॥

शक्तेरपरिभेदेन या व्यक्तिः पिण्डमाश्रिता ।

सा शृणु प्रभवोद्भावं क्रमव्युत्क्रमयोगतः॥ ४१९ ॥

या सा कन्दोदरे रूढा कुण्डलाकारविग्रहा ।

गुहागुढागुहान्तस्था तारकेन्दुविराजिता॥ ४२० ॥

फणापञ्चकसंयुक्ता प्रक्षुब्धाम्भो विभास्वराः।

ज्वलद् वह्निप्रतीकाशा प्रसुप्तभुजगोपमा॥ ४२१ ॥

पञ्चग्रन्थिधरा घोरा विश्वग्रसनघस्मरा।

तस्याः प्रबोधनं व प्रधोपन कार्यं महा करयोगतः॥ ४२२ ॥

तत्र वै सुप्रसन्नात्मा सुखासनमधः स्थितः।

बद्धपद्मासनो वीरो ऋजुकायः कृताञ्जलिः॥ ४२३ ॥

वक्रमीशद् वृवृत्तं स्यान्नेत्रे लुलिततारके।

सानन्दं चापि वेद्योऽयमुग्रनादप्रयोगतः ॥ ४२४ ॥

दक्षिणावर्तयोगेन यावत् कन्दोदरं खगः।

घोराघातप्रयोगेण यदा संपीडनं सकृत्॥ ४२५ ॥

क्रियते तु तदा तस्य क्रमद्वेष्टानयोगतः ।

प्रवृद्धयते क्षणार्द्धेन सा शक्तिर्घोरविक्रमा॥ ४२६ ॥

फणपञ्चकमत्युग्रं विकास्य प्रविजृम्भते ।

सशंखदण्डवच्चासौ  विद्युद्वद् व्यक्तिमेति हि ॥ ४२७ ॥

आदत्ते पञ्चग्रन्थीशोऽनुदारौजा महोल्वणः ।

यावत्प्रथमसन्धिस्थस्तावच्चिह्नं प्रवर्तते ॥ ४२८ ॥

भ्रमणं कम्पनं मूर्चा ज्वलमानं शरीरता ।

पश्चादानन्दमत्युच्चैर्विपुलं कामकालवत् ॥ ४२९ ॥

द्वितीयां पाटयेद् ग्रन्थिं यदा देवी सुदुःसहा ।

तदा चिह्नं शरीरस्थं तस्य सम्यक् प्रवर्तते ॥ ४३० ॥

विकासं चामिषं प्लावं स्तोभमत्यन्तशोभनम् ।

आवेशं बहुधाकारं योगिभाषाप्रभाषणम् ॥ ४३१ ॥

अतीतानागतार्थादिकथनं वा करोत्यलम् ।

तृतीयां वै महाग्रन्थिं व -न्थि यदा पाटयते बलात् ॥ ४३२ ॥

तदादर्दुरवद्भूमिं प्रथमं त्यजते भृशम् ।

पुनश्च चक्रवद् व्योम आस्ते साधकसत्तमः ॥ ४३३ ॥

महाव्याप्तिस्ततः पश्चात् समुदेति सदैव हि ।

योगनिद्रा महानन्दो भवत्येवास्य योगिनः ॥ ४३४ ॥

तीव्रता पटुतात्यर्थं सर्वज्ञत्वादिकं स्फुटम् ।

दूरादेवादि सर्वं स्यात् साधकस्य महात्मनः ॥ ४३५ ॥

चतुर्थीं सा महाग्रन्थिं यदा पाटयते शिवा ।

तदास्य सिद्धयश्चित्राः प्रवर्तन्ते न संशयः ॥ ४३६ ॥

कम्परोमाञ्च आक्षेपस्तोभ विभ्रम दृषः ।

आकर्षवेधपातादि पुरक्षोभणमुल्बणम् ॥ ४३७ ॥

घट्टनं रोधचलनमाक्षेपावेशमद्भुतम् ।

षड्रसाकृष्टिरतुला षड्भिः श्रुतिरनुत्तमा ॥ ४३८ ॥

षड्स्वभूः प्रभुता न स्यादाकारान्ता क्षतिस्तथा ।

महाव्याप्तिरुता घोरा चञ्चलाक्षेपसुन्दरी ॥ ४३९ ॥

समुदेति न सन्देहमिति भैरवभाषितम् ।

पञ्चमं ग्रन्थिसंयोगमतुलं घट्टयेद् यदा ॥ ४४० ॥

तदा पूर्वोक्तमखिलं समुदेति महाक्रमम् ।

कलाविलासमतुलं दशद्वादशभेदतः ॥ ४४१ ॥

षोडशक्रमयोगेन तासां यः प्रसरः परः ।

वह्नीन्दु सूर्यसद्रूपो ह्यष्टाविंशत्प्रकारजः ॥ ४४२ ॥

सोऽपि प्रसरमायाति चक्रभ्रमणविभ्रमः ।

बिन्दुचक्रः समस्तोऽपि चतुर्धा चित्तलक्षणः ॥ ४४३ ॥

कलाक्रमेण सकलः सोऽपि प्रसरति प्रिये ।

वाग्वृत्तिरखिलायास्ताश्चतुर्धा ख्यातिलक्षणा ॥ ४४४ ॥

तत्पतित्वमतोऽभ्येति प्रकारावेशलक्षणम् ।

तदतीतमतः सोढा योऽव्यक्तः प्रसरः स्मृतः ॥ ४४५ ॥

परापरविभागेन विसर्गान्तावधौ हि सः।

तद्व्याप्तिरेव जायेत तन्त्रवीर्यप्रकाशिका ॥ ४४६ ॥

सिद्धयोगिनिचक्राणां विमानानां च दर्शनम्।

प्रविभागविभागेन वेत्ति भुङ्क्ते च सर्वशः॥ ४४७ ॥

भुक्त्वा तत् तत्समापन्नो शिवः केवल एव सः।

व्युत्क्रमयोगोऽयं पत्रान्तरविराजितः ॥ ४४८ ॥

अनुषङ्गताः सर्वाः सिद्धयः संव्यवस्थिताः।

क्रमभेदमतो वच्मि शृणु पन्निलनन्दन॥ ४४९ ॥

विसर्गधामधाम्नोन्तर्या कला परमेश्वरी।

सर्वगर्भा सर्वमूर्त्तिः स्थितिप्रलयलक्षणा॥ ४५० ॥

विद्युल्लेखेव संपातं कुर्वती नन्दमध्यगा।

भवेद्यावत्तावदेव षड्व्याप्तिं व्यक्तिमेति हि॥ ४५१ ॥

आद्यव्यक्तौ कारणेन्द्रं व्यक्तिमायाति सिद्धिदा।

द्वितीयव्यक्तिसामर्थ्याद् वीर्यमौदार्यमेति च॥ ४५२ ॥

तृतीया व्यक्तिभेदेन ग्रन्थयो भान्ति सर्वतः।

आधारकरणेन्द्राणां चक्रास्तदनुसंस्थिताः॥ ४५३ ॥

चतुर्थक्रमभेदेन सर्ववीरेन्द्रसंस्थिताः।पञ्चमार्गा भवेद् व्यक्तिः पञ्च

व्योमान्यथा मता ॥ ४५४ ॥

तेषु पञ्चरतः सम्यक् खेचरीपदभाग् भवेत्।

या षष्ठी व्यक्तिरुद्दिष्टा रसद्रव्यप्रसूतिकाः ॥ ४५५ ॥

एवं षड्भूमिरूपेण व्यक्ता सा परमेश्वरी ।

व्याप्यव्यापकभेदेन परमार्थविचारतः ॥ ४५६ ॥

विचरंती जगत् कृत्स्नं सदेवासुरमानुषम् ।

तद् वष्टम्भयोगेन तत्स्वरूपविकासनात् ॥ ४५७ ॥

तत्स्वरूपो भवेद् योगी सिद्धिसन्दोहसंयुतः ।

एवमैकात्म्यसंपत्त्या शाक्तं शाम्भवमाणवम् ॥ ४५८ ॥

योगमाख्यातमेतद्वै गुरोरर्थप्रकाशकृत् ।

अवाप्य घोरात् संसारादुत्तरेन्नरसत्तमः ॥ ४५९ ॥

प्रोक्तोऽयं योगचन्द्रो जनकुसुमवतोच्वासमद्भूरिवाचां

विस्तीर्णांशुप्रतापप्रविहततिमिरे विस्तृते विश्वखाते ।

योगज्ञानप्रवृत्तिस्थितिविलयकरी स्वांशदेशस्वतन्त्रा

दीक्षा संगेव पूता समवपुरुदया श्रूयतां साम्प्रतं भोः ॥ ४६० ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां योगनिर्णयो नाम द्वादशः पटलः ॥ १२ ॥

त्रयोदशः पटलः ॥

श्रीदेव्युवाच ।

दीक्षा कतिविधा देव कामार्थान् साधयत्यपि ।

समाना वासमाना वा ह्येतदिच्चामि वेदितुम् ॥ १ ॥

श्रीभैरव उवाच

ज्ञानक्रियोदयादानात् तन्निरोधकसंक्षयात् ।

पुंसां हि गीयते दीक्षा दानक्षपणरूपतः ॥ २ ॥

सा सामयाथ निर्वाणाद् विभिन्नाद् विस्वरूपतः ।

समया हि पुनर्याति द्विर्भावं फलभेदतः ॥ ३ ॥

ज्ञानयोगप्रवृत्तिस्था प्राणिनामधिकारदा ।

तद्वासा नवधा नित्या व्याप्तिपददायिका ॥ ४ ॥

समया या च विज्ञेया निर्वाणापि द्विरूपिणी ।

मोक्षार्थिकारभेदाभ्यां स्थाणुभिस्तंत्रवेदिभिः ॥ ५ ॥

भूयो विमुक्तिदा दीक्षा निर्वाणा बहुभेदगा ।

शिवधर्मा लोकधर्मा क्षिप्रघ्नी पिण्डपातिका ॥ ६ ॥

एकातपोर्ध्वचिच्चुद्धव्यावृतेर्बन्धनत्रये ।

शिवाप्तिर्दर्शिता शेषसमयाचारपालनात् ॥ ७ ॥

मोक्षावाप्तिकरी या तु लोकाचारविपर्ययात् ।

शिवधर्मा स्मृता दीक्षाधिस्वरूपा महेश्वरी ॥ ८ ॥

निर्बीजाख्या सवीर्या च दीक्षाभेदः शिवागमे ।

पाकमूर्खा सुदीर्णाङ्गी एडत्वकुणियोषिताम् ॥ ९ ॥

सरूढात्यन्तभक्तानां भूभृत् संन्यासिनां प्रिये ।

विशुद्धसमयाचारा या कृता दैशिकेन तु ॥ १० ॥

निर्बीजा सा भवेद् दीक्षा सबीजा स्याद् विलोमतः।

विधिद्वन्द्वसहानान्तु सुन्दरि क्रियते तदा ॥ ११ ॥

गुरुदेवाग्निकार्याणि तैः कार्याणि सुभक्तितः।

अकुर्वतां हि तत्तेषां वाञ्छितं न भवेत् फलम् ॥ १२ ॥

लोकधर्मा तु या दीक्षा सा स्यात् स्थितिविलोमगा।

शिवधर्मक्रिया सा तु किन्तु लौकिकवृत्तिगा ॥ १३ ॥

शोधयेदथवा सर्वं धर्ममेकं न शोधयेत्।

लौकिकाचारधर्मस्था तद् भुक्त्वा निर्वृतिं व्रजेत् ॥ १४ ॥

अथासितं विशोध्यन्तु कर्मैकं दैशिकेन तु।

मलिनोध्वाथवा देवि शुद्धो भोग्यो न जायते ॥ १५ ॥

तद्भोग्यं तद् विभुक्तत्वात् प्रयात्यात्मा परं पदम्।

स्मृते यं लोकधर्मा तु दीक्षानिर्वाणगामिनी ॥ १६ ॥

एषातीते निरुद्धे तु प्रारब्धे कर्मणि प्रिये।

क्षीणभोग्यवशाद्या तु सा दीक्षा पिण्डपातिका ॥ १७ ॥

क्षुरिकास्त्रोग्रमन्त्रैश्च योगेनाधाय प्रक्षिपेत्।

परयोगसमायोगे सद्योनिर्वाणदा हि सा ॥ १८ ॥

क्रिया समानिकाः शूद्रविट्ब्रह्मवर्मिणाम् ।

मुद्रामन्त्रधनस्थानज्ञानयोगाङ्गभेदतः ॥ १९ ॥

समानफलयोगाश्च नासमानाः कदाचन ।

चतुर्दशशरीरस्थजन्तुचक्रस्य सुन्दरि ॥ २० ॥

साधनां त्वं शृणुष्वाग्रे यागं योगेश्वरीप्रियम् ।

समयी स्याददृष्टस्तु परमायापटावृतः ॥ २१ ॥

प्राक्संस्नातो महायोगी वीरभस्मगणेन वा ।

स्थाने यागविधिं कुर्यात् सुप्रतिष्ठे मनोरमे ॥ २२ ॥

षड्बलामण्डलं यत्तु सुस्निग्धद्विजराजिभिः ।

विशोकाम्भोजसंचन्नमानसं पुलिनोरुकम् ॥ २३ ॥

निम्नगाकूललीलाढ्यं पुष्पोदर्काम्बुनिर्झरम् ।

प्राक्पुण्यतपसां पुंसां चिह्नालङ्कारमण्डिताम् ॥ २४ ॥

वितानपर्वतप्रान्तस्थलीकाननवेश्मगम् ।

नगरग्रामघोषेषु पुरं च त्वरघोषगम् ॥ २५ ॥

चौरोरगविनिर्मुक्तं दिव्यावसथनिर्जितम् ।

गणमात्रनिकायैश्च वहुलिङ्गैरलङ्कृतम् ॥ २६ ॥

विश्वक्सेनजयादित्यसविताधिष्ठितन्तुमत् ।

तत्स्मृतं सुप्रतिष्ठं तु मनोहारि शुभप्रदम् ॥ २७ ॥

जन्तुपुञ्जाभिदघ्नन्तु खत्वा सर्वत्र मंत्रवित् ।

तुषाङ्गारास्थिनिर्मुक्तं कृत्वा स्थानं समन्ततः ॥ २८ ॥

सितादिवर्णयुक्तं तु स्वस्वाद्यास्वादसंयुता ।

सुगन्धादिकगन्धाढ्या सर्वसत्वफला रसा ॥ २९ ॥

न देहावयवैर्भिन्नैर्देही भिन्नः प्रशस्यते ।

गुह्याद्यवयवश्चैषु भिन्नसन्धिः सन्धि क्रिया मता ॥ ३० ॥

तद्भेदान्न हि पुंभेदो जातिभेदश्च दृश्यते ।

सन्नामानादिसंस्थाना प्राणिनां जगति प्रिये ॥ ३१ ॥

व्यवहारो जातिसंज्ञो व्यहर्तृपरिकल्पितः ।

भैरवास्त्राम्बुसंसिक्ता भुवो यांति पवित्रताम् ॥ ३२ ॥

जाह्नवी सलिलान्तर्गा यथैवोशरजाश्रया ।

मृदावलिर्गया सूर्यं तत्स्थानं सर्वतः समम् ॥ ३३ ॥

मुद्गराकोटितं कृत्वा समालक्ष्य धरातलम् ।

तत्र यागगृहं कार्यं शुभे शब्दे विपश्चिता ॥ ३४ ॥

नन्दा भद्रा जया रिक्ता पूर्णा च तिथयो मताः ।

रिक्ता वर्ज्या शुभाः सर्वाः सौम्यग्रहभसंयुताः ॥ ३५ ॥

ज्ञेन्द्रो वाचस्पतिः काव्यः सौम्यः क्रूरस्तथोत्तरः ।

नासत्यौ स्थावीरश्चन्द्रो ह्यादित्यः सुरनैगमः ॥ ३६ ॥

योन्यर्यमा नभोदीपश्चलाखण्डलवह्नयः ।

सुहृद्विश्ववपुश्चक्री प्राच्यपश्चोत्तरा प्रिये ॥ ३७ ॥

शान्ता भगणमालेयं शान्तिकर्माणि शस्यते ।

आखण्डलाचतुष्कं यत् तत् सूर्यादिग्रहक्रमात् ॥ ३८ ॥

प्राक् समृत्युरुक् सिद्धिफलकृत् सुरिभिर्मतम् ।

सिद्धयोगे सुयोगे च विष्टिद्वन्द्वविवर्जिते ॥ ३९ ॥

शुभकार्याणि कार्याणि वामे वाचलसञ्चरे ।

प्रीतिर्धृतिरथायुष्मान् सौभाग्यं शोभनो ध्रुवम् ॥ ४० ॥

सुकर्मा सिद्धिवृद्धी च ऋद्धिव्याहर्षणः शिवः ।

सिद्धः शुभोच्चः शुक्लश्च ब्रह्मेन्द्रः शान्तमूर्तयः ॥ ४१ ॥

स्मृता ः योगास्त्वमी सर्वे स्वाभिधानार्थसाधकाः ।

क्रूरैराध्यात्मिके काले प्रवृत्ते बलचोदिते ॥ ४२ ॥

मूर्धस्थं चिन्तयेच्चक्रं कालसंकर्षणीयुतम् ।

तद्विचिन्तयमानस्य विषुवो वाथवानिलः ॥ ४३ ॥

यत्काले च प्रवृत्तं तु तदा सर्वं शुभावहम् ।

पट्टबन्धाभिषेकाद्यं कार्यजातं समारभेत् ॥ ४४ ॥

बाह्याध्यात्मप्रतिष्ठेन कालेनैकतमेन तु ।

दिक्साधनैकनिपुणो देशिकं यागमण्डलम् ॥ ४५ ॥

ताराचन्द्रचले सौम्ये तूर्यघोषैस्तु सूत्रयेत् ।

मैत्रार्थं परमा तारा सपक्षमशुभावहा ॥ ४६ ॥

षष्ठैकादशे दशमे तृतीये जन्मसप्तमे ।

शशिनि कृतारम्भाणां प्रारब्धं निष्फलं न हि ॥ ४७ ॥

प्राक् संसाध्य प्रयत्नेन चित्रास्वातिनिदर्शनात् ।

त्वराग्रहस्तमागत्यौ दण्डौ वृत्तौ समौ ऋजु ॥ ४८ ॥

निखन्य तोरणस्तम्भसंस्थायातावुभावपि ।

उभयोरपि वारुण्यां सप्तहस्तांतरेण तु ॥ ४९ ॥

तृणं स्थाप्य नरो मन्त्री चित्रास्वाती निरूपयेत् ।

यदि दण्डान्तरारोधाद् दृष्ह्यन्ते ते निरीक्षकैः ॥ ५० ॥

सिद्धा प्राची तदा देवी नोऽथवा तु तथा बुधः ।

तावत् सञ्चालयेद् दण्डं तयोर्यावददर्शनम् ॥ ५१ ॥

ततः स्तम्भान्तरे देवि द्वादशांशविभाजिते ।

सम्तोह्य ख शस्तोह्य दक्षिणे पञ्चभागायामे तदन्तरे ॥ ५२ ॥

रेखा सा विषुवाख्या तु तथा शेषास्तु साधयेत् ।

स्थानस्य विषुवं साध्यं विषुवे च प्रतिष्ठयेत् ॥ ५३ ॥

बिन्दोः पूर्वापरे देया वह्नौ पाणिप्रमाणगौ ।

तयोर्मानेन कर्तव्ये चिह्ने सव्यापसव्ययोः ॥ ५४ ॥

ततोर्ध्वे सूत्रसम्पाते सिद्धे दिग्दक्षिणोत्तरे ।

आशाचतुष्टयेनैवं विदिशः साधयेत् सुधीः ॥ ५५ ॥

संसिद्धककुभाम्वण्डौ विषमैस्तु समन्ततः ।

एकादश समारम्भा एकादश गतान्तिकैः ॥ ५६ ॥

करैः संसूत्रयेद् वामदेवतेजोधिकारजम् ।

वैतालीयादिकान् सर्वान् दक्षयित्वा स्वशक्तितः ॥ ५७ ॥

कुमारीवीरविप्रांश्च भोज्य पूज्य विशेषतः।

चन्दनाभूषिततनुः सिताम्बरधरो मुनिः॥ ५८॥

कुण्डली मुकुटी स्रग्वी कटकी क्षुरिकाकटिः ।

लिङ्गवेशधरो वाथविभिन्नं शकुनैः शुभैः॥ ५९॥

सहायात् पूजयित्वा तु सूत्रारम्भं समारभेत्।

शक्त्यष्टकं प्रकृत्यादौ श्रीपर्णमथ ब्राह्मजम्॥ ६०॥

शाणं विल्वजं मौञ्जं वा कौशं मौलमथापि वा।

सर्वसौख्यप्रदं सूत्रं कर्तव्यं देशिकेन तु॥ ६१॥

पिष्टातकप्रदिग्धाङ्गमकल्माषतलं नवम्।

प्रत्यग्रपल्लवोल्लासच्चन्न संसूत्रकन्धरम्॥ ६२॥

कुम्भमध्ये प्रसिद्ध्यादौ पुष्पधूपसुपूजितम्।

हिरण्यं हेमरत्नं वा कटिबन्धोन्नतक्षितौ॥ ६३॥

शङ्कुं बाह्यं सुपूज्यादौ पुष्पधूपार्घविस्तरैः।

दूर्वासिद्धार्थकादप्सु वृद्धिर्द्वीपयथास्त्रजः॥ ६४॥

मृद्वल्कलसमायुक्तैर्नवार्घोङ्गप्रशंसितः ।

ततः क्रूराधिपे तुर्ये त्रिनेत्रे च क्रमात् प्रिये॥ ६५॥

संकवेति च ध्यातव्याः पूजितव्याश्च सूत्रिणः।

दिक्षु वा कीलकान् दद्यात् प्रागादिषु तथा नृप॥ ६६॥

बाह्ये लोकेश्वराः पूज्याः क्षिस्त्वा दिग्बलिमादरात्।

भूतेभ्यः क्रूरसत्वेभ्यः क्षेत्रपालाय चैव हि ॥ ६७ ॥

अथोपयोगिके चाद्यं वादाद्यं वक्ष्यमुज्वलम् ।

एवमाम्नातसंस्थाने कृतपूजाविधिर्गुरुः ॥ ६८ ॥

पूजयेद् वास्तुवीरन्तु शक्तिचक्रतरक्षमम् ।

सूत्रेण सुमितं कृत्वा रूपमङ्गलमानगान् ॥ ६९ ॥

कोष्ठकान् मध्यमे तेषां ब्रह्माणीं सन्निवेशयेत् ।

प्राङ् नीडे स्वभुवं देवीमाग्नेयीं स्थविरो न्यसेत् ॥ ७० ॥

विरिंचित्त्यंतरा तौ तु पिशितादिसनातनाम् ।

पैतामहीं तथा व्रीडां तिर्यग् वै चतुराननाम् ॥ ७१ ॥

हंसयानां निधीशे च कुण्डलीमीशकोणगाम् ।

कोशानां नवकं यत्तु ब्राह्मीचक्रस्य प्राग्गतम् ॥ ७२ ॥

तद्वामेन तु माहेन्द्रीं स्थाप्य सर्वाङ्गसुन्दरीम् ।

सङ्क्रन्दनी सुनासीरा कौशिकी शतमच्युति ॥ ७३ ॥

पुरन्दरादिदेवेशी हर्यक्षा मेघवाहनी ।

प्राङ् नीडादीशकोणान्तं न्यस्तव्या विधिवत्र्मना ॥ ७४ ॥

रोहिदास्तप्यथैवं हि न्यस्तव्या मातरो नव ।

कौमारी कार्तिकेयेशी सेनास्कन्दा विशालिनी ॥ ७५ ॥

क्रौञ्चघ्नी शक्तिहस्ता च शतपत्रासना परा ।

सन्मुखी नवमी ह्येतामध्यकोशाधिका प्रिये ॥ ७६ ॥

नरारावापि वाराही याम्या वैवस्वती परा।

वर्मणी चण्डिनी कृष्णा कैनाशी महिषप्रजा॥ ७७॥

नवमी धूम्रघोरा तु मध्यनीडादिका न्यसेत्।

सुगन्धिभुजचामुण्डां द्वयर्चां चर्चां कपालिनीम् ॥ ७८॥

वैतालीं च रुद्रकालीञ्च महाकालीं करालिनीम्।

विसरां मध्यनीडादिदृष्टाम्नायेन विन्यसेत्॥ ७९॥

नारायणीं ततो मध्ये प्रत्यग्वेष्मगणे न्यसेत्।

माधवी वासुदेवी च विष्वक्सेनां जनार्दनीं॥ ८०॥

वैष्णवी मुञ्जकेशी च वैकुण्ठा योगतन्द्रिणी ।

प्रागुक्ताद्यास्त्विमा देव्यो माधव्याख्यान् निवेशयेत्॥ ८१॥

एकदंष्ट्रा महाकाया वक्रशुण्डा महोदरा।

विघ्नकर्त्रीं महानासा गजवक्रानुविग्रहा ॥ ८२॥

आमन्दकामरूपेशमध्यभागनिवासिनी ।

एकदंष्ट्रादिकादीनां प्राग्गृहादिस्थिता स्मृता॥ ८३॥

नैधोऽपि नवके मध्ये रुद्राणीं स्थापयेद् बुधः।

त्र्यम्बिका त्रिपुरन्ध्रीव स्थाणवी शशिभूषणा॥ ८४॥

भवानी कृत्तिवासा च धृष्टशोका कपर्दिनी।

पूर्वादिक्रमशो देयास्त्र्र्पविष्टे ततः प्रिये॥ ८५॥

दत्वा घोरतरां मध्ये ह्यघोरां घोररूपिणीम्।

तथा घोरतरां देवि घोरघोरतरां पुनः ॥ ८६ ॥

महाघोरा ख रां सुघोराञ्च घोरास्यां घोररूपिणीम् ।

प्राक् क्रमेण न्यसेत् मन्त्री मन्त्रतन्त्रविधानवित् ॥ ८७ ॥

एतदष्टगुणं तत्वमेकाशीतिविभेदतः ।

वासुदेवशरीरेस्मिन् मातृभेदेन विस्तृतम् ॥ ८८ ॥

पदपूज्यानि वृन्दानि नवैतानि भवन्ति हि ।

मध्याद्यादि विशालाक्षि प्रथमं प्रथमः क्रमात् ॥ ८९ ॥

स्वपदेनांगसंयोगः कार्यो जातिविभेदतः ।

हृद्याद्यासनसंकल्पो भिन्नाभिन्नेऽवशिष्यते ॥ ९० ॥

वपुर्वपुष्माश्चैवात्र स्वपदेन प्रशंसितुम् ।

एवं वास्तव वपुषि कृतदेवार्चनः क्रियः ॥ ९१ ॥

कारयेन्मण्डपं तत्र पक्वेष्टमपदारुजम् ।

षड्भागभाजिते धाम्नि त्यक्तवासौ पार्श्वयोर्द्वयोः ॥ ९२ ॥

अनन्तांश चतुष्के तु समं सूत्रचतुष्टयम् ।

कीलको तानि तं कृत्वा द्विहस्तोपरि विस्तृता ॥ ९३ ॥

तालुत्रिभागोत्सेधे च वतस्रो भिन्तयः व ख भिन्नयः शुभाः ।

वातायनसमायुक्ताः कर्तव्या घनवाजिकाः ॥ ९४ ॥

गर्भपक्षांशकोत्सेधः किञ्चित् समधिकोऽथवा ।

पक्वेष्टकमयः कार्यः पट्टच्चन्नोर्ध्वमण्डलम् ॥ ९५ ॥

कुम्भन्तु घटितं स्थूलं कुक्षिशल्यक्षतास्पदम् ।

निष्कंपाः सुदृढाः स्थूलाः पट्टिकास्तेषु रूपयेत्॥ ९६ ॥

चतस्रः क्षेत्रमानस्थास्ताश्च कोणाश्रयं गताः।

सुसमा सर्वतः कार्या ह्यग्राधिष्ठितभिन्नयः॥ ९७ ॥

तासां मध्ये समे देया किञ्चित् न्यूनेऽथवाप्यथ।

चतस्रोऽन्या दृढास्तिर्यग् लोहकीलककीलिताः ॥ ९८ ॥

तासामधोर्ध्वतश्चिन्त्यं फलकैस्तु समन्ततः।

निबद्धे सन्धिदेशे तु पारमायसकीलकैः॥ ९९ ॥

लीनं कालासृकं कार्यं शिल्पिना शिष्टवेदिना ।

अङ्गविद्धस्य कालस्य शल्यवित् स प्रशंसितः ॥ १०० ॥

कृतदारुमयं ह्येवं समन्तादिष्टकारितम्।

सुधापाण्डुरितं कुर्याद् दार्विद्धमथ धारयेत् ॥ १०१ ॥

वेणुकाष्ठतृणच्चन्नं कुर्याद्वा काष्ठपञ्जरम्।बाह्यांशेन समन्तात्तु वीथिकां स्तम्भमालिनीम्॥ १०२ ॥

नेत्रपट्टकृताटोपामन्तरं कारयेत् समाम्।

वास्तुदेवविभक्तानि समद्वाराणि सर्वतः॥ १०३ ॥

द्वाविंशतिर्महादेवि वेदितव्यानि चुम्बकैः।

मरुत्पतिशुभं युग्मं मम क्षेमायुश्च द्वव्॥ १०४ ॥

ऐश्वर्या यत् पदं तच्च नार्हन्ति ततो नृप।

स्वचित्तिकृतिवक्रस्थं गौर्या सौभाग्यकृन्मतम् ॥ १०५ ॥

धनवन्तं पदं चैव स्वेषुगं रत्नधातरि ।

सर्वावाप्तिकरं तद्वन्निधिधातृपरि स्थितम् ॥ १०६ ॥

सुकवाटकृताटोपं चतुर्द्वारं प्रशस्यते ।

एकयुग्मरतिं वाथ शुभमेकमुखं गृहम् ॥ १०७ ॥

नौवासवीथिकं कार्यं कार्यं भद्रसमायुतम् ।

युग्मभागं तु दैर्घ्येण भागमानन्तु विस्तरात् ॥ १०८ ॥

भद्रमेकं प्रकर्तव्यं द्वित्रीणि चतुरोऽथवा ।

नित्यार्थं सुमतिः कार्या भद्रभितिस्सरस्यगा ॥ १०९ ॥

पक्षौ चानवनौ धार्यौ गजोष्ट्रसदृशौ समौ ।

मध्ये भारतुला देया भित्तिस्तम्भविदारिता ॥ ११० ॥

तदूर्ध्वे लंबिपटलमारूढं चादकृन्मतम् ।

तृणमण्डपरुद्राणामेतल्लक्षणमीरितम् ॥ १११ ॥

पक्वेष्टानां यथेष्टोर्ध्वं सप्रणालं शुभावहम् ।

उच्छ्रायाद्भित्तितुल्यन्तु द्वारं विस्तारसम्मतम् ॥ ११२ ॥

एकशाखं द्विशाखं वा त्रिशाखोदुम्बरान्वितम् ।

गृहाननं प्रशस्तन्तु सुललाटार्गलान्वितम् ॥ ११३ ॥

रुचको वज्रकश्चैव वह्योऽतिवज्रः प्रलीनकः ।

मन्थानो मन्मथश्चैवषडेताः स्तम्भजातयः ॥ ११४ ॥

रेखाग्रन्थिश्च तारोप्य स्तम्भानां कोशमध्यगाः ।

कोशमध्यसमारोपा द्विधा देवादनिष्टता ॥ ११५॥

भवते साधकेन्द्राणां क्रियामार्गविधायिनाम् ।

परधोमुखस्यास्य ह्यघोरीनवकं शिरः॥ ११६ ॥

साक्रन्दनं रौरवञ्च स्कन्धयोः संप्रतिष्ठितम् ।

सव्यदक्षिणगानीव गणकौमारसम्भवम् ॥ ११७ ॥

वक्षो हृच्चापि कौडिन्यं वामनं  याम्यकंकटी ।

नवकं भाद्रकालञ्च संस्थितं सन्निकृष्टयोः ॥ ११८ ॥

मर्माणि तस्य संत्यज्य कार्यो वाथ विधिर्बुधैः ।

शिरो हृज्जठरं ग्रीवा नाभिर्नेत्रौस्तनान्तरे ॥ ११९ ॥

पादहस्ततलान्यत्र मर्माणि प्रसराणि तु ।सर्वमेवं निरूप्यादौ कृते यागनिकेतने ॥ १२० ॥

मध्ये सद्वेदिका कार्या द्वादशाष्टाङ्गुलाथवा ।चतुर्भिर्वासमुत्सेधाद् विस्तरे रुत्युच्चाटकृन्मता ॥ १२१ ॥

व्याघात ः कर्णी नित्यं प्लवान्तो नूनपान्मही

व्याधिर्मृत्युविधातारी सव्याबुप्लवयोगगा ॥ १२२ ॥

नैकायां वेदिकायान्तु प्लवां वै सर्वभूमिषु ।आश्रयोद्यतचित्तस्तु मृगयेत शुभाशुभम् ॥ १२३ ॥

निष्पन्ने मण्डले धाम्नि भद्रेष्वग्निगृहाणि तु ।

स्थाणुना सूत्रणीयानि सिद्धान्यस्मिन् शिरश्चिदे ॥ १२४ ॥

वेदियोन्यर्द्धचन्द्रञ्च त्र्यस्रवृत्तं षडस्रकम् ।सरोजमष्टकर्णञ्च कुण्डमष्टविधं स्मृतम् ॥ १२५ ॥

सूत्रास्याग्निमये क्रूरे ह्यञ्चले जन्मजन्मनि ।

भूतेशेव स्थितिः कार्या ज्ञातव्या चुम्बकेन तु ॥ १२६ ॥

भूभृत्सौभाग्यशान्तिश्च दाहसन्तापकामदम् ।

अस्थैर्यं मन्दिरात् सिद्धिः कुर्यादेतदुपासनात् ॥ १२७ ॥

प्रागग्निदक्षिणे वृत्तमविरुद्धे विभूतिदम् ।वासान्तकान्तयोनिश्च सर्वसौख्यप्रदायिका ॥ १२८ ॥

देहाष्टकार्णमन्योन्याश्रया ं शुभसरोरुहे ।

खण्डेन्दुप्रत्यगग्नौ च शान्तिकर्मणि शस्यते ॥ १२९ ॥

क्षेत्रं वेदी समाख्याता गृहानामाशुशुक्षणिः ।

मलभेदगतं जीवं साध्यधर्मेषुगं ततः ॥ १३० ॥

प्रागुक्तक्रमशो देवि मध्यबिन्दोस्ततः सुधीः ।

ज्येष्ठद्वादशकाम्नातसूत्रेणाशाचतुष्टये ॥ १३१ ॥

प्राक्क्रमाच्चिह्नयित्वा तु कौशिकान्तकयोगतः ।

नेमिं कुर्यात् तद्वदेवान्यसन्धौ ह्युत्क्रमेण हि ॥ १३२ ॥

धर्मोद्योगाच्च मरूतो यक्षाधिपयोगतः ।

बिडौजश्चन्द्रसंयोगान्तिमिगीशं प्रसारयेत् ॥ १३३ ॥

सूत्रस्थानात् तदूर्ध्वे तु तुर्यकर्णे प्रसारयेत्।

तुर्यङ्गुलसमास्तिस्रो मेखला ः वर्तयेद् बुधः॥ १३४॥

वदनाङ्गुलादिमस्यादियुग्मगा व्योम वेदगा।संस्कारगा तृतीया तु भूर्लक्ष

णमिदं मतम्॥ १३५॥

वितानोच्छ्रायसं यत्तु तद् भवेच्चतुरङ्गुलम्।

दक्षिणे पश्चिमे वाथ नाभिः कार्या विपश्चिताम्॥ १३६॥

अन्तश्च मेखला मध्यादङ्कयेद् द्वादशाङ्गुलम्।

बाह्या या मेखला तस्या बाह्येद् द्वङ्गुलनिर्गमात् ॥ १३७॥

समन्तान्नाभिरुद्दिष्टा द्वादशाङ्गुलमानगा।स्वयोनिलक्षणं नाभिकुण्डानां

शुभदा मता॥ १३८॥

अविरुद्धाथवा कार्या सर्वास्वपि भगाकृतिः।

तुर्यकर्णा तु या योनिस्तस्या उभयपक्षयोः॥ १३९॥

चिह्नाष्टाङ्गुलमानन्तु बाह्यजानि तथैव च।पक्षचिह्नोदलीकृत्य प्रा

क्न्होऽपि दशाङ्गुलम्॥ १४०॥

तदग्रनाभिपक्षाङ्करेखापाते कृते सति।पक्षरेखा द्वितीया तु निपात्या

चुम्बकेन तु॥ १४१॥

नाभिबाह्यागते ह्येवं निर्णीते मेखलायुगे।नाभ्यं तत्तन्मुखं कार्यं

षोढाभागविभाजितम्॥ १४२॥

मेखलाग्रेऽङ्गुलावाम जीवपार्श्वगताकयोः ।

तद्बाह्ययोश्च कर्तव्यो रेखापातो भगाकृतिः ॥ १४३ ॥

एवमेतच्छुभं कुण्डं सर्वमङ्गलसंज्ञकम् ।निष्पाद्यो मेखालाबन्धः

कार्योषाष्टकजोऽथवा ॥ १४४ ॥

रक्षोमरुद्दते ह्येतद्दिक्षु सर्वासु सुन्दरम् ।अत्र सन्निधिमायाति

मन्त्रहीनोऽपि पावकः ॥ १४५ ॥

त्वदनन्यजमैरेयमदाकृष्टहृदा मया ।प्रकाशितमिदं देवि कुण्डं कु

ण्डाधिनायकम् ॥ १४६ ॥

नित्यनैमित्तिके चैव गर्तेऽस्मिन् द्वादशाङ्गुले ।

काम्ये तु त्रिगुणा कार्या लक्षहोमे महेश्वरि ॥ १४७ ॥

लक्ष्याधोहोमयेद् वास्तुकुण्डे काम्यमधीश्वरि ।

पक्षात्पञ्चदशान्ते तु द्वे हस्ते जुहुयाद् बुधः ॥ १४८ ॥

गुणहस्ते तथा देवि तदूर्ध्वं यावत् त्रिंशति ।

दशलक्षैकहस्ताद्या कुण्डवृद्धिः प्रशंसिता ॥ १४९ ॥

तुरीययुगहस्तं तु यावदूर्ध्वं न कारयेत् ।

कोटिहोमादिको होमो होतव्यस्तत्र साधकैः ॥ १५० ॥

त्रिहस्ताद्यग्रयोनीनां षडङ्गेऽनङ्गमेखला ।

त्रिंशत्या दशवृद्ध्या तु नाभ्यङ्गुलमितिः शुभा ः ॥ १५१ ॥

यन्मानमग्नियोनीनां तद् ग्राह्यं तु समेखलाम् ।

मेखला योनिरूपा तु तद्भिन्नवपुषः शुभाः ॥ १५२ ॥

एकाद्यष्टाङ्गुलं यावत् कण्ठान्वाभ्यादृता प्रिये ।

स्यातां कुण्डाष्टकस्यापि तदधः कुण्डलोष्ठवत् ॥ १५३ ॥

भास्वत्संसारज्येष्ठा वा नाभिः स्यादेकहस्तके ।

एकपाणीमिति द्विगुणा द्विहस्तापि प्रशस्यते ॥ १५४ ॥

समसुखाम्बिका पत्रनयनाङ्गुलमूर्ध्वतः ।

कर्तव्यं मेखलावृन्दं कुण्डे वै पञ्चमेखले ॥ १५५ ॥

युगकेसरिपक्षैश्च तथा चैव त्रिमेखले ।तुर्यांशमेखलं हस्तं प्रशस्तं

चैकमेखलम् ॥ १५६ ॥

मेखलानां समस्तानां वितानोदग्रता सदा ।ददाति वाञ्छितान् अर्थानान्

वासा हिंसति प्रिये ॥ १५७ ॥

लभ्यते कारणावाप्तिर्विभक्ता या च मेखला ।त्रिमेखले त्रिनेत्रत्वं क्षेत्रज्ञ

त्वमथेतरान् ॥ १५८ ॥

प्रागिवाप्यथ जीवाग्रे सरोषं तूलयोनिग ।निष्क्राम्य बाह्यतो लक्ष्यं

आगारखण्डेऽथवा प्रिये ॥ १५९ ॥

कर्णात् कर्णान्तरैः सूत्रैर्मध्यं मध्यं महामते ।आग्नेयशकलस्यान्तः

स्थिरो वामकरो गिरिः ॥ १६० ॥

मरुन्मतां ममाद्याम्यं भ्रामयेद् वा सङ्गमे ।तथैव ऋषभोः खण्डो यमतो

जलसङ्गमम् ॥ १६१ ॥

पृष्ठो जीवं प्राक्प्रकृत्यां सङ्गमोपरि रेखया ।

योनिरेषा समाख्याता प्रागग्राद् वा प्रवर्त्तयेत् ॥ १६२ ॥

वेदीं कृत्वा दशाङ्गान्तु ह्यन्तर्भागाष्टकेन च ।भ्राम्य सव्यापसव्यं तु रत्नधातरि चान्तके ॥ १६३ ॥

भागे कान्तगता ं देया रेखैका पक्षरेखगा ।

खण्डेन्दुः  सिद्ध्यते ह्येवं ततस्त्र्यंशं विचिन्तयेत् ॥ १६४ ॥

कारणांशं बहिर्दत्त्वा मलभिर्जीवकोटिगम् ।तदब्देवं पुरि त्यज्य धक्ष पोस्वाङ्कयेद्बुधः ॥ १६५ ॥

तत्र   त्रयं त्रिकोणं स्यात् स च ब्रह्म समन्ततः ।

कालावयमेकेन बहिस्तौ वर्तुलं क्रमात् ॥ १६६ ॥

पूर्वांशकं बह्विर्दत्वा कुम्भयोरथ भागयोः ।धर्मेन्दुभ्यां तदर्धञ्च प्रागङ्काद् ब्राह्मणोऽङ्कयेत् ॥ १६७ ॥

प्रागङ्कब्रह्ममानेन सव्योत्तरदिशोः प्रिये ।पश्चिमेऽप्येवमेवं हि ब्रह्मप्रत्यग्विलेखतः ॥ १६८ ॥

ब्रह्मोर्ध्वे सूत्रषट्केन षट्कोणं सिद्ध्यते शुभम् ।

चतुर्भागविभक्तायां कुर्याद् वृत्तचतुष्टयम् ॥ १६९

मूलयोनौ ततः कार्या कोणरेखा विपश्चिता ।रेखापातः पुनः कार्यो मध्यतो जवकोणयोः ॥ १७० ॥

रेखाषोडशकेनैव दलं स्यात् तत्र रेखिणाम् ।दलाग्रं सङ्गतिः कार्या कर्तुः रेखानुरेखयोः ॥ १७१ ॥

दलसन्ध्यन्तरं प्लोषा कुण्डस्यादम्बुजाकृतिः ।द्विगुणीकृतरुद्रांशं क

र्णात्कर्णं कर्णे विलोकयेत्॥ १७२ ॥

तैर्मत्स्यैश्चतुरस्रन्तु मध्ये त्र्यस्रं प्रसाधयेत्।

तत्क्षणांकितजीवाय प्राग्दक्षञ्चैव पश्चिमात्॥ १७३ ॥

प्राचीन्दु विधोर्गजगा सूत्रतुर्यान् प्रसाधयेत्।

अष्टकोणं हि गर्भस्थं रेखाभङ्गं महीपते ॥ १७४ ॥

कुण्डाष्टकमिदं प्रोक्तं सद्याब्दैरासनादिकम्।

मण्डलाष्टकमेतद्धि भवते द्वारयोगतः॥ १७५ ॥

अन्तर्भूमिदृढत्वाच्च सुसमं स्थंण्दिलाष्टकम्।

विदितसकलगुर्वाधानवेत्ता गुरुरमरेशगुरुप्रबोधारी।

नयविनयपरः शिवत्वलम्भो वितरति विविधैरनेकमार्गैः॥ १७६ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्चेदेश्रीजयद्रययामले महातन्त्रे चतुर्विं

शति साहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां त्रयोदशः पटलः॥ १३ ॥

चतुर्दशः पटलः॥

जयद्रथ उवाच।

कीदृक् संसारकृत् पाशः प्राणिनां दग्धदर्पकः ।

संस्कार्यः कीदृशः शिष्यः एतदिच्चामि वेदितुम्॥ १ ॥

श्रीभैरव उवाच।

भैरवानल निर्दग्ध भूतसव्योग्र भोजनः।

महाभैरवशास्त्राम्बुपरिपूर्णमहोदधिः ॥ २ ॥

मूर्त्तिः मूर्त्ति शुद्धसुधाभासिक्रमप्राप्तक्रियावताम् ।चन्द्रेणैवाभिषेकेन

ममेवालंकृता कृतिः ॥ ३ ॥

विप्रविद्धर्मचर्या वा सर्वविच्चान्तिकृन्मनः ।

नानादेह रूह श्रीमानार्यभाषाविशारदः ॥ ४ ॥

समग्रावयवोत्तुङ्गललाटो रक्तलोचनः ।

मृदुस्निग्धशिरोजन्मभृद्गकुटिलश्रियः ॥ ५ ॥

लहरीग्रन्थिर्जटावान्ं शिखीटोपशिरोऽथवा ।

वक्षोरस्कवितानाङ्गो देवीपुत्रोन्नतत्रिकः ॥ ६ ॥

आयामदोषणीपीनः स्वाङ्गुलिस्वनखेदुरः ।

स्निग्धैकद्वित्रिलोमोतः सुजङ्घमृदुपादुकः ॥ ७ ॥

त्वगक्षिनखदन्तानां स्निग्धधाता प्रसन्नगुः ।

विद्यापञ्चकविद् वीरः कलाविद् विशदोरुरुक् ॥ ८ ॥

कान्तो भद्राकृतिर्धीमान्नयशास्त्रैकरञ्जितः ।

कामनिद्रानिषेवी च न शब्देन निशाटनः ॥ ९ ॥

जाग्रधारभयात्यर्थो दुष्टसंगी न चैव हि ।

सुनिमित्ततरुर्मानी स्वल्पकोपः कोन प्रियंवदः ॥ १० ॥

सुवृत्ताम्नायमृत्सृज्य स्मृतिधृतिनिभौऽन्तकृत् ।

योगशीलश्च तन्त्रेऽस्मिन् गुरुवत् पापवान् यतः ॥ ११ ॥

देवानुदेवतावह्निज्येष्ठस्वामिप्रपूजकः।

अभ्यागतजने नम्रो नस्रो नीचेऽप्यात्मयवीयसि ॥ १२ ॥

सत्रत्रयप्रयोक्ता तु सर्वसत्त्वहिते रतः।

विषयी स्नातकः सद्मी रूपस्वी वा प्रशंसितः॥ १३ ॥

आराध्याराधकस्तालश्चरुभुग् वा महेश्वरी।

आम्नायानुग्रहायातसर्वाणूनां सनिर्वृतः॥ १४ ॥

पराद्वयपदावस्थः शून्यतत्वेति निश्चितः।

तत्वानुभवशैवेषु न दृष्टद्वयगोचरः॥ १५ ॥

लोकाचारनिरापेक्षो वामाचारकृतास्पदः।

विषयी विषया विषयासक्तः सर्वानुग्रहकृन्मतः॥ १६ ॥

पण्यवर्णाङ्गनातन्त्रीप्राप्तभुग् वाथ स्नातकः ।

स्ववर्णान्नीचवर्णाच्च गृहस्थोद्वाहितो मतः॥ १७ ॥

धराश्रयाश्रयः सो हि लोकसंवृत्तिसंस्थितः।

गरीयसि पदे चिन्ता ह्यथवास्य सदा यतः॥ १८ ॥

अतोऽस्य तद्गरीयस्त्वं कुलमध्यनिरोधकम्।

ब्रह्मचर्यरतो द्वन्द्वो निराकांक्षो जितेन्द्रियः॥ १९ ॥

लिङ्गवांश्च स्मृतो लिङ्गी लिङ्गाराधनतत्परः।

चतुर्णामप्यथैतेषां आराध्यादिविभिन्नता॥ २० ॥

स्वयं चागतचित्स्वान्ता हैमवत्यवधारय।

अथातः संप्रवक्ष्यामि तस्याराध्यस्य लक्षणम् ॥ २१ ॥

येन विज्ञातमात्रेण  पशवो यान्ति निर्वृतिम् ।

शिववत् सर्वशास्त्राणामाराध्यःआराध्यः शिवपूजकः ॥ २२ ॥

गुरुदेवाग्निभक्तस्तु मन्त्रतन्त्रविशारदः ।

ज्ञानविज्ञानसंपन्नो व्रतचर्याभिनन्दनः ॥ २३ ॥

महाभैरवपीठस्थः कलाकल्पितविग्रहः ।

मन्त्रपीठप्रणेता च तद्योगोयतमानसः - ॥ २४ ॥

क्रियाकालकरः श्रीमांश्चर्याव्रतसमुद्यतः ।

शान्तो दान्तो जितक्रोधो दम्भमायाविवर्जितः ॥ २५ ॥

शुचिर्दक्षो महासत्वं सुप्रसन्नमनाः सदा ।रुद्रवेशधरो नित्यं

जटाभस्मतनूज्वलः ॥ २६ ॥

मैत्रीकारुणीको वीरो ह्यप्रमादी सुनिश्चितः ।

प्रारब्धस्यान्तनिर्वाही वितृष्णो ज्ञानविद् बुधः ॥ २७ ॥

सर्वभोगविलासाढ्यप्राप्तदुःखपराङ्मुखः ।

शैवागमप्रवक्ता च भूतगारुडयोस्तथा ॥ २८ ॥

योगशास्त्रप्रबुद्धश्च शिष्यानुग्रहतत्परः ।

मन्त्रदानादियुक्तो यः कुलीनः सर्वकर्मवित् ॥ २९ ॥

दृष्टक्षेत्रप्रभावश्च जीर्णविद्याव्रतोत्सुकः ।

विरक्तः सर्वभावेषु स्थितिमात्रावलंबकः ॥ ३० ॥

जीवन्मुक्त इवातिष्ठेन्न च भोगेषु रज्यते ।

आरोध्यैष समाख्यातः सर्वलक्षणसंयुत ः॥ ३१ ॥

राज्यवत् सर्वभूतानां भयाभयनिकेतनः ।

पशुपाशपतिज्ञानाद् भुक्तिमुक्तिफलप्रदः॥ ३२ ॥

वर्ततेऽस्य यथा स्वेच्चा तदेव तु शुभं व्रतम् ।

भाषते यद्यथा किञ्चित् कश्चित तदेव फलदं ततः॥ ३३ ॥

आराध्यो देवदेवानांविद्येशो वै स योगिनाम् ।

मन्त्रपीठपतिर्ह्यस्मात् तेनाराध्यः प्रकीर्तितः॥ ३४ ॥

मन्त्रपीठं विजानाति नाराध्योन्मीलनं क्वचित् ।

आचार्यः स विधौ ज्ञेयः पूर्वलक्षणलक्षितः॥ ३५ ॥

विद्यापीठेऽधिकारस्य नाद्योऽनुग्रहकृन्मतः ।

आचार्यः संहितार्थज्ञः आचारपथसूचकः॥ ३६ ॥

आराध्यवत् स्वतन्त्रस्तु व्रतचर्यां न कारयेत् ।

मन्त्रपीठं न जानाति सदा विद्याव्रतस्थितः॥ ३७ ॥

विद्यापीठाधिकारी च स आराधक उच्यते ।शतधा भेदमायाति ज्ञ

ानचर्याव्रतक्रमात्॥ ३८ ॥

चुम्वकस्तालकश्चैव चर्याशी च तृतीयकः ।

चरुश्च त्रिविधो यस्मिन् सिद्धः साध्यो गुणात्मकः॥ ३९ ॥

सिद्धो जात्यात्मकः प्रोक्तः साध्यो व साध्या यः स्त्रसितोन्नतिः ।

गुणात्मकस्तु विज्ञेयो योगजः सुमहौषधैः ॥ ४० ॥

आराध्यो यः गुरुः प्रोक्तो सर्वशास्त्रार्थभासकः ।

आराधकस्य ते ख्याताः किन्तु स्वातन्त्र्यवर्जितः ॥ ४१ ॥

दीक्षां  व्याख्यां न कुर्वीत प्रतिष्ठां नैव कारयेत् ।

मन्त्रपीठविधानेन विद्यापीठाधिकारकृत् ॥ ४२ ॥

चुम्बकास्तस्य संहाभ्या भेदश्चान्योऽपि विद्यते ।

साध्यमन्त्ररतो वाग्मी व्रतचर्यासमन्वितः ॥ ४३ ॥

क्षेत्रात् क्षेत्रान्तरं गच्चेन्न च यागान्तरं क्वचित् ।

मन्त्रमुक्तिप्रदाता च सुसहायोऽपि योगवान् ॥ ४४ ॥

तथैकादशसंस्थानसंप्रदायोपदेशकः ।

समिश्रश्चुम्बकः प्रोक्तस्तन्त्रेऽस्मिन् रावणार्चिते ॥ ४५ ॥

सर्वशास्त्राणि जानाति गुरोर्मन्त्रपरिग्रहात्

व्रतचर्याभ्यनुज्ञाता आराध्येन महात्मना ॥ ४६ ॥

ततः प्रभृति क्षेत्रस्थो जितद्वन्द्वो जितेन्द्रियः ।

कश्चिद्देशं परिगृह्य शिवलिङ्गविवर्जितं ॥ ४७ ॥

भिक्षाप्राप्तामिषाहारो जपध्यानार्चने रतः ।

बालकःतालकः स तु विज्ञेयः साध्यसाधकतत्परः ॥ ४८ ॥

संहितां नैव जानाति शास्त्रैकादशवस्तुवित् ।

आराध्यात् स्वाप्तविद्यस्तु सकृत्संस्कारसंस्कृतः ॥ ४९ ॥

एकस्मिन् संस्थिते मार्गे ह्येकाद्वैतसमाश्रितः ।

रक्षाकल्पितदेहस्तु चरुभुक् काश्यपो भ्रमेत् ॥ ५० ॥

शृणुयान्नान्यशास्त्राणि न स्रोतांसि रसक्रियाम् ।

चर्यामार्गेण भुञ्जानश्चरुं ध्यात्वा सकृत् सकृत् ॥ ५१ ॥

पात्रस्थं व पात्रस्लं विद्यया लब्धं न तद् भुङ्क्तेऽन्यथा क्वचित् ।

सर्वाशी ह्येव सर्वाशी योगिमातृगणार्चितः ॥ ५२ ॥

चरुभोक्ता क्वचित् तन्त्रे चुम्बकश्चानुदाहृतः ।

दीक्षितोऽत्रानुगोलाशी चरुभुक् परिकीर्तितः ॥ ५३ ॥

त्रिविधोऽपि महादेवि साधकः परिकीर्त्तितः ।

एतेभ्योऽन्यो व्रती नास्ति यः पीठस्थो निगद्यते ॥ ५४ ॥

अथातः संप्रवक्ष्यामि शिष्याणां लक्षणं परम् ।

येन विज्ञातमात्रेण अधिकारः प्रवर्तते ॥ ५५ ॥

गुरुयोग्ये गुरावुच्चैर्योऽधिकारः शिवात्मकः ।

प्रागृतुः परमेशेन गुरुविग्रहरूपिणा ॥ ५६ ॥

आराध्योऽपि तदन्यस्मिन् प्रदद्यात् संस्कृतात्मने ।

संस्कारोऽपि भवेत् तस्य यो न ध्यातः शिवेच्चया ॥ ५७ ॥

अनुध्यानांशकालस्य कर्मभोक्तुरिहेष्पते ।जन्मन्यपश्चिमे प्राप्ते समे कर्मी

ण योगतः ॥ ५८ ॥

निमित्तमिदमापेक्ष्य शिवज्ञानं प्रवर्तते ।येनोन्मीलितसद्भावः परं

निर्वेदमृच्छति ॥ ५९॥

कस्त्राता कुत्र वा यामि कस्याहं का मयि स्थितिः।

किं वा चास्याः करिष्यामि कस्मादेतच्चराचरम्॥ ६० ॥

उल्लंघ्य केन वा यास्ये को वा तादृक् कथं हि सः।

समानुग्रहभावेन भवते न भविष्यति॥ ६१ ॥

नरो विकल्पसङ्कल्पैर्नानाभावविचेष्टितैः।

एवं शक्तिसमावेशाद् ग्रहग्रस्त इवोद्यते ॥ ६२ ॥

ततोऽन्यासां बलं हत्वा यश्चान्यप्रतिबन्धकम्।

नयत्याराध्यविषयं यं दृष्ट्वा विगतक्लमः॥ ६३ ॥

भावयेन्मुक्तमात्मानं नान्योऽनुग्रहकृद् भवेत्।

पुनरालब्धदेहानां ध्वस्तसंहारशालिनाम्॥ ६४ ॥

विनयेनोपपन्नानां भुक्तिर्मुक्तिर्नदूरतः ।

आराध्यस्यापथावेशः परमेशोऽभिजायते ॥ ६५॥

संसारकीटमेत्तत्तु तु परशक्तिप्रबोधितम्।

अनुगृह्णाति संक्षेपात् परस्परविधानतः॥ ६६ ॥

करणानीतमेथैव जृम्भतेऽनुग्रहं प्रति।

एतद्यस्य भवेच्चिह्नमनुग्राह्यः स सर्वदा॥ ६७ ॥

तस्य संस्कारयोग्यत्वं नान्यस्यान्यायदर्शनात्।

देवदानवगन्धर्वान् पिशाचोरगकिन्नरान्॥ ६८ ॥

ब्राह्मणक्षत्रियवैश्यशूद्राणाञ्चैव सुन्दरि ।
संकीर्णजात्यसंकीर्णं योषितो वा नपुंसकम् ॥ ६९ ॥
भोगभुग् जाग्रतं वृद्धं वालवालिशतस्करम् ।
प्रवासिनं विपन्नं च स्तंभं पशुगञ्च यत् ॥ ७० ॥
दीक्षयेद् भक्तिभावं तं तीव्रशक्तिप्रचोदितम् ।
तथा तीव्रतरापात्रमन्दमन्दतराख्यया ॥ ७१ ॥
अनुध्यानेन ये निम्ना चतुर्धा शक्तिचोदिता ।
पृथग्भेदेन संस्कारास्तेषां कुर्याद् गुरूत्तमः ॥ ७२ ॥
अथ प्रलपितेन किं भूयसा यद्यपश्चिमम् ।
शक्त्याघ्रातो भवेद् युक्तः सोऽप्यनुग्रहभाङ् मतः ॥ ७३ ॥
तीव्रशक्तिपदाविष्टं चुम्बकत्वे नियोजयेत् ।
तीव्रतीव्रतराविष्ट आराध्यत्वेव सुन्दरि ॥ ७४ ॥
मन्देनाराधकत्वेन त्रिविधं यन्मयोदितम् ।
मन्दमन्दतराविष्टःसमयी स भविष्यति ॥ ७५ ॥
समयादिवसंस्कारैरूर्ध्वोर्ध्वगमनुक्रमात् ।
अधिकारोऽप्यथैव स्यान्न तु व्युत्क्रमलम्भनात् ॥ ७६ ॥
भावैरेतैः परीक्ष्यादौ ततो दीक्षां समारभेत् ।
शिष्ये विनयसंपन्ने दम्भमायाविवर्जिते ॥ ७७ ॥
जितद्वन्द्वे जितक्रोधे जितशोके ह्यलोलुपे ।

रागद्वेषविनिर्मुक्ते प्रारब्धस्यान्तगामिने ॥ ७८ ॥

सुप्रतिष्ठितकाये च सत्यवाञ्चांतचेतसि ।

सुहृत्सद्भावशीले च भवमूलपराङ्मुखे ॥ ७९ ॥

स्वधर्मवत्पनूचाने देवाग्नि गुरुपूजके

गुरुवाक्यानुगामी च गुरोः शुश्रूषणे रतः ॥ ८० ॥

गुरुं संस्मरते नित्यं सदैव हि मुखारणिम् ।

गुरोर्दासत्वमापन्नो वाङ्मनःकायकर्मभिः ॥ ८१ ॥

विज्ञानमथ संपत्तिं प्राणानेकं त्रिकं सदा

गुर्वर्थं धारयेद् यस्तु स संस्कारारुहो भवेत् ॥ ८२ ॥

मन्त्रसिद्ध्यारूढः सो हि निर्वाणाय च सुन्दरि ।

ज्ञानविज्ञानसंपन्नः सर्वावस्थोऽपि मन्त्रवित् ॥ ८३ ॥

अनुग्राह्यो जडस्यानुमन्त्रसिद्धिकरः स्मृतः ।

न दुष्टोऽधमः शिष्यः प्रागुक्तगुणवर्जितः ॥ ८४ ॥

मायाविनयसंपन्नः प्रत्यक्षस्तुतिकारकः ।चुम्बको तत्वनुग्राह्यो यदि

वागीश्वरो भवेत् ॥ ८५ ॥

निन्दते यो गुरुं माञ्च शिवमग्निं महामखम् ।स याति नरकं घोरं सर्वस

ंस्कारवर्जितः ॥ ८६ ॥

न मन्त्रास्तस्य तिष्ठन्ति पूजादानतपःक्रिया ।

निर्दहेत गुरुः सर्वं यदि शिष्यो करिष्यति ॥ ८७ ॥

नास्ति रक्षा सुरेशानि गुरुमन्त्राग्निनिंदके ।

अफलस्येव वृक्षस्य पुष्पकन्दं वृथा भवेत् ॥ ८८ ॥

तस्मात् सर्वप्रयत्नेन त्रिषु भावः समाश्रितः ।

नयत्यूर्ध्वमसंदेहो यत् तत् पदमनिन्दितम् ॥ ८९ ॥

यदेतद्भैरवं देवं यत् सदेवो भवोद्भवम् ।

व्योमव्यापी परः शान्तः आराध्यः स तु दैशिकः ॥ ९० ॥

त्रयीव विघ्नहा व विघ्नहा योगी तेजोनिधिवपुर्मतः ।

स सर्वार्थपवित्रस्तु द्विविधोऽप्यत्र शासने ॥ ९१ ॥

येन येन तु संस्पृश्य स्पृशेद् यद् यद् यदाश्रितम् ।

चक्षुषा पश्यते यच्च यस्मिन् वा तिष्ठते क्षणम् व ॥ ९२ ॥

शिवतत्वानुभावेन दीक्षितं तद् भवेत् प्रिये ।

कर्मास्याक्षिप्तं तुष्टं शिष्टमारोपितं यतः ॥ ९३ ॥

दीक्षितः प्रोच्यते देवि संपर्काद् दैशिकस्य तु ।

भूतं भव्यं भविष्यञ्च कुलानां तारयेच्चतम् ॥ ९४ ॥

एकाह्वं तिष्ठते यत्र तत्तीर्थं तत् तपोवनम् ।

तेनाघ्रातं पदालीढं स्पृष्टमालोकितं च यत् ॥ ९५ ॥

सोमद्रव्यं भवेत् तद्धि चरुप्रोडात् शतां व्रजेत् ।

आराध्याः ये क्रमाचार्यास्तत्प्रसादेन सिद्धयः ॥ ९६ ॥

सर्वाः एव समाप्यन्ते राजन्नन्यत् परित्यज ।

उदितमनंतशास्त्रजलधेर्विकृष्य शतोरुशिशुलक्षणं ॥ ९७ ॥

स्फुटतरं स्फुरितवन्तु बहिः ।

यदुपनियोगयायि शिवसात्म्यविधावतुलं तदखिलमद्रिपुत्रि

कथयाम्यधुनापि तव ॥ ९८ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां चतुर्दशः पटलः ॥ १४ ॥

पञ्चदशः पटलः ॥

श्रीभैरव उवाच ।

अथातो वच्मि संक्षेपात् क्रमात् स्नानकदंबकम् ।

वृत्तमेतत् परिच्चन्नं समन्ताच्चतुरङ्गुलम् ॥ १ ॥

अपनीयास्त्रमन्त्रेण खात्वा मृद् गाहयेत् सुधीः ।

धौते रोधसि संस्थाप्य धारारोधसि विस्तरे ॥ २ ॥

स्त्रगक्षतकुशांश्चैव हृदायुधगुणेन वा ।

समुच्चार्या त्रिशक्तिश्च दृशातान्यवलोकयेत् ॥ ३ ॥

ततस्तु दृष्टिरूपिण्या महापीयुषमुद्रया ।

प्रप्लाव्यायुधजप्तानां पिङ्गलेनावगुण्ठयेत् ॥ ४ ॥

स्वभावपरितोषान्तं कृतशौचोभयः सुधीः ।

मृद्वर्धेनास्त्रजप्तेन कृत्वा स्नानं मलापहम् ॥ ५ ॥

स्वाचान्तस्तु कृतन्यासो विधिनाम्ना समारभेत् ।

तदर्धं वामहस्तेन त्रिविभक्तं करे परे ॥ ६ ॥

प्रागग्रप्रमाणस्थं विद्याङ्गगुणघातकैः ।

समालभ्यास्त्रजप्तेन प्रक्षिपेत दिशो दश: ॥ ७ ॥

आच्चादनं प्रकुर्वीत भागेन ज्वलनर्चिषा ।

अङ्गामङ्गाभिजप्तेन समन्तादवगुण्ठ्य तत् ॥ ८ ॥

विद्याजप्तेन कल्पादौ तीर्थं तीर्थवरोत्तमम् ।

निमज्जयेत् ततस्तस्मित् स्वेच्चयाराधकेश्वरः ॥ ९ ॥

आमोदामलकाद्यैस्तु हरिद्रापिष्टकेन वा ।

धराश्रयोपचारेण लिङ्गहीनं क्रियाश्रितम् ॥ १० ॥

जपेद् विद्येश्वरीविद्यां स्नानं कृत्वा श्रियावहम् ।

विच्चे ये ततो मूर्ध्नि स्वच्चवारिभृतं सुधीः ॥ ११ ॥

स व्योमपाणिरचनासुवद्धांशु घटक्रियाम् ।

विद्याभुवौ षद्धचाराद् वपुः संप्लाव्य सर्वतः ॥ १२ ॥

ततोम्बुतः समुत्तीर्य कौपीनमथवान्वरम् ।

संयम्य पाणिपादौ च मृदद्भिः क्षालयेत् ततः ॥ १३ ॥

उत्थितश्चोपविष्टो वा मूलवद्धं विकर्षयेत् ।

विद्याद्यं कुशमन्त्रेण विद्यातीर्थं ततः परम् ॥ १४ ॥

द्विराचम्य ततस्तस्मिन् मालया तद् वदाथवा ।

करावायुधसंशुद्धौ विधायामृतसंप्लुतौ ॥ १५ ॥

तत्तले विन्यसेन्मालां तदङ्गानि ततः क्रमात् ।

यवीयस्यां गुहां न्यस्य जीवांतां विमलादिकाम् ॥ १६ ॥

स परारोपिते मूर्ध्नि योगिनाम्नि हरादिके ।

क्रूरान्ता चूलिकादिर्या भवाद्यन्तरयोरपि ॥ १७ ॥

बोधनानां वपुः श्यालं तारादिश्च तदन्तयोः ।

आवर्मान्ता च तृक् स्थाप्या घोषाद्याङ्गुष्ठमूलयोः ॥ १८

खचरमस्त्रमुग्रादिमुदगादिंच पूजयेत् ।

ज्ञानं संचादितं कृत्वा तदूर्ध्वे करसंपुटम् ॥ १९ ॥

ततो ज्ञानात्मके  काये हृत्मस्तकशिखातनौ ।

दृक्पाण्योश्च यथान्यायं विभागान्मदिरादयः ॥ २० ॥

न्यस्तव्या शास्त्रपर्यन्ता स्वच्चस्थानावभासकः ः ।

बीजसंवीजितेऽङ्गानि  विद्याङ्गवदुपाचरेत्  ॥ २१ ॥

वपुष्पास्त्रसमायोगः ककुब्जाले सिते सति ।

भस्मं कुर्यान्मलस्नानं स मुहुस्तापसो यदि ॥ २२ ॥

नासावतकमेष्टं वा धरणीजमथापि वा ।

क्षेत्रजं वा विरक्तानां शस्तं भस्म तपस्विनाम् ॥ २३ ॥

तदालभ्य तमालेन खड्गाग्निकनकत्विषा ।

तेन मूर्ध्नास्य हृद्गुह्यपादान्तं गुण्ठयेत् क्रमात् ॥ २४ ॥

ततः क्रमहृदोद्धूल्य विद्यया सेकमाचरेत् ।

भस्मनैव विधानेन प्रागुद्दिष्टेन सुन्दरि ॥ २५ ॥

कौपीनमपनीयान्यत् परिधार्य च निर्मलम् ।

निर्णीर्जित करांघ्रिस्तु फेनोष्कत्वविवर्जिते ॥ २६ ॥

वार्भिराचम्य यत्नेन पूर्ववन्मरुराष्ट्रजः ।

कृतपाणितनुन्यासिस्ततः सन्ध्यामुपासयेत् ॥ २७ ॥

विद्याविद्याङ्गविक्षिप्तैर्वामहस्तच्युताम्बुभिः ।

परिमृज्य स्वशिरसि पाणिना दक्षिणेन तु ॥ २८ ॥

तत्पश्चात् पूर्वसञ्चारमपसव्येन पाणिना ।

वारिं उत्सृज्य मेधावी वारिणा पूरिताञ्जलिः ॥ २९ ॥

कुर्याद् रवेरूपस्थानं अञ्जल्यो भुवि मोचनात् ।

कृताघमर्षणक्षेप उपस्थाने कृते सति व सभि ॥ ३० ॥

भास्वन्मन्ण्डलमध्यस्थं मन्त्रचक्राभिनात्मवान् ।

जपेद् विद्येश्वरीं देवीमेकोच्चारादघापहाम् ॥ ३१ ॥

शतं शतार्धधर्मं वा रूपमेकमथापि वा ।

दशैकरूपकं वाथ जप्त्वा गायत्रसङ्गते ॥ ३२ ॥

कृतप्रदक्षिणो भक्त्या स्वभिवन्द्य मुहुर्मुहुः ।

कृत्वा भास्वत्स्थितं स्वच्चं तर्पयेन् मन्त्रसंहिताम् ॥ ३३ ॥

मूलमन्त्रांस्ततो देवान् तापसा क्रमशः पितृन् ।

सुमनोऽक्षततिलद्रव्यैः कुशहस्तौ हृदम्बुनाम् ॥ ३४ ॥

नमः स्वाहास्वधान्तेन मन्त्री व्यञ्जलिना सदा ।

प्रागुदग्दक्षिणस्यान्तु ऋजुसव्यापसव्यतः ॥ ३५ ॥

शाखाप्राङ्गुष्ठतर्जन्यो ततः सव्यापसव्ययोः ।

त्रिभिस्तीर्थैरिमैमन्त्रैः पाणिस्थैः संप्रतर्पयेत् ॥ ३६ ॥

गणा मातृगणा याश्च योगिनीरुद्रपन्नगान् ।

रक्षोभूतगणा होतास्तर्प्य कर्म हृदा बुधः ॥ ३७ ॥

पूर्ववद्धि समाचम्य कृतमन्त्रतनुर्मुहुः ।

मन्त्री तीर्थोपसंहारं प्रकुर्यात् पूरकेण तु ॥ ३८ ॥

प्राणायामादिना वाथ विशुद्धभक्तपुद्गलः ।

वपुरुत्सृज्य मेधावी प्राक्तनं शास्वरम् ॥ ३९ ॥

विधाय चित्तशक्त्या तु देवाधा चुप्लवप्लुतम् ।

विभाव्य दृग् दृशान्युच्चैर्मन्त्रस्नानमुपाचरेत् ॥ ४० ॥

बहिर्द्रव्यवपुर्गन्धशुच्यशुचिविकल्पतः ।

भावेनाद्वयकृद् गम्यं तावत् स्तनितमुच्यते ॥ ४१ ॥

भस्ममायोमयादुच्चैर्गुरुर्गौरतरं ततः ।

तस्मादुपेयमीशानि भावस्नानं प्रशंसितम् ॥ ४२ ॥

निर्विकल्पमहाबुद्ध्या द्वैतकायमहैनसः ।

निर्लेपास्तरवो यद्वन्मणयोमृतवान् द्विजाः ॥ ४३ ॥

लोकभोगाविरक्तानां लोकसम्भृतौ ।

स्नाने द्वे विकरे प्रोक्ते स्थाणूनां जलभस्मनी ॥ ४४ ॥

स्नानाच्च मनः शौचानि दिवाकृत्तर्पणानि च ।

मयोक्तो व्यवहारोयं तन्त्रसंरक्षणं प्रति ॥ ४५ ॥

अन्यथा विप्लुताचारैस्ततोभिस्तत्र  लाघवम् ।

स्याद्धितल्लाघवाच्चापि तदुक्तां लघुतां व्रजेत् ॥ ४६ ॥

तस्य लाघवकर्तृणां यत्फलं स्यान्नगात्मजे ।

तत्वमेव हि कल्याणि स्वहृदा संविवेचय ॥ ४७  ॥

एवमेकतमेनायं स्नानस्नानेन चुम्बकः ।

हंति संयमिताशेषककुप्पंजरमध्यगः  ॥ ४८ ॥

सङ्गच्च विमलां देवीं स्मरन् मनसि निर्मले ।

सप्ततन्तुमहाज्वालाद्वारोद्देशे ततः प्रभो  ॥ ४९ ॥

निर्णीह्य स्वकरौ देवि प्राग्वदाचमने कृते ।

व्योमेवतारकाभिस्तु दीप्ताभिर्मन्त्रमूर्त्तिभिः ॥ ५० ॥

शरीरं लाञ्छयित्वा तु पिङ्गलास्त्रावगुण्ठिते ।

धाम्नि तच्चाखयोः पूज्यौ पालौ कङ्कमहारवौ ॥ ५१ ॥

इज्यश्चोदुम्बरे कूर्मो ललाटे भुजगाधिपः ।

हस्तपादतलास्फालं प्रविशेत् सममुत्सृजम् ॥ ५२ ॥

पूजायां कर्म हृन्न्यस्त क्प्रवेशस्तं नृपात्मज ।

मन्त्रकर्महृदो योगो दृश्यतेऽसौ स्वगोत्रवित्  ॥ ५३ ॥

नभोजित् खड्गदण्डं वा तत्पदं स्यात् क्रियावहम् ।

प्रविश्येज्यागृहांतस्थं वीक्ष्य विज्ञानचक्षुषा ॥ ५४ ॥

पुनर्यदुत्तरेणैव प्रवेशो वामशासने ।वामपाणिप्रमोक्षश्च स्त्रजानाराचमुद्रया

॥ ५५ ॥

भुवोऽन्तरिक्षविघ्नानां शस्त्रहुङ्कारयोगतः ।

प्रध्वंसयोगयुग्मेन ककुभां शमने पुनः ॥ ५६ ॥

शंसितं चुम्बकेन्द्राणां क्रियाक्रमविधायिनाम्

अत-आत्मभुवो याम्ये रुचिरासनसंस्थितः ॥ ५७

कृत्वा चित् सन्निवेशन्तु महावपुषि निश्चलम् ।

उपचारहृदं भोजैर्निविष्टः करपङ्कजे ॥ ५८ ॥

मन्त्रवृन्दं निवेश्यादौ प्राणायामं समाचरेत् ।

दृष्ट्वोपदेशतो देवि मलव्योमसमानगः ॥ ५९ ॥

वितर्प्य विमलां मूर्त्तिं दद्यान्न च विपर्ययैः ।अन्धतामिस्त्रकाद्यैश्च

नमोन्तैः प्रणवादिकैः ॥ ६० ॥

ऊर्ध्वे प्राग्दक्षिणे वामे प्रत्यक्षं क्रमशः प्रिये ।

आवाहयेत् ततो मालां तदङ्गे लाञ्छिते सति व सनि ॥ ६१ ॥

कन्दर्पमार्गसंसर्गाच्चिच्चैतन्यकृतास्पदः ।

हृत्सखं पूज्य संपूर्णं शान्तद्रव्यैर्मनोरमैः ॥ ६२ ॥

निबद्धककुभश्चान्ते स्थण्डिले मण्डलेऽथवा ।

कालसङ्कर्षणीदेवीं देवीमण्डलवेष्टिताम् ॥ ६३ ॥

उपहारैर्मनोहृद्यैः पूजयेत् सुप्रसन्नधीः ।

सर्वाणुभिः क्रियापात्रं कृत्वा वा जीवपात्रकैः ॥ ६४ ॥

दिगङ्गगोपितं कृत्वा दृष्ट्या चापादिनामृतम् ।

तदायोभिः समभ्युक्ष्य द्रविणस्थानमादरात् ॥ ६५ ॥

कृत्वा भूषां परां प्रोक्तां वपुषः स्वस्य शोभिताम् ।

मातरि स्वनि संपूज्य प्रणवेन विविग्रहम् ॥ ६६ ॥

शिपिविष्टे गुरुं वीरस्तेनैव परमौजसा ।शार्वं वीर्यमनन्तं तु महतोऽष्टौ

गुणास्ततः ॥ ६७ ॥

अधोर्ध्वे चेदने तस्मात् क्रमादेव सितासिते ।

ततः कोकनदं शुभ्रं पद्मकिञ्जल्कशोभितम् ॥ ६८ ॥

बीजानि शक्तिवृन्दञ्चमाः सूर्याग्निधिस्ततः ।

एतत् शक्त्यासनं प्रोक्तं तदूर्ध्वे प्रेतमाददेत् ॥ ६९ ॥

अथवानन्तसत्रोर्द्ध्वं विमलाम्भोरुहस्य वा ।

अनन्ताद्यब्जचरममनन्तासनमुच्यते ॥ ७० ॥

गात्रकर्त्रेऽपि देवेशि नान्याख्यास्य विधीयते ।

शक्तिकन्दोऽथवालम्बकण्टकाः पत्रसन्धयः ॥ ७१ ॥

पत्राण्यग्राणि किञ्जल्ककर्णिकापुष्कराणि च ।

पद्मासनमिदं प्रोक्तं विभुं वामादिकं प्रिये ॥ ७२ ॥

त्रिमण्डलवसानन्तु प्राश्यते विमलासनम् ।

एवमेकतमे धाम्नि प्रेतोर्ध्वे मूर्त्तिविद्यया ॥ ७३ ॥

मूर्त्तिं दत्वा मुखैः क्रामनं शिरांसि परिकल्पयेत् ।

शिखाललाटभ्रूचक्षुश्रुतिगण्डमुखेषु च ॥ ७४ ॥

ग्रीवोरोशेषहृन्नाभिस्थानेष्वेतेषु विन्यसेत् ।

विमलादिविसर्गान्तैः सानुभिर्देवताक्रमात् ॥ ७५ ॥

पादयोर्गुल्फयोश्चैव जङ्घाजानू रुषस्फिजौ ।

दूत्यः पादादिका देयाः पवनाद्या महेश्वरि ॥ ७६ ॥

शिखादिनाभिपर्यन्तं व्यापिन्यादिगणक्रमः ।

कर्तव्यं किङ्कराणाञ्च पादशाखाकृतास्पदः ॥ ७७ ॥

तदन्तरेषु तन्वङ्गि तथा चानुचरात्मकः ।

तलापृष्ठे तु दातव्या वामपादादिका गणाः ॥ ७८ ॥

अनूद्ध्यन्यग्रतो देव्या नितम्बे वाममार्गगाः ।

ततो मालाधरे काये दत्वाङ्गानि यथा पुरा ॥ ७९ ॥

कूटमावाहयेन्मन्त्री स्थापयेत् सन्निरोधकृत् ।

आवाहनसमुच्चाराद्भूयोवर्चात्र स्थापनम् ॥ ८० ॥

कठिनक्रियानिरोधः क्रियाकाले प्रशस्यते ।

स्वक्रियारचनाटोपात् सान्निध्यं च सुराम्बिके ॥ ८१ ॥

स्वाहास्वधानमोऽन्ते च पाद्याचमनमर्घणम् ।

सामान्येन हृदा शस्तं सर्वस्मिन् मंत्रमण्डले ॥ ८२ ॥

स्त्रगलङ्कारवासांसि धूपस्नानानुलेपनम् ।

सर्वोपचारसंभारं कार्यं कर्म हृदा सदा ॥ ८३ ॥

ततस्तु देवता देया भोगस्थाने विपश्चिता ।

व्यापिनी सुसुधा सौधा सुसूक्ष्मा सूक्ष्मरूपिणी ॥ ८४ ॥

वीरा जगाविनी नन्दा सुसुम्णा मन्दिरोदया ।

गान्धारी भैरवी देवी --------का प्रिये ॥ ८५ ॥

मन्त्रद्वादशकोपेते सिताब्जकरशालिनी ।

शस्त्राष्टककरा देव्यः पतिरूपवपुर्वहा ॥ ८६ ॥

मुण्डखट्वाङ्गशूलञ्च परिघं पाशमंकुशम् ।

महारावोऽथ घण्टा च सर्वासां चायुधानि च ॥ ८७ ॥

चतुर्दोष्णश्चतुर्वक्त्राः पीनोन्नतपयोधराः ।

पाशाङ्कुशधरा दूत्यो मुण्डखट्वाङ्गहस्तिकाः ॥ ८८ ॥

स्वस्वामिनि समाशेषनेपथ्यरचनाचिताम् ।

स्वदेवतादलाग्रेषु सर्वाश्चापि कृतास्पदा ॥ ८९ ॥

पवनव्योमवेगा च शशिरेखा मदनातुरा ।मन्मथा च मनोहारी विपुला विपुलेश्वरी ॥ ९० ॥

चित्रलेखा च चित्राङ्गी चित्रग्रीवा विलासिनी ।

एता दूत्यः समाख्याता आशामं ता ते प्रतिष्ठिताः ॥ ९१ ॥

आसां स्वरूपधारिण्यो ह्यनुदूत्यो महाबलाः ।
द्वित्रिशस्त्रयानन्तनताभ्यां एतदेव विशिष्यते ॥ ९२ ॥
वीरा विप्रा जयन्ती व कौमुदी मदिरावती ।
केकरा तन्तुवा लीला मालती विनयावती ॥ ९३ ॥
कोलाहला कराला च नामभिस्ताः प्रकाशिता ।
स्वस्वामिनि प्रसादेन्दुविकासितभृगूत्पला ॥ ९४ ॥
रमन्तीशवपुश्चन्द्रच्चाया शुभ्रमहास्पदे ।
अतोऽन्ते कोकरं वृन्दं राश्यवस्थानसंस्थया ॥ ९५ ॥
करालवदनां घोरं केकरारक्तलोचनम् ।
भृङ्गालीवलया भासमुल्लसद् स दुर्धरीधरम् ॥ ९६ ॥
कर्कशं भग्ननासञ्च सर्पालङ्कारमण्डितम् ।
यावत् तत्स्पर्शविस्तारसम्पूर्णमुखमण्डलम् ॥ ९७ ॥
रक्तासितैकवासो वा पाशाङ्कुशाङ्कुशकरं न्यसेत् ।
मरुत्पति समारभ्य अपनीयातपस्थितम् ॥ ९८ ॥
हालाहलोऽभ्रमातङ्गः करालो वडवामुखः ।
पिङ्गलः पिङ्गकेशश्च वल्कलः केकरेक्षणः ॥ ९९ ॥
हालाहलो बिडालश्च हिडिम्बो विकृताननः ।
द्वादशैते महावीर्याः किङ्कराः परिकीर्त्तिताः ॥ १०० ॥
एतद्रूपधरा घोराः किन्तु कुब्जा नरा इव ।

महानासा विशालाक्षा लम्बोच्चालं वकुक्षयः ॥ १०१ ॥

न्यस्तव्या बाह्यतो देवि कपालकनकोद्यताः ।

धूर्नासस्त्रिशिराः कङ्को लंबोष्ठो  गुदलोचनः ॥ १०२ ॥

उरोमुखोऽहृजिह्वें गुदवक्रोऽलकाननः ।

नवशीर्षस्त्रिशीर्षश्च त्रिपाणिर्द्वादशो मतः ॥ १०३ ॥

तदन्ते तु गणाः पूज्या गजवक्त्रा महाबलाः ।

कुठारालकराः कृष्णास्त्वंगाकुम्भास्त्रिस्त्रिचक्षुषः ॥ १०४ ॥

लम्बोदरो दुराधर्षो महाकालो महोदरः ।

चक्रश्चण्डैकदन्तश्च महाकायदुरोदरौ  ॥ १०५ ॥

एते चाष्टौ गणाः प्रोक्ता विन्यसेद् रोधवर्त्मना ।

मरुत्मतो हरान्तन्तु प्रणवादिनमस्कृताः ॥ १०६ ॥

तदन्ते पूजयेद् राजन् लोकपालान् स्वदिग्गतां  ।

कौशिकं स्त्रक्कलंकालं पलाशं मकरध्वजम् ॥ १०७ ॥

धीरं गदाधरं वीरं मुञ्जकेशं पितामहम् ।मतङ्गहुडशृङ्गेषु

खरयानप्रतिष्ठितान् ॥ १०८ ॥

मकारेण नवानद्धगरुत्मद् धृतराष्ट्रगान्  ।

हेमेन्द्रभोगमधुपपारावतहिमात्मकान् ॥ १०९ ॥

जम्बालमौक्तिकाम्भोजनीलोत्पलशवात्विषः  ।

लोकपालाः क्रमादेते स्वास्त्रयुक्ताः क्रियावहाः  ॥ ११० ॥

तदस्त्रावरणो न्यासः कर्तव्यस्तद्विरागमः ।

दुरापं शक्तिदण्डञ्च कृपाणसुरगायुधम् ॥ १११ ॥

वैजयन्तीं शत्रिहणं व ख चद्रूघणं त्रिशूलमणिमम्बुजम् ।

बालभास्वन्मयूखाभं संस्मरेद् हेतिमण्डलम् ॥ ११२ ॥

स्वचित्स्वरूपगं भीमं ं विघ्नमेघप्रभञ्जनम् ।

हरो हरान्तिकं न्यस्य गन्धैः पुष्पैः प्रपूजयेत् ॥ ११३ ॥

सनातनादि सर्वेषां धूपं दग्ध्वा पुनः पुनः ।

हेमादि जाज्वलं मन्त्री दीपैरुद्बोध्य सर्पिषा ॥ ११४ ॥

हविष्यैरहविष्यैश्च नैवेद्यैरच्युतादिकम् ।

समन्त्रैः प्रोक्षयेत् क्रामन् प्रीयेचन्द्रमण्डलम् ॥ ११५ ॥

मुद्रासंदर्शनादेतच्चिराचमनकर्मणि ।

निर्णीति दन्त ताम्बूलः सप्रणामो बहिर्गणम् ॥ ११६ ॥

क्षेत्राणां पूर्वतः पूज्यं नीलग्रीवावसानकम् ।

कोलाहलं करालञ्च यमदण्डं महाभिषम् ॥ ११७ ॥

क्रव्यादं चण्डवेतालं भीमभैरवमेव च ।

मन्थरं तुरगेशञ्च श्मशान दशकं प्रिये ॥ ११८ ॥

क्षेत्रपालैः समोपेतं घोराकारं सुदारुणम् ।

रक्षोभूतगणाकीर्णं योगिनीगणसङ्कुलम् ॥ ११९ ॥

नामानि यानि क्षेत्राणां तानि पुंपाठयोगतः ।

संज्ञाविधायकानि स्युः फलानां स्वच्चगोचरे ॥ १२० ॥

जलप्लवानुमानेन स्वस्वविषयगेन  तु ।

क्षेत्रपालानुमीयन्ते तन्त्रेस्मिन् रावणार्चिते ॥ १२१ ॥

दम्पत्यानि तदन्ते तु दिक्पालानां प्रपूजयेत् ।

एभ्यश्चैव वलिर्देयः स्थानं स्याच्चैकदेशतः  ॥ १२२ ॥

बलिमाहारमेतेषां सदैव पितृकर्मणि ।

तस्करादिषु  निर्विघ्नः सुसुखं तत्र तिष्ठति ॥ १२३ ॥

महाजङ्घो विकारी च धूम्रजीह्वो महोदरः ।

प्राच्यं सर्वं प्रतीच्यञ्च तथोदीच्यं क्रमा स्थिताः ॥ १२४ ॥

पिङ्गगुह्या महावक्त्रा गुदवक्त्रा च पूतना ।

वह्निस्त्रयम्बवकान्तन्तु तेषां भार्याःप्रपूजयेत् ॥ १२५ ॥

तत्वमूलविसर्गान्तैर्नामभिः क्षेत्रपालकाः ।

बलिमन्त्रावसानस्तु गणशः स्तोत्रशासने ॥ १२६ ॥

शिवाज्ञातो नमस्कारो द्वन्द्वरूपामिमां प्रिये ।

जपोपचारे मन्त्राणां मध्यच्चिन्नं प्रयोजयेत् ॥ १२७

अष्टावरणिकं ह्येतच्चिवद्रव्यैः शिवात्मनः ।

यष्टव्यं साधकेन्द्रेण गृहे तु गृहिणा सदा ॥ १२८ ॥

वृतभीमव्रतैर्धीरैर्वीरद्रव्यैः सपुष्कलैः ।

सुसहायेन गिर्यग्रे श्मशानेऽथ चतुष्पथे ॥ १२९ ॥

एकलिङ्गैकवृक्षे वा जने धाम्नि सुरालये

यष्टव्यो भैरवो योगो भैरवाचारवर्तिना ॥ १३० ॥

गर्भाद्धरणिकंपान्ते मयैकावरणक्रमात् ।

मालामण्डलमेतद्धि फलमेकाकृतिं भजेत् ॥ १३१ ॥

अथोक्तक्रमयोगेन स्यादेतन्मंत्रमण्डलम् ।

यामलं यमलान्यासाल्लयभोगेषु सुन्दरि ॥ १३२ ॥

शिवादिपदमाला च मालाङ्गप्रविजृम्भिता ।

त्रिरूपस्यापि मन्तृत्वे नवकास्य क्रियावहा ॥ १३३ ॥

वाचो ये केचिदाप्तेऽस्मिन् रूपिणो धनसंस्थिताः ।

एकाद्यनन्तपर्यन्ताः साधका जातिलालसाः ॥ १३४ ॥

मालामूलप्रयोगेन जातिर्भिर्वाङ्गकल्पिताः ।

स्वकाण्डदाप्रयत्नेन तत् स्याद्भक्त विधानतः ॥ १३५ ॥

अथ किंवहुनोक्तेन ध्रुवाक्षरमनिर्मितम् ।

स्वचित्तरुचिते वाक्ये वाचकत्वे निरोधकम् ॥ १३६ ॥

वक्रादिकल्पना येयमुक्तासीत्तत्र निश्चयः ।

न कर्त्तव्यो हृदाह्लादो यदि न स्यात् स्वचेतसे ॥ मुद्रावर्णकरूपाणां

भावानां चानुसंततौ ।

नैकरूपो हि नियमो यतस्ते विश्वरूपिणः ॥ १३८ ॥

स्फटिकोपमसंस्थानां सर्व एते शिवाणवः ।

यदुपाधिवशं प्राप्तास्तद्रागाच्चतुरो मताः ॥ १३९ ॥

एवमेकतमे यष्टे ज्ञप्ते चैवमिवोदिते ।

प्रागुक्ताग्निगृहे कार्यमग्निकार्यं विपश्चिताः ॥ १४० ॥

तत्वधवलारुणां वा विचित्रैर्वर्णकैर्नवैः ।

योगीपुत्रपुटव्याप्तं सितसूत्रां सितामिव ॥ १४१ ॥

हेतिशुद्धं हृदा शोध्य पयःसत्कुशयोगतः ।

तदन्तर्विष्टरं दत्वा कृत्वा दिक्षु चतुष्पथम् ॥ १४२ ॥

तेजोनिधिं समानीय धातुजैर्मृन्मयेन वा ।

पात्रेणानुपयुक्तेन ताड्याघ्र्याध्वास्त्रियोगतः ॥ १४३ ॥

हेत्यङ्गपाशितं कृत्वा प्रक्षिपेन्मूलविद्यया ।

पुञ्जिते ज्वलिते मूर्त्या ज्वालया सन्निधीकृते ॥ १४४ ॥

हृदाहुतित्रयं कृत्वा मालापूर्णप्रपातनात् ।

लोके शास्त्रगतः पूज्यो मूलमेखलमूर्ध्वगः ॥ १४५ ॥

अर्घ्यशक्तिक्रियाहृष्टवह्निसंहारमुद्रया ।

हृदा पूरकयोगेन स्ववक्त्राभ्यसनक्रमम् ॥ १४६ ॥

मृतकं तं विहत्याशु मूर्तिरूपं विभावसुम् ।

दत्वा पूर्वक्रियाः कार्याः समला धरणान्तिकाः ॥ १४७ ॥

प्रागानीतस्य वह्नेर्वा क्रम एषः प्रशस्यते ।

किमत्राहुतिदानेन कर्मविस्तरकारणात् ॥ १४८ ॥

सहस्रं तद्दशं वाथ शतमर्धमथापि  वा ।

ध्रुवात्रपाश्रितेभ्यश्च शतभागे हुते सति ॥ १४९ ॥

वौषडन्ताम्बिका योगपूर्णा पातक्रियावहा ।तिलामृतादिभिर्देवि होमद्रव्यैः

सुगन्धिभिः ॥ १५० ॥

ततो विसर्जयेन्मालां स्थानद्वयनिवासिनीम् ।

सत्वधृत्तिसमायुक्तासूपचारं  हृदा प्रिये ॥ १५१ ॥

निर्माल्यापनयं कृत्वा दत्वाङ्गावर्तिकात्रयम् ।

तत्र यद्दानदुष्टन्तु तत्सर्वं प्रक्षिपेदम्भसि  ॥ १५२ ॥

नो वा विसर्जिते वह्नौ शेषगर्भा प्रशस्यते ।

एषोक्तिर्यत् व ख एवोक्तिर्य क्रियामार्गात्कृताप्तज्येष्ठसन्ततिः ॥ १५३ ॥

शस्त्रदेवेन किं योगं समाप्नोत्यभिवाञ्छितम् ।

सकलहविविधिर्न वेत्ति सम्यङ्विविधविधिं ं शिवाप्तदृष्टाम् ॥ १५४ ॥

जगति गुणकृते करोति योऽर्चां ।

कथमबुधमतिः सुखं स लेभे ॥ १५५ ॥

इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले  महातन्त्रे

चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां पञ्चदशः  पटलः ॥

१५ ॥

षोडशः पटलः ॥

जयद्रथ उवाच ।

वनानि यानि हृद्यानि तेजसः स्वानि शङ्करः ।

ब्रूहि मेधंकररक्ताम्बुधौताननं शिखायुध ॥ १ ॥

श्रीभैरव उवाच ।

तिलाः सर्वार्थकृत्प्रोक्ता यवाः पुण्यप्रसाधकाः ।श्यामाका कंगु

णीवारास्तयोर्लक्ष्मीप्रदायकाः ॥ २ ॥

श्यालयोरन्यजावाप्तिरन्योन्यैश्वर्यदानि तु ।

तेजःसौभाग्यभोग्यानि सिद्धार्थलवणानि च ॥ ३ ॥

हविष्यान्नवसौ बलें स्याद्हविष्याच्च संपदः ।

अमृतामृततां याति क्षीराद् दीप्तवपुर्भवेत् ॥ ४ ॥

दध्न पुष्टिमवाप्नोति भवेत्शांतिस्त्रियोगतः ।

मधुसर्पिर्वृद्धिकृत् स्यात् त्रिस्वादाद् गजवर्धनम् ॥ ५ ॥

त्यक्ताश्चापि गवां वृद्धिः शोकश्चोपशमं ब्रजेत् ।

श्रेयोवृद्धिकरो होमः कुंडादौ तु प्रजायते ॥ ६ ॥

राज्यं कोकनदेभ्यश्च बिल्वेभ्यो ज्ञानमैश्वरम् ।

कान्तिः स्याद् बीजपूरेभ्यो नारङ्गेभ्यो रतेन्दिरा ॥ ७ ॥कर्कन्धुचरजं वीर

फलेभ्योऽरिविनाशकृत् ।न्यग्रोधोदुम्बरो चन्द्रः पिप्पली

पापिनोद्भवः ॥८ ॥फलेभ्यो यौवनस्थैर्यं कुर्याद्धोमाच्चिरेण तु ।समिधः

खादिरा ज्ञेयाः काश्मर्योऽर्थप्रसाधने ॥ ९ ॥

आयुषो वृद्धस्य शस्ताःपलाशाश्चान्धसम्भवाः ।क्षीरिणो वाथ

समिधस्ताः सर्वसुखकारिकाः ॥ १० ॥

अपामार्गोद्भवाः शौर्ये बिल्वजाश्च रसायने ।सौभाग्ये शोकजापुष्टौ

मालतिलोचनोद्भवाः ॥ ११ ॥

कान्ताचम्पकपुन्नागनागकेसरसम्भवाः ।
साप्तपर्ण्यश्च दिव्यस्त्रीसाधनाय प्रशंसिताः ॥ १२ ॥
जंधां प्रवेतसानाञ्च जलपातकरा मताः ।
महोग्रा मोदिनो वृक्षा स्वादहीनाश्च कर्मणि ॥ १३ ॥
प्रशस्तेन प्रशंसन्ति सूरयोऽग्निक्रियाविदः ।
स्वादितेऽपि न दुष्यंति क्षीरिणो येऽर्कवृक्षकम् ॥ १४ ॥
मनःस्त्रग्व्योमसंपर्काद्भविः कामफलावहः ।
जलस्थलरुहानां वा सर्वेषां हि सुगन्धिनाम् ॥ १५ ॥व्याकोशानां
महाराज्यं कन्यावाप्तिञ्च साधयेत् ।
मृगाननातिलानान्तु सस्यानां प्रसृतिर्मता ॥ १६ ॥
तिलवल्लवणं कर्म सिद्धार्थञ्च हितावहम् ।

हविष्यान्यप्यखण्डानि ग्रासगानीतराणि च ॥ १७ ॥

स्रुवस्रुक्पुष्करस्थापि जुहुयाद् यत्र बन्धनम् ।

सुमनोऽनुजानि सर्वाणि सुमनांसि च सैन्धव ॥ १८ ॥

जुहुयाद्रूपसंस्थानि जल स्थल रुहाणि च ।

कीटकेशदलाम्नालिदूषितानि विवर्जयेत् ॥ १९ ॥

गृह्णीयाच्चाप्यदुष्टानि प्रत्यग्रान्यक्षमाणि च ।

नीचमध्यममुख्यानां सिद्धीनां साधनाय तु ॥ २० ॥

दशद्वादशदष्टाख्यैरङ्गुलैः समिधः शुभाः ।

सर्वमुक्तविपर्यस्तं साधयेदाभिचारिकम् ॥ २१ ॥

नेपथ्याभावजातीनां क्रूरारंभनियोगतः ।

दशपञ्चतद्युग्मैर्वा कुतपैर्विष्टरा मताः ॥ २२ ॥

इध्मानि पक्षशब्दानां अङ्गुलैः सुखदानि तु ।

परिव्यादोर्लतामानाः प्रणीता द्वादशांगुलाः ॥ २३ ॥

प्रशस्ताः देशिकेन्द्राणामग्निकर्मणि कीर्तिता ।

सप्तत्रिंशाङ्गुले क्षेत्रे धूर्यष्टाङ्गुलिविस्तरे ॥ २४ ॥

जीवरेखासमोपेते चतुष्कोणस्वरूपिणी ।

तुर्य विंशाङ्गुलं दण्डमवच्चिद्य ततो ग्रहः ॥ २५ ॥

तिर्यग्रेखा तस्तु कर्तव्यो ह्यष्टपञ्चगः ।

एवं वेदीद्वयं कृत्वा पूर्ववेद्यन्तरंगुलम् ॥ २६ ॥

दिक्षु सर्वासु संत्यज्य वृत्तं भ्राम्यं षडङ्गुलम् ।

वेदी वृत्तान्तरे कार्या रचना जम्बुकादिकाः ॥ २७ ॥

तदग्रं प्रविभज्यादौ युग्मवेदीमुखं ततः ।

सूत्रमास्फालयेत् पश्चाज्जीवमास्यांककर्णयोः ॥ २८ ॥

जीवसूत्रान्तरे सूत्रे मूले वेद्यांकसङ्गमात् ।

आस्फाल्य करयोर्मध्ये पुनरन्यं तथैव च ॥ २९ ॥

समुल्लेख्यं ततोऽधस्तात् कर्णयोरङ्गुलद्वयम् ।

वेदीमूले च दण्डोर्ध्वं समुल्लेखाद् गलाकृतिम् ॥ ३० ॥

निर्वर्त्य तदधोल्लेखाद् दण्डबाह्ये तु तेन वै ।

कुम्भाकृतिकृते काये दण्डमूले ततः पुनः ॥ ३१ ॥

बहिर्दण्डदलोख्याश्चं दण्डार्द्धंघण्टिका  भवेत् ।

तन्मध्ये स्फोटकः कार्यो दण्डाधोऽर्धेन मानवः ॥ ३२ ॥

कर्तव्यो दण्डविस्तारः क्षेत्रषोडशभाजिते ।

मध्यस्थभागषट्केन समन्तात् समविस्तरे ॥ ३३ ॥

एषा स्रुची समाख्याता त्र्यङ्गुलोत्खातगर्त्तिका  ।

षडङ्गुलपरीणाहा सर्पिषः पलतूलभृत् ॥ ३४ ॥

खदिराशोकपुन्नागवैकंकतसमुद्भवा ।

श्रीपर्णीशुक्तमन्दारदेवदारुभवाथवा ॥ ३५ ॥

श्रीखण्डशिंशपानन्दीस्पंदचन्दनचूतजा  ।

भ्रमियन्त्रकृता रम्या शिल्पिना तु क्रियावता ॥ ३६ ॥

निर्मिता कस्य नो लक्ष्मीः स्रुक् प्रसाधयतेऽमला ।

सल्लक्षणः प्रकर्तव्यः शुभोऽप्युक्तद्रुमोद्भवः ॥ ३७ ॥

त्रिरङ्गुलमितं सूत्रं रुद्रभागविभाजितम् ।

शतभागे चतुष्कोणं कृत्वा पूर्वविधानतः ॥ ३८ ॥

तुर्यांशं तदधो भाज्यं मध्यभागद्वयेन तु ।

दण्डविस्तरिता कार्या स्रुग्वत् कण्ठविवर्तनम् ॥ ३९ ॥

खट्वाधो दण्डखण्डेन घण्टिकायाः सुविस्तरः ।

विस्तारस्य चतुर्थांशबहिमानाश्च दीर्घता ॥ ४० ॥

वृत्तकुण्डविभागेन भ्रमात् पुष्करसाधनम् ।

सनासं पुष्करं कार्यं षट्कगोष्पदरूपधृक् ॥ ४१ ॥

मनाचिखा ललाटे स्याद् घण्टिकापि यथास्रुचम् स्रुचः ।

ज्येष्ठपंक्तिसमागर्ता सापि षट्करिषालया ॥ ४२ ॥

स्रुव एष समाख्यातः कल्याणमणिवारिधिः ।

नित्यनैमित्तिके काम्ये होमकर्मणि कीर्त्तितः ॥ ४३ ॥

यदर्थमग्निकार्यन्तु क्रियते साधकेश्वरैः ।तद्वामलक्षणो हन्ति

स्रुक्स्रुवोर्बन्धने बहिः ॥ ४४ ॥

बहिरङ्गा निकायस्य ज्ञातः सल्लक्षणो गिरिः ।

जातिदानविवेक्ता च कामार्थान्ताश्श्रुतेनृप ॥ ४५ ॥

त्रिकर्मणि सदा शस्ता जयापाणेर्नमस्कृतिः ।

स्वाहा चैवाग्निकार्यार्थे वषडाप्यायने हितः ॥ ४६ ॥

सत्पुष्टौ क्षुट्तृषोर्हानौ जपे होमे च सैन्धव ।

पूर्णाहुतिसमे ग्लाना वन्याब्धेऽपि चान्तकः ॥ ४७ ॥

वौषड् साधनमायाति शुभे स्वाहा नमोऽथवा ।

समर्थागतसंज्ञा तु मन्त्रकोटिप्रतिष्ठिता ॥ ४८ ॥

भीस्त्रासकृत्प्रकोपाख्यफडंते मारणात्मके ।

जीवसर्गे फलं विद्धि गोदानफलकारकः ॥ ४९ ॥

स्तम्भे जम्भे वधे बन्धे ह्रीं शस्तो वश्यकर्षकृत् ।

वशतुल्याधमा प्रोक्ता सर्वार्थावस्त्र कामदा ॥ ५० ॥

यो गन्तव्याभिधातारी व गन्तव्यभि लोलास्तु प्रददाहदा ।

शेफौ मृते मयाधारे षष्ठोदस्थोऽथमूककृत् ॥ ५१ ॥

किन्तु शक्रसमाकर्षे नामनास्ति निवारणे ।

गो गो गृह्यकरी नित्यं देदेवैटनशीलिनी ॥ ५२ ॥

ने ने नेत्री तथा हे हे तिरस्कर्त्री प्रकीर्तिताः ।

ले ले संग्रहणे शस्तो चे चे चाहरणेऽपि च ॥ ५३ ॥

चे चे संचेदने शस्तो भे भे रोदनपुक्करे ।

हा हा विषादकर्तृत्वे खखागैखादनेऽपि च ॥ ५४ ॥

रे रे शत्रुबलध्वंसे हे हे श्रवणकर्मभिः ।

बिडालवासिने मे मे घे घे त्वंते च धावने ॥ ५५ ॥

जा जा निवारणै- ला ला लालापनयकर्मणि ।

फे फे यनन्तौ क्रूराणां पिशाचग्रहराक्षसाम् ॥ ५६ ॥

ससंबलच्चिदो हानौक्षं क्षोभं शस्यते ।

आदिमध्यान्तयोगत्वात् साध्यमन्त्रस्य मानव ॥ ५७ ॥

शब्दादर्थक्रियाभावकारिण्योऽनेकजातयः ।

सन्ति तन्त्रे तु भूयस्या मायास्तोकाः प्रकीर्तिताः ॥ ५८ ॥

पदजातिविभागोत्थः क्रूरसौम्यक्रियावहः ।

स चोच्चारविभेदेन बहुभेदः प्रतिष्ठितः ॥ ५९ ॥

ज्ञातव्यः साधकेन्द्रेण कर्मकालविदा सदा ।

आश्चर्य द्रव्यनिष्पत्तिर्मध्यमोत्तमकन्यसे ॥ ६० ॥

सौम्यमेतत् तथा क्रूरं विद्वेषोच्चाटमारणम् ।

स्तंभनं मोहनं चैव मुद्रणं बंधभेदनम् ॥ ६१ ॥

प्रजावर्षंतदाकर्षःशान्तिपुष्टिसुखक्षता ।

चेदनं पाटनं ग्रस्तं नानारुग्दानमेव च ॥ ६२ ॥

एवमाद्यमनिंद्यन्तु कर्म प्रोक्तमनन्तकम् ।

सायं प्रभाते मध्याह्ने क्रूरं मिश्रं शुभं च यत् ॥ ६३ ॥

काले तत्साधितं सर्वं समासन्नफलावहम् ।

वासनामन्त्रकल्पाग्निः सर्वाचर्याविभिन्नता ॥ ६४ ॥

बलापादितयोग्यत्वात् साधनेभ्यः फलप्रदा ।

उक्तमेतदसन्तानमनन्तकविभेदगम् ॥ ६५ ॥

कर्मजातिगुणाकालसंयुतं हविगात्रकम् ।

श्रूयतां च महाकर्णपवनौ गुणसञ्जितौ ॥ ६६ ॥ दैशिकेन्द्ररणे वृन्दजिता

नृपतिसत्क्रिया ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यामंग्न्यन्त निगमः

षोडशः पटलः ॥ १६ ॥

सप्तदशः पटलः ॥

श्रीभैरव उवाच ।

अथ ग्रहभयोगानां समायोगाच्चुभेऽहनि ।

सर्वे वा स्वप्रदीप्ते त्रिदोषयुक्तेऽपि शस्यते ॥ १ ॥

नित्ये नैमित्तिके वाथ संक्रान्तिग्रहणादिके ।

योगोऽनुग्रहकृत्स्नानां क्रियमाणो गुरूत्तमैः ॥ २ ॥

स्नानाद्यैः शुद्धकायैस्तु सर्वसंभारसंभृतम् ।

प्रविश्य प्राग्विधानेन मखालयमनातुरः ॥ ३ ॥

ध्यायमानोऽमलां देवीं तदस्त्रं चातिभीषणम् ।

पञ्चवक्त्रं महाकायं सर्पगोनासभूषणम् ॥ ४ ॥

महाञ्जनचयाभासि पक्वबिम्बरुगीक्षणम् ।

बर्बरेन्दुकलाकारदंष्ट्राटोपमयूखिनम् ॥ ५॥

कपालखट्वागधरं हलशूलगदाधरम्।

फलं प्रत्युपग्रात्युग्रव्याकुलं घोरदर्शनम्॥ ६॥

सितरक्तपीतकृष्णवह्निरुग्घृद्यादितः।

कपालशूलखट्वाङ्गहलहस्तं चतुर्मुखम्॥ ७॥

प्रत्याप्यं दृगुद्दिष्टं प्रसन्नं चाङ्गपञ्चकम्।

ध्यानकालेऽपि दातव्यं साधकैस्तत्वदर्शिभिः॥ ८॥

ततः पूर्वोदिते सर्वे स्वासनान्ते सति।

शस्त्रेण शोधयेत् पाणी प्लावयेदमृतत्विषा॥ ९॥

ततः परं तु मिथुने विन्यस्य तलपद्मगम्।

ततस्त्वगुष्ठकादीनि ब्रह्माङ्गानि तु पूर्ववत्॥ १०॥

विन्यस्य देवतान्यासं वामाङ्गुष्ठपुरःसरम् ।

सव्याज्येष्ठान्तिकं कृत्वा तलपृष्ठेऽवशिष्टकम् ॥ ११॥

वाम स्वस्वामिनीनान्तु दूतीन्यासः प्रकीर्तितः।

वामहस्तकनिष्ठाद्या प्रतिदूतिस्थितिः स्मृता॥ १२॥

फणिबन्धगतं युग्मं कर्तव्यमवशिष्टकम्।

वामप्रदेशप्रथमं सृष्टिन्यायेन पर्वसु॥ १३॥

किङ्कराणां स्मृतो न्यासः सव्ये भूचरवृन्दजः ।

शाखाविष्कम्भकस्थायि गणपीठं च मध्यतः॥ १४॥

शिखाङ्गाङ्गिकृते कार्याः प्राणायामाः सधारणाः ।

परे वपुषि सल्लीने सव्यात्मनि समानसे ॥ १५ ॥

चित्तेनापास्तविषयः सृजेन्मन्त्रमयीं तनुम् ।

कृतान्तकरणा प्राग्वद् दिग्वंधे तु कृते सति ॥ १६ ॥

वारामर्घनिधे दीप्तैर्बिन्दुभिर्द्रविणं स्पृशेत् ।

कृतशक्तिकरः कुर्यात् पात्रेष्टिमसमानिकाम् ॥ १७ ॥

अनुरञ्ज्य सुभोग्यैश्च कृतोष्णीशोपपट्टकः ।

योगपट्टकधृङ् मौनी विद्याङ्गार्चितमूर्तिमान् ॥ १८ ॥

वामशक्तिकरः कार्यो जानुकं जलजानि वा ।

मृत्पलाशानि वा कुर्यात् पात्राणि निजसम्भवान् ॥ १९ ॥

दर्भाम्बुमालया कृत्वा सर्पिदध्ने सकृत्पयः ।

सेकश्चापि गवामेतच्चस्यते संभवेऽखिलम् ॥ २० ॥

शैरिमन्तः क्रियाकारि ब्रह्मकूर्चं क्रियावताम् ।

हेतिपिङ्गलकृद्धूलीमूर्ध्वभिः क्रियते क्रमात् ॥ २१ ॥

पञ्चगव्यो घृताघ्योऽयं गवां मूत्रावसानकः ।

स्वच्चन्दे युमजेशान वामदेवैः क्रमेण वा ॥ २२ ॥

मालाशताद्दते क्षिप्त्वा कुसुमानि सितानि तु ।

दिगङ्गगोपितं कुर्यात् कूर्चपात्रद्वये बुधः ॥ २३ ॥

पवित्रं सर्वपूतेभ्यः शिष्येभ्यो द्रव्यशुद्धये ।

दृष्ट्वामृतप्लुतं स्थाप्य स्वस्थाने तत्पृथक् पृथक् ॥ २४ ॥

निशि ह्युग्रान्तके वाथ पूज्य वास्तु सुराधिपम् ।

उपचारहृदाकूर्चकृतभूमण्डलान्तरे ॥ २५ ॥

खड्गदर्भाभिघातेन लिखितो धूपपूरिते ।

प्राग्वत्ते पात्रतोयेन समीकृत्याभिकुट्टिनः ॥ २६ ॥

मार्जिते ह्युपलिप्ते च दुरालयकृतास्पदे ।

ध्रुवहृन्नामसृष्ट्यन्ते ध्रुवकेन मृगादिभिः ॥ २७ ॥

तत्र पूर्वाग्रदर्भोर्ध्वे वास्तुवीरं प्रपूजयेत् ।

यागान्तः प्रोक्षणं कृत्वा हृदाकूर्चकणोत्कटैः ॥ २८ ॥

अर्घ्यायोभिर्महास्त्रेण मुहुर्वह्निकणत्विषा ।

रजः करणिसूत्रं च तथा शंक्विब्दवान्तरी ॥ २९ ॥

खटिकादन्तकाष्ठानि हृत्प्रजप्तानि मुद्रया ।

पीयूषीकृत्य विकरानस्त्रमन्त्रेण मन्त्रयेत् ॥ ३० ॥

स्थगित्वा सितवासोभिर्मध्ये द्रव्यकदंबकम् ।

ब्रह्मकूर्चकृते वृत्ते हृच्च पारौ कुशान्विते ॥ ३१ ॥

शुभे मण्डलके पूज्यो देवीकुम्भो विपश्चिता ।

समुद्रेन्द्र सवित्र्याय मृण्मयो वासितोज्झितः ॥ ३२ ॥

खटिकापिष्टकाद्यैस्तु सुकर्कः कंठसूत्र धृक् ।

पुन्नागचंपकाशोकमालतीचूतपल्लवैः ॥ ३३ ॥

द्विजद्रुमभवैर्वाथ प्रच्छादितमुखोन्नतः ।

दत्तसर्वान्तिके   पीठे दृष्टाम्नायेन सुव्रतः ॥ ३४ ॥

घटोक्तधातुजामेव कर्करिं नरहन्तरि ।

हेतिरूपधरां पीठे ह्यावेशास्त्रेण पूजयेत् ॥ ३५ ॥

कृतसर्वोपचारार्थो ह्यभिमन्त्र्यशतेन तु ।

वासनाद्विकरो ध्यानी वृषोत्थाङ्कावसानकम्  ॥ ३६ ॥

भ्रामयेदस्त्रसन्तप्तं तेजः प्राकाररूपिणम् ।

पञ्चगव्ये तु तत्प्रोक्षं सुमनोऽभ्यर्चिते सति ॥ ३७ ॥

दृष्टक्रमेण भंक्तव्या भित्तिर्द्रव्यान्तरस्थिताः ।

सायुधा लोकराजानः      स्वमाश्रिताः ॥ ३८ ॥

स्वमुद्रादर्शनाह्लादाः प्रविजृंभितशक्तयः ।

स्वमन्त्रोच्चारसंयुक्तौ प्रभ्रान्तौ वर्धनीघटौ  ॥ ३९ ॥

मुहुः साधारगौ पूज्यो हृद्याभिनववाससा ।

प्रच्छाद्य भूरिगतौं तु विकिरां संहरेत्  ततः ॥ ४० ॥

शस्त्राभिमन्त्रितकुशैः प्रोक्तो रक्षोऽधिपादथ ।

कुम्भमूलं समाहृत्य स्थाप्य ब्रह्मणि मार्जिते ॥ ४१ ॥

कालसङ्कर्षणीमिष्ट्वा रुचिता वरणान्विताम् ।

शतं जप्त्वा नु संधानं वयीयोनवयीयसौ ॥ ४२ ॥

विधायानलसंस्थानमर्घपात्रकरो गतः ।

प्रागुक्तानान्तु कुण्डानां कृतमेकतमं गुरुः ॥ ४३ ॥

हास्तं नैमित्तिके लिप्तं पुष्पप्रकरशोभितम् ।

संप्रोक्ष्य ताडनं कुर्यादुल्लेख्यो धृतपूरणम् ॥ ४४ ॥

सेचनं कुट्टनं चैव मार्जनं ह्युपलेपनम् ।

वज्रीकृतं च शस्त्रेण कुर्यात् साधारणेन वा ॥ ४५ ॥

प्रोक्षणं खड्गतो येन सम्यगस्त्रेण वाडतम् ।

ज्येष्ठाङ्गुष्ठसमायोगात् कुशाग्रोल्लेखनं स्मृतम् ॥ ४६ ॥

सत्परायुक्तज्येष्ठाभ्यामुत्क्षेपोपशमनं भवेत् ।

पूरणं करयोगेन निषेकोऽम्बुकणोत्करैः ॥ ४७ ॥

दन्तमूलाग्रसंयोगात् कार्ये कुट्टनमार्जने ।

पाण्यवान्मुखसंयोगादुपलिप्ते सुरक्रिया ॥ ४८ ॥

चतसृभिः प्रकर्तव्या रेखाभिः कुण्डमध्यतः ।

आपोमूलेन्दुकुटयस्तिर्यक्कार्या कुशेन तु ॥ ४९ ॥

कालात् सोमान्तिकाच्चैव हृदा शस्त्रेण वा भवेत् ।

निवृत्त्याद्याः कला ह्यासामधिदैवक्रमेण तु ॥ ५० ॥

कुलिशं कल्पयित्वैवं भैरवानुभरक्षमम् ।

ततः पूर्वोत्तराग्रस्थै दर्भैर्मध्ये चतुष्पथम् ॥ ५१ ॥

कृत्वान्यैर्दिक्षु विन्यस्तैः कुर्याद् यवनिकां तथा ।

तद्वच्च मेखलासंस्थैः प्रागुक्तैरुदगग्रगैः ॥ ५२ ॥

हुतभुग्वेष्मनो दर्भैरक्षवाटं प्रकल्पयेत्।

कुण्डमध्ये द्विदर्भाग्रपवित्रकहृदासने॥ ५३॥

विन्यस्य तन्त्रगायत्रीं हृदयेनार्चयेत् ततः।

कीनाशविष्टरस्थायिसुरज्येष्ठप्रपूजिते ॥ ५४॥

साधारणपवित्राम्बुभृतां साक्षिस्वरूपिणीम्।

प्रणतामुत्तरे पार्श्वे मेधोधिस्थायिनीं यजेत्॥ ५५॥

ततस्तु दर्शितैकेन पात्रेणानीय पावकम्।

लौकिकं चैव गोघ्नानां गृहजे वा महामतिः॥ ५६॥

शिवास्त्वभ्युक्षितेनेह हेतिना स्रुक्स्वरूपिणा ।

विष्णुस्तमानन्ददं तममृतीकृतमावृतम्॥ ५७॥

पूजयेद् गन्धपुष्पैस्तु मालां मालाङ्गलांचिताम्।

वपुभिर्ब्रह्मभिर्वाथ ख वपुभिब्रह्ममिर्वाथ जुहुयादेकमाहुतिम्॥ ५८॥

नोवाहौ सस्यकर्तव्यं प्रक्षेपो मम शुक्रधैः।

भ्राम्य सव्यापसव्यन्तु तेजः शैवं विभाव्य तु॥ ५९॥

सुलीनः परमे काये मनसा येन सुन्दरि।

निक्षिपेद् योनिं योनौ तु सन्मुखं हृदयेन तु॥ ६०॥

ततः संपूज्य प्रज्वाल्य मुद्रां प्रदर्शयेत्।

वह्नेः प्रज्वालनं शस्तं तालवृन्ताद्युपस्करैः॥ ६१॥

गर्भाधानेऽथसीमन्ते जातकर्मणि संज्ञिते।

एकास्तिस्रोऽथवा पञ्च जुहुयादाहुतीर्हृदा ॥ ६२ ॥

तेनैवार्घं प्रदातव्यं पञ्चानां ब्रह्मपञ्चकम् ।

विद्याङ्गपञ्चकं वाथ क्रमाद् योज्यं हृदार्चने ॥ ६३ ॥

सीमन्तोन्नयनस्यान्ते वक्त्राणि परिकल्पयेत् ।

वक्त्रैरेव च सन्धानं निष्कृतं नेत्रकल्पनम् ॥ ६४ ॥

मध्यप्राग्याम्यसौम्याप्यवक्त्राण्यग्नेः प्रकल्पयेत् ।

ऊर्ध्वसव्येन चक्षुषः शस्यते स्थितिः ॥ ६५ ॥

जातस्य शिखिनः कार्या रक्षाकुशविवेष्टनात् ।

प्रागग्नेरुदग्नेश्च प्रत्यग्नेरप्यखण्डितैः ॥ ६६ ॥

दर्भैः संस्तरणं कुर्यात् कुण्डस्य परितः स्थितैः ।

कुशसंस्थापितो हूतकुशैश्च परिवेष्टितैः ॥ ६७ ॥

कुशापोविन्दुसंस्पृष्टैर्मन्त्रहीनोऽपि सिद्ध्यति ।

उदुम्बराञ्च ब्राह्मीं च परिदद्यात् सपल्लवाम् ॥ ६८ ॥

ततः पूर्वोत्तराग्राणि विष्टराणि समानि तु ।

ऋजूनिबाहुमात्राणि वैन्याकाराणि विन्यसेत् ॥ ६९ ॥

अन्तर्गमेखलापृष्ठे परिधीर्मेदिनीतले ।

पूर्वोत्तरदिगग्रस्था विष्कम्भा पविभाव्यसौ ॥ ७० ॥

ततो विष्टरपृष्ठस्थां हृदा देवीं प्रपूजयेत् ।

मेधः समेधसा बिन्दुराश्यवस्थानसंस्थितौ ॥ ७१ ॥

कालीन्दुकौ महाकालं व्यापीं चाभ्यर्चयेद्बुदा ।

बहिर्हिनि गणैः पूज्यः कर्कशाद् योऽतिकर्कशः ॥ ७२ ॥

व्याधामं शक्तिदण्डञ्च कृपाणसुरगध्वजः ।

कुब्जं वा लकुटीं शूलं रथाङ्गं सुसरोरुहम् ॥ ७३ ॥

ततः प्रोढयाद्य वक्त्राणि नेत्राणि च स्ववर्णभिः ।

लालापनोदनं कार्यं सर्वास्येंऽशुक्रमेण तु ॥ ७४ ॥

प्रादेशसम्मिते ध्याभिराज्योक्ताभिर्निजाननैः ।

ततो वक्त्राभिघारश्च स्वमन्त्रैराहुतित्रयात् ॥

ऊर्ध्वा ह्येकाहुतिर्देया नेत्रकर्मणि धीमता ।

सर्वास्येषु ततः पूर्णां नामकर्मावसानतः ॥ ७६ ॥

हुनेद् गम्भीरचैतन्यः समन्वागतवौषडम् ।

प्रदत्तार्घः क्रियाजालं दर्शयित्वा सितस्रजा ॥ ७७ ॥

अञ्जलिं प्रक्षिपेद् वह्निं सदामण्डलमध्यतः ।

संस्कारपूरणायै था पूर्णाय क्रियते क्रिया ॥ ७८ ॥

सा विशुद्धेन हविषा वक्त्रे वै मध्यमे स्मृताः ।

दिव्याग्निं भैरवाग्निं वा नात्येवंकल्पिते सति ॥ ७९ ॥

तस्योद्धारः प्रकर्तव्यश्चरसंश्रयणं प्रति ।

अथवा प्रागुपाख्याते वह्नौ सर्वविधिर्मतः ॥ ८० ॥

शताभिमन्त्रिते वाथ विद्याबीजां गमागतिम् ।

आनीतोऽभ्युक्षितो वाथ सकृज्जप्तोऽक्षमालया ॥ ८१ ॥

जयत्येकतमेधाम्नि ज्वलत् सर्वक्रियावह ः।

न च व्यासक्रियोक्तानि विष्टरादीनि योजयेत् ॥ ८२ ॥

रक्षात्रास्त्रमयी नोक्ता संक्षेपे विस्तरेऽपि हि ।

सर्पिषोऽधिस्मृतस्तस्माद्दुग्धस्योत्प्लवसंप्लवः ॥ ८३ ॥

अवद्योत्येक्षणं चैव नीराजमभिमन्त्रिणम् ।

सर्पिर्भोगाभिधारौ च दशैतान्याज्यशुद्धये ॥ ८४ ॥

शिखिनः सहाकलोपेता योऽधिःश्रयणं महत् ।

प्रदक्षिणविवर्ताश्च कुण्डनाभिप्रतिष्ठितम् ॥ ८५ ॥

तद् बद्धासनसंप्रोक्तं प्रादेशा वर्ष्मणापि च ।

बर्हिषां गुष्ठनामा च श्रितेनोभयहस्तयोः ॥ ८६ ॥

सव्यदक्षिणयोगेन मूलेऽग्नेः पात्रसर्पिषि ।

पराङ्मुखं त्रिधोत्पूयं हृदा वह्नौ विनिक्षिपेत् ॥ ८७ ॥

एतदुत्प्लवनं प्रोक्तं संप्लवः संमुखो भवेत् ।

हृज्जप्तक दृशा लोकादेव लोकनमिष्यते ॥ ८८ ॥

कुशकोटिं त्विषा दीप्य घृतमुद्योत्य तेन तु ।

तदवद्योतनं नाम नीराजनमथोच्यते ॥ ८९ ॥

हृत्प्रदोपकुशभ्रान्त्या तदाज्योपरि जायते ।

विमलाशताभिजापादभिमन्त्रणमिष्यते ॥ ९० ॥

पञ्चाशद्वादशार्द्धं वा सप्तजन्ममथापि वा ।

सर्पिर्भागतः कुर्यात् पात्रान्तं दर्भसंक्रमात् ॥ ९१ ॥

तत्वतन्नाडिविपुलं मध्यसव्यापसव्यतः ।

वस्वंशुमालिदेवान्तःकरणं संस्थितेष्वथ ॥ ९२ ॥

अग्नीषोमप्रयोगेन जुहुयादाहुतित्रयम् ।

सितासितविभागञ्च विज्ञात्वा पक्षयोर्द्वयोः ॥ ९३ ॥

सोमसूर्यप्रयोगोक्तेः पीठः कार्यो विपश्चिता ।

उभाभ्यां चैव संयोगाद्दक्षिणोत्तरमध्यतः ॥ ९४ ॥

स्रुवेनोक्ताहुतौ वह्नेर्नेत्रेषु जुहुयात् क्रमात् ।

स्वान्तमाहुतिमग्नौ तु तद् बिन्दुं हेतिमात्रतः ॥ ९५ ॥

अर्कापांशुवह्नीनां संपातादमृतीभवेत् ।

ततोऽमृतमयाज्यस्य प्रजप्तैर्विशदैः कणैः ॥ ९६ ॥

भाण्डस्थघृतनिक्षिप्तैः प्रोच्यते ह्यभिघारणम् ।

स्रुग्भाण्डमथ संगृह्य हृदाभ्युक्ष्य प्रजप्य च ॥ ९७ ॥

गन्धसत्कुसुमैर्नाज्यं सूपविष्टोत्थितोऽथवा ।

त्रिराविध्य प्रताप्यादौ ज्वालीयं भ्रामयेत् ततः ॥ ९८ ॥

कुशाग्रेण तु संस्पृश्य तदग्रं तापयेन्मुहुः ।

त्रिराविध्य च दर्भाणां मध्यं मध्येन संस्पृशेत् ॥ ९९ ॥

पुनः प्रताप्य संभ्राम्य कुशमूलेन संस्पृशेत् ।

मूलं सव्यगृहीतेन ह्रुडयेन शिवादिना ॥ १०० ॥

नमोऽन्तेन ततः साध्ये कुशप्रस्तरणोपरि ।

प्रोत्तानावाङ्मुखस्थौ तु स्रुक्स्रुवौ पूजयेदधृदा ॥ १०१ ॥

हविशुद्धेन हविषा घृतशूद्धे  विभावसौ ।

सर्पिःपूरःस्रुवं पूर्णां हुनेत् पूर्णमनोरथान् ॥ १०२ ॥

स्रुवामवाङ्मुखां स्थाप्य स्त्रगूर्ध्वसमवस्थितः ।

स्रुङ्मूलं नाभिदेशे तु स्थाप्य सव्यकराहृतम् ॥ १०३ ॥

कुम्भावांगितरं कृत्वा स्रुगग्रण्यास्त्रसंप्लुतः  ।

एकचित्तो ह्यसौं गूढतत्वध्यानसमायुतः  ॥ १०४ ॥

प्रणवादिवौषडन्तां पूर्णां दद्यात् सदा गुरुः ।

दीप्तपिङ्गलकृष्णार्चिर्ज्वालिन्यः किरणाभिधाः  ॥ १०५ ॥

सल्लेलिहान जिह्वास्तु भाभिरादीप्तमुज्ज्वलाः ।

वह्निसम्यगभिध्यात्वा सौम्यरूपं कुमारकम् ॥ १०६ ॥

ज्वालास्यं पिङ्गलं  नेत्रमुत्तानं पञ्चवक्त्रकम् ।

ततस्तु जुहुयात् पूर्णां सरवकर्मप्रपूरणीम् ॥ १०७ ॥

सागरीं तत्वकलनां  भास्वतश्चैव  भावतः ।

तेजोऽमृतसमापूर्णा निष्कम्पा तत्वतल्लया ॥ १०८ ॥

स्वान्ता चलाधरा वाथ या पूर्णा सा प्रपूरणी ।

कर्मणामितरां राजन्नग्निकर्मफलावहा  ॥ १०९ ॥

किङ्कणी कांसिका मुखपूर्णापाते महामतिः ।

सदसत्स्वरूपधातारीमग्निज्वालानुमानतः ॥ ११० ॥

लक्षयेत् साधनविधौ दीक्षाकाले तथैव च ।

वर्णगन्धस्वरावर्तभङ्गास्य रसना शिखा ॥ १११ ॥

वह्नेः संलक्षयेद्रूपचयच्चाया समन्वितम् ।

कुन्देन्दुस्फाटिकाब्जाभो मुक्ताफलसमर्पबह ॥ ११२ ॥

क्षीरोदफेनरुग्वह्निः शान्तिकर्मणि शस्यते ।

जपारोचकसच्चायः प्द्मरागसमप्रभः ॥ ११३ ॥

पाकादचलभिद्गोपनिभो वश्याहुतौ शुभः ।

मरुधनुराभासः कुनटीरोचनप्रभः ॥ ११४ ॥

निशाकुङ्कुमबालार्कस्वर्णाभश्चापि पुष्टये ।

इन्दीवरतमालालिकवलाञ्जनरुक् चविः ॥ ११५ ॥

काचनीलगलग्रीवानीलस्पन्दस्त्रगुज्ज्वलः ।

शीघ्रं साधनहुत्प्रोक्तं पिण्डं चत्वारिकर्मणा ॥ ११६ ॥

अपाण्डुधूमकृष्णाग्नि सितो रक्तस्तथासितः ।

नानावर्णधरो रूक्षः शस्तोऽनिष्टो न शोभनः ॥ ११७ ॥

सुगन्धद्रव्यसंपृक्तः सुरश्रीफलसर्पिषा ।

सुगन्धपुष्पजातीनां तुल्यगन्धः शुभोऽनलः ॥ ११८ ॥

वलाकाकटद्रव्याणां मूत्रोत्सर्गपरिमलः ।

विष्करादग्धपक्षाणां गन्धमुक्तोऽपि नेष्यते ॥ ११९ ॥

उदन्वन् वारिधिरववीपञ्चीमुरजध्वनिः ।

दुन्दुभीतरथध्वानः प्रशस्तः सर्वसिद्धये ॥ १२० ॥

चटश्चटमुहुःशब्दो विस्फुलिङ्गगणाकुलः ।

श्रुतेर्विरसघोषश्च प्रोक्तो हविरसिद्धिदः ॥ १२१ ॥

मुखात्प्रदक्षिणावर्त्तौ दीप्तिमान् सुमनोरमः ।

ज्वालाहीनोत्तरावर्त्तसस्फुलिंगश्च निर्मितः ॥ १२२ ॥

संहतोदयकल्लोला मलाभङ्गिशुभावहा ः ।

कुत्सितास्तरसाविष्टा बाह्याधः प्रविसर्पिणः ॥ १२३

पञ्चवक्रानलास्यानि पृथक्कर्मफलानि तु ।

मलभिर्वदनं शस्तमेनो दाम्नो विलुम्पयेत् ॥ १२४ ॥

जन्मजन्मनि संस्कारान् जननादीन् मुखान्तरे ।

कुर्यादशेषशुद्ध्यर्थं प्रायश्चित्तं च दक्षिणे ॥ १२५ ॥

मध्यास्ये पातयेत् पूर्णास्तथास्तुतिमलाहुतीः ।

मुखरूपमविज्ञाय जुहुयाद्यन्यतस्तु यः ॥ १२६ ॥

स विनश्यत्यकालेन दृष्टादृष्टफलच्युतः ।

मूर्ध्नि वै ध्वजसंपातो हृदये तु धनक्षयः ॥ १२७ ॥

पार्श्वयोर्वधुनाश स्यान्मूले चैव धनक्षयः ।

तस्मात् सर्वप्रयत्नेन संस्मृत्य मनसा मुखम् ॥ १२८ ॥

तत्रैव जुहुयात् पूर्णां प्रायश्चित्तकृताधनः ।

कौशिके श कला ह्युग्रतेजोन्तःसंप्रतिष्ठिताः ॥ १२९ ॥

तप्ताःसंलक्षयेज्जिह्वाः शुभाशुभफलप्रदाः ।

आर्कशुल्वाणि  राजाश्मशङ्खासृक्सर्ववर्णकम् ॥ १३० ॥

धर्मार्द्धे सेन्दुकालस्ते वृद्धिदस्तु हुताशनः ।

आसामधीश्वरा ः ह्येते क्रमशः संव्यवस्थिताः ॥ १३१ ॥

फलघ्नी धनदा शान्तिः सर्वगोत्रक्षयंकरी ।

कुलवृद्धिप्रदारोग्या सप्तमी सर्वकामदा ॥ १३२ ॥

ग्रहाधिष्ठानभूतेषु द्वे जिह्वे पूर्वपश्चिमे ।

धर्मराड्युतदैवत्ये सर्वतो   विघ्नकारके ॥ १३३ ॥

ता विहाय शुभास्त्वन्यास्ताभ्यः श्रेष्ठास्तु मध्यमाः ।

धर्मकामार्थसंपत्तिः  सिद्धिदा मोक्षदा मताः ॥ १३४ ॥

प्रोदग्रशिखराः स्निग्धाः संहता धूमवर्जिता ः ।

प्रदक्षिणोद् धूतभयाः  संहताश्चार्थसिद्धये ॥ १३५ ॥

संहतांतरच्छिद्रो वा व नास्ति वामावर्त्ता सरञ्जसा ।

धूमावर्त्ति विरालोग्रा चिन्ना भिन्ना ह्यसिद्धिदा ॥ १३६ ॥

शिखिनः शिखा प्रबोध्या वह्निकर्मणि साधकैः ।

वैजयन्त्यब्जचत्रा दृतोरणा रामरूपधृक् ॥ १३७ ॥

तार्क्ष्यहंसमयूरेभकुम्भानां च हितो नलः ।

निर्मितश्च शृगालार्क्षकरालो नगरूपधृक् ॥ १३८ ॥

शार्दूलमहिषोष्टाणां प्लवङ्गानां च सुव्रत ।

अतिपाकेतिवृद्धेन जुहुयात्  पावकेन चित् ॥ १३९ ॥

मध्यमे यौवनस्थे च होतव्यं निश्चितात्मना ।

मताः : प्रज्वलिता शाखा युवा सम्यक्सनिश्चितः ॥ १४० ॥

पञ्चाषीविषशान्तार्चिर्मध्यमोऽसौ  हुताशनः ।

भूयोऽङ्गारप्रसन्नार्चिर्निष्प्रभ भूरिभस्मधृत् ॥ १४१ ॥

अवपुर्धा न विध्वस्तः  पावकः स्मृतः ।

सम्पिण्डितघनार्चिष्मान् स्निग्धच्चायैकदेशतः ॥ १४२ ॥

भवेत् सोष्मप्रदस्तेजीविपर्यस्तो  विलोमदः ।

महद्धोमेन्धना गन्धो रूपत्वात्  तत्स्वधर्मतः  ॥ १४३ ॥

शब्दो मधुररुक्षो वा नासौ दोषकरः स्मृतः ।

यादृशं फलमागामि शुभं वा यदि वाशुभम् ॥ १४४ ॥

तादृशं दर्शयेद्वह्निरावर्त्तार्चिःशिखादिभिः  ।

आवर्ताः मूलभागे तु मध्यभङ्गा : प्रतिष्ठिताः ॥ १४५ ॥

वक्रजिह्वा शिखाश्चैव क्रमेणौर्वोग्रभागगाः  ।

वक्रद्वितीयगे भागे जिह्वा सा च शिखानले ॥ १४६ ॥

आननं हृदयं पादौ भागभावेन कल्पयेत् ।

वर्णावर्त्तशिखादीनां विपरीतप्रदर्शनात् ॥ १४७ ॥

पञ्चाहुतिप्रदानेन मालयास्यास्थभावहम् ।
कर्मिणा कर्मसंयोगो पञ्चवक्त्रानलस्थितिः ॥ १४८ ॥
पाल्योऽयं कुण्डवक्त्रो वा तेजोमूर्त्तिर्विभावसुः ।
चललोलस्वभावस्थो येभ्यस्तेभ्यश्च सर्वदः ॥ १४९ ॥
बिन्दुरूपो हविर्येषां शक्तिवक्त्रो विकल्पगः ।
कर्मणः साधनं तेषां भावः शान्तः प्रशान्तकः ॥ १५० ॥
विकल्पाभ्यर्थचित्तानां तथा वै निश्चितात्मनाम् ।
न फलायंति कर्माणि कुसुमानीव चक्षुषाम् ॥ १५१ ॥
क्वचिदेतैर्विनिर्मुक्तः सिक्तो जप्तस्तथैकदा ।
मन्त्ररूपधरो वह्निर्भवेदिच्चाफलप्रदः ॥ १५२ ॥
शिवशक्तिसमुच्चारात् तदन्ते स्थिरयोगतः ।
तत्तन्मयं भागचिराद् बहिः स्फटिकवद्भवेत् ॥ १५३ ॥
यतः सर्वामराधारो विश्वात्मा विश्वतोमुखः ।
ज्योतिषामपि तज्ज्योतिः परमात्मा स एव तु ॥ १५४ ॥
परोऽग्निर्योगजः प्रोक्तश्चन्द्राग्निर्देवतात्मकः ।
ब्रह्माङ्गानिर्जराग्निश्च ह्येक एव परोऽव्ययः ॥ १५५ ॥
यन्मन्त्रदेवतायुक्तस्तद्दैवत्यो भवेद् विभुः ।
ज्ञात्वा त्वेवं परिणतिं ततो होमं समारभेत् ॥ १५६ ॥
एवमेकतमस्थित्या निजत्वे भैरवानले ।

पूर्णापाते कृते योनिं तर्पयित्वा विसर्जयेत् ॥ १५७ ॥

योनिन्यासेन चान्यत्र बहुवह्निं विहाय तु ।

दैशिकेन विधातव्यो भैरवागमवेदिना ॥ १५८ ॥

रसवत्यां कृतां वह्निः प्रवृत्तं हरिवेश्मनि ।

सूत्रितायां सुलिप्तायां स्थण्डिलस्य मरुत्पतेः ॥ १५९ ॥

प्रत्यग्धर्माननायां वा तत् स्थालीं घटान्वयाम् ।

सूत्रितां शस्त्रतो येन क्षालितां कूर्मसाधिताम् ॥ १६० ॥

पूर्णान्तरस्थायिचक्रालातवत् प्रविलाञ्चिताम् ।

गर्भावघोतनां शुद्धां सर्पैर्दिग्धासु निर्व्रणाम् ॥ १६१ ॥

समाध्यापिते पयसि प्रक्षिपेत्तण्डुलास्तथा ।

चालनोद्घाटने कुर्याद्धृदयेन समाहितः ॥ १६२ ॥

त्रिभागास्थितमालोक्य घृतपूर्णस्त्रुवेण तु ।

उष्णाभिघारं जुहुयाद्धृद्ब्रह्माङ्गैरथार्चया ॥ १६३ ॥

सकुशे स्थंडिले स्थाप्य मार्जितामवतारिताम् ।

उष्णधारविधानेन शीतधारे कृते सति ॥ १६४ ॥

कुण्डोपमण्डले स्थाल्यां संपात्याहुतियोगतः ।

स्वाहाग्नौ च चरोऽनंतश्चरुपे यूथतां व्रजेत् ॥ १६५ ॥

पञ्चाहुतिगतिं युग्मं संपातः पञ्चविंशगः ।

द्रव्यचुम्वकचित्तानां वशाद्बहुलयोगतः ॥ १६६ ॥

कर्मणामाहुतिविधौ तन्त्रेऽस्मिन् रावणार्चिते ।

ततो मृतमयं ह्येतत्रिविभक्तं समाचरुम् ॥ १६७ ॥

एकैकं दीक्षमानस्य प्रसृतित्रयनिर्मितम् ।

दद्यान्नैवेद्यपूर्णन्तु त्रिचक्रस्यांशयुग्मके ॥ १६८ ॥

पशुस्तोमाय चान्यन्तु सर्वाभाग्यापनुत्तये ।

ततो विभिन्ने भिन्ने वा मन्त्राद्यभ्यर्चने कृते ॥ १६९ ॥

दृष्टाम्नायेन कर्तव्यं मन्त्रसन्तर्पणादिकम् ।

त्रितयं सन्धयित्वा तु नैवेद्योक्तकृतक्रियः ॥ १७० ॥

बलिं दत्वा च वीरेभ्यो योगिनीभ्यो हृदात्मना ।

मातृभ्यो भूतसत्वेभ्यः क्रूरेभ्यः क्षेत्रपाय च ॥ १७१ ॥

भवादिना त्वनुदिनं हृदा कर्मणि कारयेत् ।

एषां मन्त्रा : मया प्रोक्ताः कालसङ्कर्षणीमते ॥ १७२ ॥

एतत्सर्वगतं प्रोक्तं स्वगुरुः सम्यगुपोषितः ।

तान्त्रिकोऽप्यस्वतन्त्रस्तु तस्य स्वेच्चाविधिर्मतः ॥ १७३ ॥

शिवमन्त्रात्मचैतन्यस्फुटानुभववर्जिते ।

धनं क्रमक्रिया कालो यन्त्रणाभिहिता गुरौ ॥ १७४ ॥

ततः संप्रोक्षितं ताड्यस्त्रजासौदामिनीत्विषा ।

शिरस्यताड्य मेधावी विमलेनास्त्रभस्मना ॥ १७५ ॥

हृद्युल्लिख्य कुशाग्रेण संलिखेच्च ततोऽप्यधः ।

षडङ्गांगीकृतं पूज्य गन्धाद्यैः कर्मणामुना ॥ १७६ ॥

नादशक्तिसमाक्रान्तं नवधासौ हृतादृशम् ।

प्रविश्यान्तर्महादेव्या मूर्द्धिर्न पुष्पं क्षिपापयेत् ॥ १७७ ॥

वासोऽपनीय संदर्श्य नामयेत्रिष्वनुक्रमात् ।

चक्रदक्षिणदिग्भागे वर्तुले कुशमालिते ॥ १७८ ॥

न्यस्ता शेषासनायामैस्थाप्य मण्डलके शिशुम् ।

आयामादिशिवेशान्तं कर्मनिर्वर्त्य यत्नतः ॥ १७९ ॥

ततः शिरसि भोगोक्तिं यथादृष्टं समारभेत् ।

मुद्गरी जापयेत्तच्च यथापूर्वं तथा शिशुम् ॥ १८० ॥

एतत्कर्म नवाकर्म भैरवागमवेदिनाम् ।

यतोऽसौ समये जातः शिशुर्देवीप्रदर्शनात् ॥ १८१ ॥

ततोऽधिवासयेच्चिष्यं संपूर्णेन शतेन तु ।

आक्षान्तं शक्तिहस्तेन व्यासान्ते सपवित्रकम् ॥ १८२ ॥

ततो रुचितसंस्थानसंस्थितस्य गुरूत्तमः ।

पाशानां बन्धनं कुर्याच्चिशोर्दीक्षस्य यत्नतः ॥ १८३ ॥

सितसूत्रेण बध्नीयान्मासानग्रेरनूपगे ।

प्रागुत्तराननेवाथ शिष्याङ्कसकलीकृते ॥ १८४ ॥

हृद्गर्भव्याप्यबिंबस्थे प्राङ्मुखो वोदगाननः ।

शिष्यकर्मणि वीरेशःशस्यते ह्युभयात्मके ॥ १८५ ॥

ततः प्रलम्बयेत् सूत्रमुदस्तकरधारितम् ।

शिष्येनाङ्गुष्ठकाक्रान्तं सितमालम्भितं हृदा ॥ १८६ ॥

कूर्चभस्मसमालिप्तलाञ्चितं चायुधं नराः ।

मालासनाभिजप्ते तु तत्राध्वानं विभावयेत् ॥ १८७ ॥

षण्णामेकतमं देवि साधारणमथेतरम् ।

न चिता वंर्अणा न्यस्य समभ्यर्च्य सुगन्धिभिः ॥ १८८ ॥

जुहुयात् सन्निधानं तमेकैकस्मिञ्शतं शतम् ।

भवनापादनायोगाद्धृदा चैषां क्रिया मता ॥ १८९ ॥

ततस्तु ताडनादीनि कुर्यात् कर्माण्यनुक्रमात् ।

ताडनं चाथ विश्लेषमाकर्षग्रहणानि तु ॥ १९० ॥

द्योतनं वेष्टनं रोधं बन्धनं ह्येतदष्टकम् ।

तत्वादिकस्य क्रमशःआद्यं तस्य समाचरेत् ॥ १९१ ॥

ताडितं शस्त्रशक्त्या तु विश्लेषः क्षेपमुद्रया ।

प्राणपूरणसंयोगाद्धृदाकर्षणमिष्यते ॥ १९२ ॥

अदोग्रहणमिच्चन्ति सदा संहारमुद्रया ।

हृत्संपुटसमायोगाद्धव हुं फट् पुटीकृतम् ॥ १९३ ॥

योजनं रेचकायामक्रिययोद् भूतयायुतम् ।

हृत्समावेष्टनं कार्यं मालाद्येन निरोधनम् ॥ १९४ ॥

नयनाम्बुं संपुटस्थं ध्रुवमूलं फडन्तगम् ।

नत्वाघं बन्धयेन्मन्त्री पाशबन्धविधानवित् ॥ १९५ ॥

भुवनानि बध्नीयाच्चाद्ये तु भुवनाध्वनि ।

भौवने अध्वनि पुनस्तत्वानां बन्धनं मतम् ॥ १९६ ॥

संक्षेपादथवा कुर्यात् पाशानां कर्मपञ्चकम् ।

ताडनं ग्रहणं योगं बन्धनं दीपनं तथा ॥ १९७ ॥

एवमेकतमं बध्वा संहारक्रमयोगतः ।

सुलक्षाग्रंथकृत्कृत्वा मूलाग्रे च महामतः ॥ १९८ ॥

पाशसूत्रं शरावस्थमभ्यर्च्य हृदयेन तु ।

स्थण्डिलाद्दिशि पूर्वस्यां तद्गुप्तं विनिवेश्य तु ॥ १९९ ॥

ततः प्रदीपयेन्मासानेकैकाहुतियोगतः ।

हुं फट् पुटगतं तत्वं फडन्तं दीपनं मतम् ॥ २००

स्वाहान्तं ध्रुवमूलुच्य तर्पणे संप्रयोजयेत्

संपूर्णन्तु शतं हुत्वा प्रायश्चित्तविशुद्धये ॥ २०१ ॥

पञ्चगव्यमतो दद्याच्चिष्येभ्यः कायशुद्धये ।

ततश्च चरुभुक्तेभ्यः सवाचान्तेभ्योऽग्रणे ऋजु ॥ २०२ ॥

सत्वचं ग्रन्थिनिर्मुक्तमस्थूलमकृशं समम् ।

द्वादशाङ्गुलकं दद्यात् सक्षीरं दन्तधावनम् ॥ २०३ ॥

प्रशस्तं साधकाचार्यपुत्रकानामिदं सदा ।

समयिनाञ्चैव सर्वेषां दशाङ्गुलसमेन वा ॥ २०४ ॥

त्रिचतुर्धाङ्गुलं स्त्रीणां प्रशस्तं दन्तधावनम् ।
पञ्चगव्यं चरुं काष्ठं हृदयेनाभिमन्त्रितम् ॥ २०५ ॥
पूर्वामुखस्थितैः प्राथ्यं वाग्पतेर्दन्तधावनम् ।
भक्षितं क्षालितं भूमौ करवारितसन्मुखम् ॥ २०६ ॥
प्रमुक्तश्च पुनस्तस्य पातं संलक्षेयेद् बुधः ।
सौम्यवारुणपूर्वेण दिक्षुपातः शुभावहः ॥ २०७ ॥
अस्याः त्वरिष्टपातोग्रः शतहोमात् स शाम्यति ।
भृत्यार्घं विधिवद्दत्वा कृते वै नैष्ठिकेऽर्चने ॥ २०८ ॥
प्रणम्याष्टाङ्गविधिना स्तुतिं कृत्वा विसर्जयेत् ।
साधारणान्तरां देवीं स्थण्डिलस्थां महेश्वरीम् ॥ २०९ ॥
बलाहृतां धृतिं गर्भे स्त्रक्संहारप्रमुद्रया ।
योजयेद् धाम्नि कुम्भाख्ये स्थानेक्षुद्भवया पुनः ॥ २१० ॥
ततोपलेपिते धाम्नि ब्रह्मकूर्चादिकं स्वयम् ।
संप्राश्याचम्य मन्त्रात्मा क्रिया क्षुणापनुत्तये ॥ २११ ॥
मालयास्त्रेण जुहुयान्निजतोषावसानकम् ।
ततो बद्धशिखाचिष्यान्दृग्जप्तेच्चासमाहितान् ॥ २१२ ॥
भस्मधर्माब्जपत्रेषु शुद्धावासः सुधा प्रिये ।
यागौकसिततस्वाप्या स्वापयेद्विधिवद्गुरुम् ॥ २१३ ॥
ध्यायमानो महादेवीं प्राग्रूपे तु विलक्षिताम् ।

चतुःपाण्यैकवक्त्रां वा मुण्डखट्वाङ्गधारिणीम् ॥ २१४ ॥

धर्ममार्गेण धातारीं महाव्रतप्रतिष्ठिताम् ।

स्वपेद्वीरेश्वरं नाथं स्मरन् देवीस्वरूपगम् ॥ २१५ ॥

गुरुशिष्यसमायुक्तस्तोत्रजल्पकृतादरः ।

इत्ययं विधिरमोघफलोक्तिः प्रोदिता तु युवयोरनवद्यौ ।

वस्तुतः समधिवासनसंज्ञां वच्मि मुख्ययजुषां ह्यपरेद्युः ॥ २१६ ॥

इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिशास्त्रे प्रथमषट्के श्रीकालसङ्कर्षण्यामधिवासनाख्यः सप्तदशः पटलः ॥ १७ ॥

## अष्टादशः पटलः ॥

श्री भैरव उवाच ।

अथ शिष्यस्तु विरमेत् सुस्नातः शुद्धवससः ।

प्रणम्य गुरवे स्वप्नं विनिवेद्य शुभाशुभम् ॥ १ ॥

कुञ्जरादिसमारूढः शस्तो शतखरादिके ।

मन्तवो रोदनादिष्टा हास्याद्यारिष्टकाः शुभाः ॥ २ ॥

दृष्ट्यादिनिर्मितामोदाः प्रालेयाः शंसिताः शुभाः ।

असिताद्या विलोमास्तु क्रूरेन्द्रासितशोणिते ॥ ३ ॥

एवमादिवितानास्तु तन्त्रे स्वप्नाः प्रकीर्तिताः ।

सम्यग्विज्ञाय गुरुणा तेऽवधार्याः शुभाशुभाः ॥ ४ ॥

पुनः स्वप्नाद्यनिष्टानां धारणा ध्यानयोगतः ।

शतहोमेन वा शान्तिर्वेदितव्या  दुधाणुना ॥ ५ ॥

ततः स्नातो द्विराचान्तः कृतपूर्वक्रियान्वयः ।

कृतावश्योभयः शिष्यः प्राक्क्रमेण शिवालयम् ॥ ६ ॥

तस्मिनं घटाण्डके पूज्य प्रणम्यावाप्तिसाधकः ।

ततः करेण सूत्रन्तु तत् स्थूलमकृशं  सितम् ॥ ७ ॥

ग्रन्थिहीनं मृदुर्दीर्घं मन्दिरेण प्रपूज्य च ।

घटिकाञ्च ततो मन्त्री सूत्रयेद् गुह्यमण्डलम् ॥ ८ ॥

जयद्रथ उवाच ।

नाधिवासो महेशान यागः स्यात् किं शिवागमे ।

स्यादुमाव्याप्तदेहार्द्धं ज्ञातुकामा यमेव च ॥ ९ ॥

श्रीभैरव उवाच ।

ध्यासाध्यासनियोगानां मनो होमार्चनात्मनाम् ।

सर्वेषामेकरूपं स्यात् तत्फलं ह्युभयात्मकम् ॥ १० ॥

एकद्वित्रिचतुःपञ्चसर्वैर्वा वर्जितो धनैः ।

चुम्बकेच्चानियोगेन शिवयागः फलप्रदः ॥ ११ ॥

भैरवक्रमयुक्तानां योगानां काम्यकर्मिणाम् ।

सर्पिरग्निसमायोगाशंसिता समयस्थितिः ॥ १२ ॥

वसुहीनेऽपि पुष्पाद्यमवश्यमुपयुज्यते ।

यत् यद्विमानसंकर्म तत् तन्निर्वाणपूजितम् ॥ १३ ॥

मनोरज्जुसमाकृष्टं चैतन्यं स्वगते हृदि ।

निष्कम्प्यं रेच्य त्रियथाव्योम्ना सा सरसाश्रयम् ॥ १४ ॥

पशवः पतिता यान्ति निश्चितं भाववर्जनात् ।

शिशुं वीक्ष्यापयेत् स्वास्यं तन्मुखं वीक्षयेत् स्वयम् ॥ १५ ॥

तयोः संयोगकाले तु या संवित्तिर्विजायते ।

शिवतत्वमयी सा तु गुरुर्यन्मुक्तिदोण्डषु ॥ १६ ॥

चरतः पौरुषानर्थान्यत्र यत्र क्रिया स्थिरा ।

शिवयोगाववोधे च तत्र तत्र विकल्पतः ॥ १७ ॥

न कस्य पाशविच्चित्तिं कुर्यात् तत्वार्थविद्गुरुः ।

पूजामन्त्रेण पूज्यन्तु होत्र्यं पूजाग्नियोगतः ॥ १८ ॥

वाचिकं मानसं कार्यं त्रिकमप्यमृतपदम् ।

समासव्याससंस्थाने शुद्धेर्भिन्नमनेकधा ॥ १९ ॥

तथाचार्यमताविष्टं साधयेदीप्सितं फलम् ।

पुराधिष्ठानतो मन्त्राः सन्निधानानलात्मनाम् ॥ २० ॥

प्रयान्ति परमामोदं मुदिताश्च फलप्रदाः ।

अन्वगेव क्रियाः कर्तुः सन्ति द्रव्यगुणाश्रयाम् ॥ २१ ॥

तस्मान्न साधनैः साध्यं कार्यमात्महितैषिभिः ।

आत्मा नात्र समाख्यातस्तस्य तुष्टिर्यदा भवेत् ॥ २२ ॥

कर्तव्य ं गुरुशिष्याभ्यां तत्तदेव हितं स्वतः ।

तस्माद्विभवानुरूपाः प्राणिनां क्रतवो मताः ॥ २३ ॥

ते चानियतमार्गस्थाः फलसंसाधकाःमताः ।

दुरासन्नप्रकर्तृत्वमेतेषां भेदलक्षणम् ॥ २४ ॥

द्रव्यमण्डलसंयोगात्  समग्रात् परिकीर्तिताः ।

तद्द्रव्यं  कथितं किञ्चित्श्रूयतां पुरलक्षणम् ॥ २५ ॥

अथातः सं प्रवक्ष्यामि मण्डलानां परं विधिम् ।

नाम्ना भुवनविजयं वीराभ्युदयहेतुकम् ॥ २६ ॥

पक्ष्यापक्ष्येषु संख्यातैः कोष्ठकैः कुसुमैः शुभैः ।

व्यावर्त्तितैः स्वतः कुर्यान्मण्डलाकारवर्तिनाम् ॥ २७ ॥

कोणकोणचतुष्कन्तु कोष्ठकानां विलोपयेत्

ततः पूर्वात् समारभ्य द्वाराणि तु त्रिभिस्त्रिभिः ॥ २८

त्रिभिर्निर्वर्त्य षण्णान्तु सप्तमं मध्यकोष्ठकम् ।

विलोप्य कोष्ठमानन्तु कण्ठोद्धारे त्रयं भवेत् ॥ २९ ॥

मध्यमे द्वारकण्ठाभ्यां पार्श्वद्वारे शतान्वितम् ।

पक्षेण तु समायुक्तमतो द्वारद्वयं स्मृतम् ॥ ३० ॥

बहिर्भवनमानन्तु मध्ये गुणमितं समम् ।

विंशद्वारं महाद्वारं मण्डलं मण्डलेश्वरम् ॥ ३१ ॥

सर्वसंपत्प्रदं प्रोक्तं तव राजीवलोचने ।

कण्ठाच्चादन आरेण कण्ठवाद्याश्च का स्मृता ॥ ३२ ॥

पूराणां मध्यगा : याश्च ताः सर्वास्तु प्रमार्जयेत् ।

कोष्ठकद्वयमालायां ह्येतत् सर्वं निर्वर्त्य तु ॥ ३३ ॥

तदभ्यन्तरतस्तिस्रः कोष्ठमाला विलोपयेत् ।

सर्वत्र निपुणो मन्त्री मण्डलार्थविशारदः ॥ ३४ ॥

ततः पुंस्तत्वसंख्यातैः कुर्यात् कोकनदं समम् ।

ग्रन्थिभिर्ग्रन्थि वै वीरो योगपीठसमन्वितम् ॥ ३५ ॥

अन्तः कोष्ठार्द्धभागेन योगपीठं विवर्तयेत् ।

ततोऽन्तर्योगपीठस्य पीठांशं वसुलक्षणम् ॥ ३६ ॥

परित्यज्य समं वृत्तं भ्राम्य तन्मध्यविस्तरम् ।

भावयित्वा चतुर्धा तु समवृत्तानि कारयेत् ॥ ३७ ॥

प्रथमं तु दलाग्राणां द्वितीयं सन्धिहेतवे ।

किञ्जल्कानां तृतीयन्तु  नाभ्ये कल्पं चतुर्थकम् ॥ ३८ ॥

कोणरेखानिपातेन रेखातुर्ये कृते सति ।

जीवकर्णान्तरे रेखा : समादेया विपश्चिता ॥ ३९ ॥

आशापाशगताभिस्तु तिसृभिर्मलनिर्णयः ।

रेखाभिर्जायते वत्स समन्ताच्चु कुशेशयम् ॥ ४० ॥

सङ्गमे तु करं स्थाप्य दिग्रेखा सन्धिवृत्तयोः ।

द्वितीयामुपरिरेखां सन्धिसङ्गमसंस्थिताम् ॥ ४१ ॥

भ्रामयेत् परिधीतुल्यं सुवृत्तं चलकारकम् ।

एवं पत्राष्टकं कार्यमर्द्धद्वादशतुर्यकम् ॥ ४२ ॥

प्रोदिताद् द्विगुणैः सूत्रैर्द्विगुणां वाथ कारयेत् ।

वर्त्तयेद् द्वादशारं वा भाविलक्षणवर्तनात् ॥ ४३ ॥

सुशुभ्रं पङ्कजं रम्यं कालसंकर्षणीप्रियम् ।

महेश्वरक्रुधा पाण्डुरक्तपीतास्तु पादकाः ॥ ४४ ॥

योगपीठं सितं कार्यं यथाशोभमथापि वा ।

दलसंधयो बभ्रवस्तु तत्पत्रान् पञ्चजानि तु ॥ ४५ ॥

वृत्तपादादिकं कार्यं स्वकीयं ह्यात्मसंपदा ।

सन्ध्यारागनिभं वृन्दं केसराभ्यां नृपान्तिमम् ॥ ४६ ॥

सुरकोटिमितं कार्यं षोडशाराब्जविस्तरम् ।

सितं पीतं च कर्तव्यं मूलशृङ्गविपक्षया ॥ ४७ ॥

प्रोक्ता दलेषु युग्मन्तु त्रिकमीशदले भवेत् ।

कर्णिकोन्नतविस्तारा जातरूपनिभा समाः ॥ ४८ ॥

तन्मध्ये नवबीजानि हरित्पांशागतानि तु ।

मध्येऽवसानिकं कार्यं वीराभ्युदयपङ्कजे ॥ ४९ ॥

एतद् भुवनविजयं पौलस्त्येन प्रपूजितम् ।

पार्वतीवल्लभं रम्यं सर्वैश्वर्यप्रकाशकम् ॥ ५० ॥

मण्डलं मण्डलानान्तु मण्डलं मण्डलान्तिकम् ।

वाहयेन् मध्यमं द्वारं दक्षिणस्यां दिशि सदा ॥ ५१ ॥

निधिप्रच्चादनी शोभा वेदीवृत्तावगम्यते ।

वैद्यादीनां पुराणान्तु शोभाः सुवपुषो मता ः ॥ ५२ ॥

स्वेच्चया मानवर्णञ्च चित्रं चापि प्रकल्पयेत् ।

एकहस्तं द्विहस्तं यदेकवर्णं तु कारयेत् ॥ ५३ ॥

त्रिहस्तं तु त्रिभिर्वर्णैः पूर्यंविधिविस्तरम् ।

श्रुतिहस्तात् समारभ्य यावदङ्गुलसंख्यगम् ॥ ५४ ॥

चतुर्भिर्वर्णकैश्चाद्यैस्तुर्यरेखाक्रमेण तु ।

सिता रक्ता तथा पीता मेचका ः समलक्षणाः ॥ ५५ ॥

सिता नामसमा कार्या शेषाह्रस्वेन्दुह्रासकाः ।

अन्योन्यस्य सदा कार्या असंसक्ता यवार्द्धतः ॥ ५६ ॥

वर्णका वर्णके ग्राह्या विकल्प्य च सितासिताः ।

युतायुतविभागेन रूक्षतैश्च विवेचयेत् ॥ ५७ ॥

यथासंभवसंप्राप्तै रजोभिः पुरपूरणम् ।

भङ्गरेखा विलुप्यन्ते कर्त्तव्यं दैशिकेन तु ॥ ५८ ॥

ईषद्दुत्कृष्य चोत्कृष्य मध्याङ्गुष्ठाङ्गुलित्रयात् ।

प्रकुर्याद्रजसः पातं रजो वै भावयेत् कलाम् ॥ ५९ ॥

तर्जन्यङ्गुष्ठयोगेन दण्डबिम्बप्रयोगतः ।

पुष्ट्या वा सुसमां रेखां शनैरापूरयेद् बुधः ॥ ६० ॥

पर्यन्तसंर्पितायाच रेखा मध्यमसन्निधिः ।

वर्णक्रमान्यतो यान्तु लोहितायां तथैव च ॥ ६१ ॥

प्रमृज्य पूरिका यान्तु प्रोक्तदोषानवाप्नुयात् ।

स्वराष्ट्रस्य भवेत् पीडा दुर्भिक्षव्याधितस्करैः ॥ ६२ ॥

राष्ट्राधिपे महद्दुःखं मानसं जायते ध्रुवम् ।

तत्र शान्तिं प्रकुर्वीत मन्त्रैर्घोरप्रशामकैः ॥ ६३ ॥

धारणाध्यानसंयुक्तैः स्तोत्राध्ययनमङ्गलैः ।

तत् स्यात् सदा प्रसन्नैकाग्रचेतसा ॥ ६४ ॥

निरुद्धाग्नैररूक्षैश्च रजसः पातनं शुभम् ।

देवतागुरुभक्तैश्च तत्वयुक्तैरमत्सरैः ॥ ६५ ॥

लेख्यं मण्डलराजानं निरुद्विग्नो जितेन्द्रियः ।

न च ग्राम्यकथासक्तैः शक्तियोगविवर्जितैः ॥ ६६ ॥

न कौतुकार्थनिरतैर्भ्रान्तचित्तैरनावृतैः ।

लिङ्गिभिर्वर्णाश्रमिभिः भ्रातृभिः सहपुत्रकैः ॥ ६७ ॥

कर्णिकोत्तुङ्गरूपास्तु कर्णिकायां च केसराः ।

केसरेभ्यश्च पत्राणि पत्रेभ्यः प्रतिधारणाः ॥ ६८ ॥

वृत्तं तस्यास्तु तत् पीठं पीठाद्रेखास्तु मण्डलाः ।

अन्योन्यापेक्षया सर्वाः क्रमान्न्यूना भवन्ति हि ॥ ६९ ॥

भूयोभिरथवैकेन रजसा पूरिते सति ।

धाम्नि मार्गप्रदेशांस्तु मार्जयित्वा महामतिः ॥ ७० ॥

पूर्ववत्कृतनित्योक्तिः सर्वसंभारसंभृतम् ।

सन्दिश्य यागनिलयं मन्दिरेऽर्चावसानतः ॥ ७१ ॥

अर्घपात्रादिकं कृत्वा स्वालङ्कारावसानकम् ।

संपूज्य कर्करीं कुम्भनाम्ना क्रमयोगतः ॥ ७२ ॥

दिक्पालसन्निधिं कृत्वा विरम्य घनमादरात् ।

ततः कुर्यात् कलान्यासं रजसापांड्वनुक्रमात् ॥ ७३ ॥

पूजयेद् भैरवीमब्जे कर्णिकासनसंस्थिताम् ।

इष्टावरणसंयुक्तामशेषैर्वा समायुताम् ॥ ७४ ॥

रथकेतुविरामन्तु  हरेर्देव्या दलस्थिता ।

दलसन्धिगता दूत्यस्तत्प्रेष्याश्च दलाग्रगाः ॥ ७५ ॥

पूजयित्वा क्रमः कार्यः पीठान्ते किङ्करादिषु ।

द्वारेषु द्वारपालाश्च पूजाभाजो भवन्ति हि ॥ ७६ ॥

कंका महार्धः सुमुखो दन्तुरो रोषकाननः ।

अग्निकः पटहाक्षश्च घण्टाकर्णोऽथ खिंखिणः ॥ ७७ ॥

अलात्चक्रीघं घोरो ज्ञेयचामुण्डिकोत्तमः ।

प्रोक्तस्त्रिक्रमसंयोगाद्वरिष्ठां तां प्रपूजयेत् ॥ ७८ ॥

युक्तकोटिनमौलीन्दुं समस्तां मुद्गरायुधाः ।

ततः कर्माणि निर्णीते मण्डले पूजयेद्धविम् ॥ ७९ ॥

मन्त्रमण्डलयोः कार्यं तर्पणं मन्त्रदीपनम्।

अधिष्ठानविहीनन्तु स्वाहान्तं मन्त्रतर्पणम्॥ ८० ॥

तपसा साधिके चैव संस्थितं पुरतर्पणम् ।

हुं फडन्तासनध्वस्तभवादीनां प्रदीपनम्॥ ८१ ॥

संवित्तिं चापि मन्त्राणां कृत्वा शिष्यं प्रवेशयेत्।

ततः प्रक्रमसंयोगात् पुष्पपाते कृते सति॥ ८२ ॥

शक्त्यन्ते कल्पिते धाम्नि दीक्षारम्भं समारभेत्।

यथोपसन्नरूपेभ्यो वर्णिभ्यस्ताण्डमादरात्॥ ८३ ॥

सव्यतः स्थापिते शिष्ये षडङ्गाङ्गीकृते शुचिः।

न्यस्तदक्षिणहस्ते तु दर्भाग्रं तु समर्पयेत्॥ ८४ ॥

दर्भमूलं स्वजङ्घाधश्चान्तरे सन्नियोजयेत्।

पश्चात्मानन्तु संयम्य नाड्यादेकं समाश्रयेत्॥ ८५ ॥

ततोऽर्घवारिणा शिष्यं प्रोक्ष्य ताड्य बुधः स्त्रजा।

हृत्संपुटितं तद्गृह्य गुहास्तम्भितमूर्ध्वगम् ॥ ८६ ॥

संहारिण्या गृहीतं तु योज्य गोद्भवया पुनः।

योनौ संकल्पितायान्तु हृदा शिवतनूपरि ॥ ८७ ॥

तद्योगगर्भजननमधिकारं गभस्तयः ।

लयञ्च निष्कृतिं चैव वियोगं ह्येतच्चादितः ॥ ८८ ॥

ऊपवह्नौ ˙ शुचिर्वाथ जुहुयादाहुतीःक्रमात्।

शतेन निष्कृतिः कार्या माला संपुटयोगतः ॥ ८९ ॥

परतत्वार्णकाला तु पदानां यन्निवेशितम् ।

ऊर्ध्वं दद्यात् ससूत्रे तु लम्बिते पाशसन्ततौ ॥ ९० ॥

एकैकाहुतियोगेन दीपितायां शतात् पुनः ।

सन्निधिर्ह्युपनीता या कर्तव्यायुतजप्तया ॥ ९१ ॥

हुं फडन्तास्त्रसंयोगात् पाशच्छेदे कृते सति ।

कर्तव्ये तत्स्थनिक्षेपे कर्मणी चुम्बकेन तु ॥ ९२ ॥

विश्लेषोद्धरणं पूर्वमात्मस्थेनात्ममेव च ।

धूर्मंथरप्रयोगेन सन्धातव्यस्तु वस्तुनोः ॥ ९३ ॥

अनुदात्तं भवेच्चुद्धमुदान्तमितरं मतम् ।

निर्णीते चाप्यनिर्णीते विलीनं ज्ञानचक्षुषा ॥ ९४ ॥

दृष्ट्वाधेयाधारगततर्पितानि विसर्जयेत् ।

पाशवच्च शिखा भेद्या शुद्धे शोधनमानगे ॥ ९५ ॥

धुन्वते पाशजालन्तु शरीरप्रक्रियास्थितम् ।

शक्तिगं चाविभावित्वाच्चेद्यः पाशो विपश्चिता ॥ ९६ ॥

त्रिखण्डं पञ्चखण्डं वा नवाष्टादशतद्युगम् ।

रुचितो वापि भेदैस्तु कृत्वा ध्यानं तु खण्डशः ॥ ९७ ॥

आदिना शिवतत्वेन पदेनाद्येन मालया ।

पुरेण भैरवाख्येन कुलपाशान्त्यतीतया ॥ ९८ ॥

युगपत्किल तेनाथ शोधयेदेकरूपतः ।

तत्वार्थं योगमुदितं निष्कृत्या च विशोधयेत् ॥ ९९ ॥

वागेशीं कल्पनाहीनां न्यसैदेकतमेऽध्वनि ।

मन्त्रसंपुटसंयोगाच्छुध्यते जन्तुमण्डलम् ॥ १०० ॥

अथ मन्त्रावृतो वाथ विरामावरणीं प्रिये ।

एकैकं देवतारूपं हर ईं संपुटान्वितम् ॥ १०१ ॥

एकादिभिः शतान्ताभिर्विशोध्याहुतिभिः क्रमात् ।

यावच्चक्क्रेशरूपन्तु ततस्तस्मिन् नियोजयेत् ॥ १०२ ॥

बुभुक्षुं साधकेन्द्रन्तु मुमुक्षुमलकात्मनि ।

एवं हि सर्वतोभद्रं दीक्षाकर्म विजानते ॥ १०३ ॥

यो गुरुः सर्पशुनान्तु लीलया मृतदायकः ।

आप्येयं यस्य यत् तत्वं शैवं शैवी क्रिया च या ॥ १०४ ॥

सस्मये स पदे नूनं स्थितिं कुर्याद्गरीयसीम् ।

ककुन्मीलयितुं कल्पस्तत्पदं गूढविक्रमम् ॥ १०५ ॥

विहाय सर्वतोभद्रं शिवज्ञानविदं गुरुम् ।

आलोकसृष्टिजुष्टेभ्यो जन्तोर्गुरुर्गुरुर्मतः ॥ १०६ ॥

गलन्त्यामय दोषाणि सुघोराण्यपि कस्य नो ।

ताडनादिभिरात्मस्थं शिशुं कृत्वा हृदि स्थिरम् ॥ १०७ ॥

चतुष्के पूरके मन्त्री सर्पिषा पूरयेच्छुचिः ।

तत्त्वोपलब्धिचैतन्यो वसोर्धारा  सवेणिकाम् ॥ १०८ ॥

आध्यानात् स्मृतिसंकल्पस्थानेन्दुं संप्रयोजयेत् ।

युक्तित्तोऽन्या हुतीर्यश्च चतस्रः पञ्च चाष्ट वा ॥ १०९ ॥

रूणद् विशेषकं ं कर्म तद्योगादैस्तु संचितम् ।

पापच्चेदात् समाज्र्यञ्च प्रारब्धैकाचितात्मनाम् ॥ ११० ॥

मूलच्चेदे कृते स्नानमुपस्पृश्यथ  प्रोक्षणम् ।

कृत्वा विज्आपनं चापि शंभोर्योगं समाश्रयेत् ॥ १११ ॥

त्वं हेतुकर्तृरूपोऽहं काय्र्योऽयं योजिते पशुः ।

न चाज्ञाकरणायोगात्  परे वपुषि निश्चयः ॥ ११२ ॥

जयद्रथ उवाच ।

पुंसो व्यक्तशिवत्वस्य युक्तिः पूर्वविधानिका  ।

सान्यार्थसाधनी किन्तु किन्तु व्यक्तार्थसाधनी ॥ ११३ ॥

व्यक्तार्थव्यञ्जिका सा तु यदि स्यादनवस्थितिः

सावशेषार्थजातस्य तदाद्यङ्गस्वरूपिणः ॥ ११४ ॥

न पीडनसमाप्तिस्स्यात् पिण्डादिषु कुत्रचित् ।

न चापि मैथुने त्यागो निवृतावपि जायते ॥ ११५ ॥

शिवत्वं परमा कोटिः पुंसः शास्त्रेषु गीयते ।

ततोऽपि नार्थसंसिद्धिः प्रमाणैर्नेष्यते क्वचित् ॥ ११६ ॥

अणोः स्थापकसूत्रस्य ग्रहणं योजनं च यत् ।

तदप्यस्मिन् ततः शक्तो विरुद्धं प्रतिभासते ॥ ११७ ॥

एवमेतत् प्राप्तशङ्को यतस्तन्महता विना ।

सन्दिग्धं तत्प्रसादेन निःसन्दिग्धं प्रकाशय ॥ ११८ ॥

श्रीभैरव उवाच ।

सम्प्राप्तशिवत्वस्य यद्योगकरणं मतम् ।

तच्चिवत्वं क्रियाङ्गस्थं नतदभ्यधिकार्थदम् ॥ ११९ ॥

लोहनं व्यक्तचन्द्राणां संपर्काच्चिचरेतसः ।

निर्णीतं वर्णशस्तेन क्रियावसुगणक्रिया ॥ १२० ॥

व्यापकं मन्त्रसामर्थ्याद् गृह्णाति विभुमप्यणुम् ।

न चापि ग्रहणं तस्य परमार्थेन सुव्रत ॥ १२१ ॥

तत्सामर्थ्यतिरस्कर्तुः शक्तिसंरोधनं तु यत् ।

तदत्र ग्रहणं प्रोक्तं शिवस्यैव चतुर्मतम् ॥ १२२ ॥

विशेषसन्निधिर्यस्माद् देहिनः संप्रदृश्यते ।

तत्त्वन्यासविधिर्यस्मान्मया तस्मिन् प्रकीर्तितम् ॥ १२३ ॥

अथ शब्दात्मिकां दीक्षां सन्देहविनिवृत्तये ।

वच्मि ते दूषता स्वामिस्त्रोतस्यस्मिन् प्रतिष्ठिताः ॥ १२४ ॥

न्यसेन्माहेश्वरं पुञ्जं तत्वहर्म्यतदीश्वरौ ।

वाग्वतीं कल्पयित्वा तु कृत्वास्याः कर्मणी हृदा ॥ १२५ ॥

ततोऽम्बुक्तसुमाभ्यान्तु शिशोः संप्रोक्षणाहुतीः ।

निर्वत्य शक्तिजङ्गन्तुर्जीवशक्तिप्रतिष्ठितम् ॥ १२६ ॥

हृत्पुटांतर्गतं कृत्वा संहारिण्या मयूरकम्।

संहृत्य वलनिवृत्तिं निर्वृत्तिः सुजातोद्भवमुद्रया ॥ १२७ ॥

हृत्कृतं स्थिरतां प्राप्तं रेचकं द्वादशान्तगम् ।

हृद्याण्डं प्राक्प्रयोगेन वह्नियोनौ प्रयोजयेत् ॥ १२८ ॥

युक्त्यैवाधानमूलन्तु कर्म निष्कृत्य पश्चिमम्।

कर्तव्यं तत्ववत् किन्तु निष्कृत्यां शोधयेत् पुनः ॥ १२९ ॥

पुराधिप पुरस्थानां कृताहुतिविधिक्रमात् ।

पूर्णाहुत्यात्मकं कुर्याच्चुम्बकश्चुम्बितं सकृत् ॥ १३० ॥

ततः समुद्धृते जन्तौ स्वस्थातस्थे कृते सति।

भूयो विष्टपयोन्यासं योनिश्चैव विधायितुः ॥ १३१ ॥

प्राग्वत्तद्योगमूलन्तु कर्मं कुर्यात् क्रमेण तु।

कालवह्न्यादिकान्येव शोध्य् अगोत्रगृहाणि तु ॥ १३२ ॥

भुवस्ततस्तु सन्धानं पूर्ववत् परिकल्पयेत्।

एवं वै सर्वतत्त्वस्थां पुरमालां विशोधयेत् ॥ १३३ ॥

शिवतत्त्वे विशुद्धे तु योगः कार्यो विपश्चिता।

मुषितस्वात्मकं पाशं शिखां शुद्धे खिलेऽध्वनि ॥ १३४ ॥

अविच्याादित्रिकेणैव शुद्ध्यन्ति नरकाधिपाः।

कूष्माण्डेनाथ चैकेन शोधयेदध्वविद्गुरुः ॥ १३५ ॥

पातालानि ततः शोध्य भूर्लोकं तत्वपूर्वकम् ।

षड्विधं भूतवृन्दन्तु विशोध्यं स्थाणुनादरात् ॥ १३६ ॥

जात्युत्तमगतं वाथ शोधयेदनुपूर्वशः ।

न्यग्रोधस्तंभजातीन्द्रमनन्तं व्यालयोनिषु ॥ १३७ ॥

पशुयौनौ वृथाश्वन्द शोध्य शोध्या तु मानुषी ।

सा भिन्नरूपसंस्थापि भिन्नजातिप्रतिष्ठिता ॥ १३८ ॥

हृदादौ गोभुजाद्यास्तु तस्या जातिस्तु सङ्करा ।

विशोध्य शूद्रविट्क्षत्रविप्रजाती हृदादिभिः ॥ १३९ ॥

शोधयेत् क्रमवित्प्रोक्तदिग्देशञ्चाप्यनुक्रमात् ।

चण्डकर्मच्युतः शूद्रः शूद्रकर्माधमो वणिक् ॥ १४० ॥

वणिग्विधिविहीनस्तु धर्मत्वमुपगच्चति ।

धर्मकर्मविहीनात्मा ब्रह्मजातिमुपैति हि ॥ १४१ ॥

संस्कारसन्निपातं तु तस्यां संशोधयेत् क्रमात् ।

गर्भाधानं पुंसवनं सीमन्तं जातकर्म वा ॥ १४२ ॥

नामनिष्क्रामणी पञ्चप्राशनेषु कृतेष्वथ ।

भवेच्चूडोपनयनं व्रतबन्धनमेव च ॥ १४३ ॥

मेखलादन्तकाष्ठाख्यमजिनं त्र्यायुषं तथा ।

सन्ध्याभ्युपासा भिक्षा च मेखला व्रतसप्तकम् ॥ १४४ ॥

भूतेशं पाशुपत्यञ्च गणञ्चैव गणव्रतम् ।

उन्मत्तं चासिधारञ्च घृतेशं सप्तमं स्मृतम् ॥ १४५ ॥

एतानि व्रतवन्धान्तर्गतानीत्यवधारयेत् ।

समावर्तनकादूर्ध्वं सन्ति वेदव्रतानि तु ॥ १४६ ॥

नैष्ठिकं दार्विकं चैव भौतिकं सौमिकं तथा ।

क्रमादेतानि चत्वारि विचरेन्मुक्तमेखलः ॥ १४७ ॥

मुञ्जीमोक्षक्रियायोगं व्रतमेकं तु कीर्त्तितम्

विवाहान्ते दशैवेते संस्काराः श्रुतिचोदिताः ॥ १४८ ॥

वेदव्रतमहायज्ञैः पञ्चभिश्च समन्विताः ।

एकान्नविंशतीत्युक्ताः शेषान्येतर्गता विदुः ॥ १४९ ॥

देवयज्ञो वलिर्मौनं जपः स्वाध्याय एव च ।

एतान् पञ्चमहायज्ञान् गृहस्थः समुदाचरेत् ॥ १५० ॥

कृत्वा कुशमयीं जायां ज्ञानसिद्धिकुमारिकाम् ।

तया सिद्धविधिर्माखः कार्यः संस्कारकर्माणि ॥ १५१ ॥

स चापि पाकयज्ञाख्यो हविर्यज्ञाकरः परः ।

सोमसंस्थापकश्चान्यः सप्त पर्वाः प्रकीर्तिताः ॥ १५२ ॥

अष्टका पार्वणं श्राद्धं श्रावण्याग्रायणी तथा ।

चैत्री चाश्वयूजी चैव सप्त पाकमखाः स्मृताः ॥ १५३ ॥

अग्न्याधेयाग्निहोत्रञ्च दर्शाख्यं पौर्णमासिकम् ।

चातुर्मास्यपशुर्वर्णः षष्ठः सौत्रामणिर्मतः ॥ १५४ ॥

निरुद्धस्तु क्वचित् षष्ठः पशुबन्धस्तु सप्तमः ।

एते सप्त हविर्यज्ञाः परिशोध्याः क्रमेण तु ॥ १५५ ॥

अग्निष्टोमो उक्थोऽन्यः षोडशस्तथा ।

वाजपेयस्त्रिराख्यो ह्यस्तुर्यामस्तु सप्तमः ॥ १५६ ॥

सोमसंस्था इमे सप्त ह्यष्टावात्मगुणाः परे ।

दानं दया तितिक्षा च शौचोपायमतोऽपि च ॥ १५७ ॥

असङ्गममकार्पण्यमस्पृहेति प्रकीर्तिताः ।

चत्वारिंशाष्टसंस्काराः श्रुत्युक्तिप्रतिपादिताः ॥ १५८ ॥

वास्तोर्यामे कृते पश्चाच्चिष्यं सोमं तु पाययेत् ।

घृताभिघारितं भस्म अन्धोदकपरिप्लुतम् ॥ १५९ ॥

सोममौदुम्बरे पात्रे ब्रह्मपत्रपुटेन वा ।

सुस्नातं पाययेच्चिष्यं मनसा वाथ संस्मरेत् ॥ १६० ॥

अतो हिरण्यपादस्तु तथारण्यहिगुह्यकः ।

हिरण्यमेहो हिरण्यो हिरण्यपाणिर्हिरण्यवान् ॥ १६१ ॥

हिरण्यश्रुतिर्हिरण्यत्विट हिरण्याक्षस्तथैव च ।

हिरण्यजिह्वो हिरण्यनासिको दशमो मतः ॥ १६२ ॥

शतप्रकृतयो ह्येते कीर्तिताः क्रतवो दश ।

इत्येवमासहस्त्रांतां सप्तमन्तु विशोध्य तु ॥ १६३ ॥

जुहुयादश्वमेधन्तु द्वितीयाच्चाश्रमात् परम् ।

वानप्रस्थं परिव्राजमन्त्येष्टिं चाप्यनुक्रमात् ॥ १६४ ॥

एवं विशोधितं ब्रह्मा इत्यष्टकविशोधनम् ।

आम्नायेन प्रकर्तव्यं स्थाणुना योनिवेदिना ॥ १६५ ॥

पैशाचीं राक्षसीं याक्षीं गान्धर्वीं पाकशासनीम् ।

प्राजेशजां तथा सौम्यां ब्राह्मीं संशोध्य यत्नतः ॥ १६६ ॥

पिशाचादिविरिञ्चान्तां शोधयेदपि वा नृप ।

स्तंभाद्विरिञ्चपर्यन्तामेकैकाहुतियोगतः ॥ १७ ॥

तिसृभिः पञ्चभिर्वाथ विद्याविद्येन शोधयेत् ।

एवमेतत् क्रमात् सर्वमनन्तजनपूर्वकम् ॥ १६८ ॥

दृष्ट्वाम्नायेन संशोध्य यावत् संति पुराणि तु ।

शिखाचेदादिकं कर्म पूर्ववच्च ततो भवेत् ॥ १६९ ॥

अथवैतत्पुरा ध्यानं प्रतिचिन्त्य स्वदेहकम् ।

सन्ताड्याथ गृहीत्वाणुं समीकृत्यात्मना सह ॥ १७० ॥

देवतापदसंत्यागान्मन्त्रोच्चारवशात् तथा ।

पूर्णाहुत्यैकपाशान्ते योजयेत् परमे पदे ॥ १७१ ॥

चरति भुवनदीक्षां वेत्ति योध्वानमुच्चैः

शिवसमरसभावे यञ्च योगं स कुर्यात् ।

अविदितभुवनाध्वो भ्रान्तचित्तश्च तत्वे

कृतपुरुष विशुद्धिर्यात्यधस्ताद्गुहोऽपि ॥ १७२ ॥

विदितस्तु यदागमोऽखिलो विपरीतो विपरीतचोदितः।

क्रिययापि विपर्यस्तया विपरीतं पदमाप्यते तदा ॥ १७३॥

विविधमण्डलसाधनसाधितां सकलभोगसमर्पितविस्तराम्।

श्रियमनन्तगुणा भजतोत्सुका भजत भोर्विमलं पदमादरात् ॥१७४॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसंअकर्षण्यां अष्टादशः पटलः॥ १८॥

ऊनविंश पटलः ॥

श्रीभैरव उवाच।

अथातः संप्रवक्ष्यामि वक्ष्ये षण्णां प्रियं प्रिये।

योगिनीनां महावीर्यं मण्डलं वीरवन्दिते॥ १॥

वेधोवक्त्राण्यनंतस्य वाहनं स्फिजचक्षुषी।

ग्रथितां वर्तयित्वा तु सांख्यतत्वमितां ततः॥ २॥

रक्षयेद् धाम्नि विप्रस्य लाञ्छनैश्चिह्नकोष्ठकान्।

तद्बाह्ये त्रिकमालाप्य तस्याधो बीजकोष्ठके ॥ ३॥

कोष्ठमानं बलं कृत्वा देवि प्राकारसंस्थितम्।

कण्ठस्योभयथा मृज्य सप्तकोष्ठान्तरे गताः॥ ४॥

रेखाः समन्ततो वत्स युक्त्या द्वारचतुष्टये।

सपक्षा मध्यरेखास्तु कण्ठाधः कोष्ठकत्रये॥ ५॥

मार्जयित्वाप्यधोर्ध्वे तु रेख्य तत्पार्श्व कोष्ठयोः।
मार्जनीये ततोधस्ताल्लोप्यं चापि तदन्तयोः॥ ६॥
तदन्तयोस्ततोर्ध्वस्थे ह्यर्धमेतद् विरामयोः।
ऊर्ध्वे तदन्तयोर्लोप्या लये वल्लीविधायके॥ ७॥
तद्विरामेऽधपार्श्वस्थे द्विरेखे तु विनाशयेत्।
एवं सर्वत्र भङ्ग्या तु पार्श्वयोरुभयोरपि॥ ८॥
कण्ठानां मार्जयेद् रेखा यथा वल्ली स्फुटा भवेत्।
उर्ध्वरेखाहृतास्त्रीणि ह्यधोरेखा चिराद्वयम्॥ ९॥
कर्णतुल्यादिवल्लीनां ग्रन्थिलक्षणमीरितम् ।
चलतः सर्वतः पोष्यो दशसप्तगृहे गणः॥ १०॥
पक्ष रुद्धाथ सा वीथी कोष्ठमाना समन्ततः।
कोणेषु कोष्ठे तुर्यन्तु ं लोपयित्वा विपश्चिता॥ ११॥
सप्तदशकोष्ठकानि कार्याण्यधिमुखानि तु।
त्रिकोष्ठकोष्ठके भवेन्मोक्षः कण्ठकोष्ठगलो भवेत्॥ १२॥
कण्ठस्यान्तरबाह्यास्तु द्वाराद्यन्तर्गता भवेत्।
ताः समालेखयेद् रेखा भङ्गाभ्यङ्गानुरूपतः॥ १३॥
पक्षौ द्वार समौ कार्यौ द्वारं बाह्यन्तु दक्षिणम्।
वाहयेद्वारि तुर्याम्बा विताने भुवनेऽनघ॥ १४॥
एवं निर्णीतधामा वै पूरयेद् वर्णकैः पुरम्।

शालिषष्ठीकगोधूमपांसुना भस्मनाथवा ॥ १५ ॥

सितेन पूरयेत् पद्मं कर्णिकापत्रसन्धयः ।

पादान्तश्चापि यः प्रोक्तपूर्वमासीत्  तथा भवेत् ॥ १६ ॥

सन्धिसन्ध्यालकारेणु  असृङ्निकरसन्निभम् ।

गरुत्मतः  क्रमेणैव पत्रषट्कमथापि वा ॥ १७ ॥

बरेण्यं  द्विगुणं कृत्वा तद्वद्वर्णं प्रशस्यते ।

प्राकारद्वारवल्लीनां एका रेखा सिता भवेत् ॥ १८ ॥

शेषे वै वर्णका देयाः स्फुरणे स्थानशोभनम् ।

या यस्योपादिता ः शोभा अन्ते देवस्य तस्य तु ॥ १९ ॥

स्वेच्चया वर्णविन्यासश्चित्रश्चित्रवितानके  ।

योगिनीनां प्रियं प्रोक्तं समासीच्चन्द्रमौलिना ॥ २० ॥

गर्भवाह्या तु या वीथी संमार्ज्या गन्धवारिणा ।

वल्यंतं चुरणं कार्यं तद्वाह्ये च समन्ततः ॥ २१ ॥

द्वारमण्डलं शोभा प्रागुदिता कार्या यदि स्थानप्रविस्तरः ।

विस्तीर्णे धाम्नि संकीर्णे स्थाने शोभां न कारयेत् ॥ २२ ॥

मण्डलानान्तु सर्वेषां न ह्येके तु वितानके ।

श्रीदेव्युवाच ।

मण्डलस्य तु किं मानं पीठषड्दलवर्तनम् ॥ २३ ॥

कथमंभोरुहस्यास्य द्विगुणस्याथवा हर ।

पन्निलाङ्गरुहस्यैतन्निर्भ्रान्तं मत्प्रसादतः ॥ २४ ॥

प्रकाशय दिवावासमौलिचुंबितपङ्कज ।

श्रीभैरव उवाच ।

त्रिहस्तात् तु समारभ्य करकोष्ठसमं सितम् ॥ २५ ॥

मण्डलं श्रीपदं ह्येतन्मोक्षे स्वेचाप्रमाणकम् ।

कोष्ठकारेण पीठन्तु कृत्वा पूर्वोक्तमानतः ॥ २६ ॥

वृत्ततुर्ये प्रकर्तव्यं सरोरुहप्रसिद्धये ।

धार्यं त्रिभाजयेत् खण्डं नैवं चापि यशस्विनि ॥ २७ ॥

मीनेषु पातयेद् रेखां यथा रेखाष्टकं भवेत् ।

रूष बीजान्तरे तुल्यं रेखा तुर्यं निपातयेत् ॥ २८ ॥

प्रोक्तस्त्रिरेखिणं पत्रं कार्यमीनावधिं प्रिये ।

रेखा केसरवृत्तस्य सङ्गमात्परिधेरधः ॥ २९ ॥

द्विरागत्या गतभ्रान्तिः कार्या सन्ध्युभयानुगा ।

एवं पूर्वदलं वर्त्य शेषाणि तु विवर्तयेत् ॥ ३० ॥

चतुर्विंशतिभिः कार्यं रेखाभिः सूर्यपङ्कजम् ।

प्राकृतं व रु प्राकृति ।ह्रं द्विगुणाभिस्तु प्रतिपत्रं त्रिरेखिणम् ॥ ३१ ॥

द्विसन्धिदलसन्धिस्तु द्वादशारादिको भवेत् ।

विषवृक्षदलाग्राणां भङ्ग्यापत्रोग्रवर्तनात् ॥ ३२ ॥

बीजानां सप्तकं कार्यं पूर्ववत् केसरोगणः ।

कर्तव्यः षड्दले पक्षे ह्यस्यैवेतरयोर्द्वयोः ॥ ३३ ॥

शेषं प्रमुदितं सर्वं कार्यं गर्भे तु लक्षणे ।

एतच्चित्रविभागस्तु चित्रचित्तप्रसाधकं ॥ ३४ ॥

चतुर्दलादि पद्मानां गर्भे वा पूज्यते नृप ।

अन्यतन्त्रप्रसिद्धैस्तु स्वतन्त्रोक्तैरथानघ ॥ ३५ ॥

त्रयाणां स्त्रोतसा मन्त्रा ः ये पूज्याः संप्रकीर्तिताः ।

पूजिता ः जातिभिस्तेऽत्र पुरे यच्चन्ति वाञ्छितम् ॥ ३६ ॥

सर्वे अफूर्जन्ति वीर्यौघा धाम्नो यस्य प्रभावतः ।

यो वर्णयति वीरेशो वीरो यः पूजयेद् भुवि ॥ ३७ ॥

शेषकर्मरतस्तस्य गणको यदवस्थितः ।

एतत् प्रकाशितं तुभ्यमुपाप्तानुस्वप्रभावतः ॥ ३८ ॥

पीठे तु मण्डले मण्डं मण्डलेभ्यो निकुंभज ।

एवमेतत् पुरं वर्त्य पूजयेदत्र भैरवीम् ॥ ३९ ॥

भैरवं वा चतुर्वक्त्रं चतुर्बाहुं त्रिलोचनम् ।

शरच्चन्द्रनिभं शान्तं शूलखट्वाङ्गधारिणम् ॥ ४० ॥

कपालमालाभरणं मुण्डखड्गधरं हरम् ।

व्यालकल्पविचित्राङ्गं वृश्चिकावलिमालिनम् ॥ ४१ ॥

स्फुरद्भोगसहारत्नभोगमञ्जीरमंडितम् ।

गुह्यशक्त्या सनारूढं योगिन्यंगविमालितम् ॥ ४२ ॥

योगिन्यश्चात्र कर्तव्या मूलतो बीजयुग्मगाः।

घोराङ्गनिर्गता घोरा घोरवक्त्राधिनायिकाः॥ ४३॥

वातार्णपंचकेनास्त्रप्रोक्तरूपं  प्रतिष्ठितं।

सुघोरं घोरशक्त्युग्रं भुजङ्गं विनतासुतम्॥ ४४॥

लीलालोकोहला कंका करालाख्यामहारवा ः।

मंदोदरी षडेतास्ताः सर्वषट्काधिनायिकाः॥ ४५॥

याभिः संपूजिताभिस्तु सिद्ध्यन्ते विश्वमातरः।

स्वधाराब्जसदच्छायां पूज्या मलभिदः क्रमात्॥ ४६॥

मुण्डखट्वाङ्गधारिण्यो महाव्रतधृतश्रियः।

सृणिशक्तिकरा देव्यश्चतुर्वदनमण्डिताः॥ ४७॥

भस्मना पाण्डुवपुषः शुद्धांतस्त्रिरुचोऽथवा।

सेन्दुखण्डकपर्दिन्यः पीनोन्नतपयोधराः॥ ४८॥

षण्णां रूपधराश्चैव ताश्चतुर्विंशदम्बिकाः ॥ ४९॥

तुर्यतुर्य विभेदेन  षट्कबीजसमाश्रिता ।

स्वरुचोष्णचदाभ्यासे परिवारे नियोजयेत्॥ ५०॥

द्रौपदी दमयन्ती च सीता कुन्ती विलासिनी।

रुक्मिणी सत्यभामा च देवकी मलयावती॥ ५१॥

नीलग्रीवा चला कद्रुर्विनता विनयावती।

महाश्वेताम्बिका रामा लीलाविद्रा महोदया॥ ५२॥

केकरा कालरात्री च गम्भीरोत्पलहस्तिका ।

एताः स्वकुलमार्गस्था जगत्यत्र चराचरे ॥ ५३ ॥

चतुर्विंशतियोगिन्यो  योगिनीकुलनायिकाः ।

अमेयमपि तत्पीठं वेद्यमाभिः स्वरूपतः ॥ ५४ ॥

सिद्धाभिः सिद्धिमायांति सेविताभिः परौजसा  ।

अङ्गवक्त्रक्रुधः कार्या न्यासस्थानेषु सर्वसु  ॥ ५५ ॥

चतुर्विंशतिकाश्चैव चतुःषट्स्वरसंस्थया  ।

एवमेकतमे यष्टे हुते ध्यातेऽङ्गवेदिना  ॥ ५६ ॥

कार्यमेकतमं कर्म नित्याद्यं वसुधाधिप ।

भुङ्क्ते सर्वमिदं संपदेकमण्डलदर्शनात्  ॥ ५७ ॥

दुष्कृतादापदो दाररोगवृन्दाच्च मुच्यते ।

मनुष्यजन्मनो भोगे रूपस्थं मण्डलद्वयम् ॥ ५८ ॥

त्रयमाखण्डलावाप्तौ हेतुरूपं प्रजायते ।

चतुर्भिर्भुवनैर्यष्टैः सुरज्येष्ठः प्रजायते ॥ ५९ ॥

पञ्चबिन्दुं च केशित्वं षत्वं षड्भिरवाप्नुयात् ।

सप्तभिः शतमध्ये तु चत्वारिंशच्चिवान्ततः ॥ ६० ॥

अष्टभिः प्रविशेन्मन्त्री ह्येवं वत्स रु वच्च नवादिभिः ।

ऊर्ध्वाधःक्रमयोगेन भुनक्ति स्थानसङ्गतिम्  ॥ ६१ ॥

मण्डलानां शते पूर्णे कालसंकर्षणी स्वयम् ।

योगिनीपरिवारा तु वीरसंघसमावृता ॥ ६२ ॥

ढक्काडमरुकध्वानैः प्रपूरितदिगन्तराः ।

सर्वर्यन्तः समागत्य प्रदत्ता ः स्वसमानता ॥ ६३ ॥

कुर्यादध्वानमखिलं अस्तु बलं तस्य लीलया ।

कनीयोऽथ समं मुख्यं जगत्यां यत् स्थितं बलम् ॥ ६४ ॥

तत् तत् सर्वमनायासात् लभते मण्डलेज्यकः ।

बलीयसीं महानागैः शूरामपि च रोधनीम् ॥ ६५ ॥

दृष्ट्वैतन्मण्डलं योधा जयन्ति युधि लीलया ।

तत् तत् साध्यमसाध्यन्तु विधाने तु महाध्वनि ः ॥ ६६ ॥

कठिनेऽस्मिन् सन्मतानां यन्न सिद्ध्यति सैन्धव ।

नान्यथा चास्य सौभाग्यं लघुकर्तारमादरात् ॥ ६७ ॥

वक्ष्ये त्वां धारकेभ्यस्तु पुरं नाम्ना महोदयम् ।

एकविंशत्प्रकृत्यादौ कोष्ठकात् सर्वतस्ततः ॥ ६८ ॥

वेधसः परतो धार्यः पञ्चविंशन्मितां ततः ।

कोष्ठैकमालां संलोप्य तदधो जीवपार्श्वतः ॥ ६९ ॥

कोष्ठैके कंठवचनं कृत्वाधः कोष्ठकत्रये ।

मध्याधोऽधोर्ध्वरेखां तु पूर्ववत् कण्ठे धारयेत् ॥ ७० ॥

कर्तव्यास्तदधस्ताश्च ग्रन्थयो ये त्रयः स्थिताः ।

तेषां मध्यगतो रेखा य सपक्षा सन्धिं लोपयेत् ॥ ७१ ॥

तत्पूर्वकोष्ठके रेखामूर्ध्वमेव विलोपयेत्।

पूर्ववद्याम्यतो लोप्या लोप्य तत्पूर्वकोष्ठके॥ ७२॥

प्रागुत्तरे तु वै रेखा परे सर्वं विलोपयेत्।

पश्चिमेऽप्यर्धमेवं हि सर्वं भंग्या प्रमार्जयेत्॥ ७३॥

ततोऽधो नवकं धार्यं कोष्ठकानां सितं समम्।

तन्मध्यरेखायत्नेन  मार्जनीया विपश्चिता॥ ७४॥

अधस्तात् तु पुनर्मार्ज्य कोष्ठकत्रयमध्यमाः।

शोभा रेखा समः कण्ठ ःशेषो द्वारप्रविस्तरः॥ ७५॥

सप्तादश ः कोष्ठकानि द्वाराणि परिकल्पयेत् ।

त्रिकोष्ठकस्मृतो मोक्षो मण्डलेऽस्मिन् महोदये॥ ७६॥

कण्ठबाह्याधिका रेखा भङ्गयोग्याः प्रमार्जयेत्।

पश्चिमं दक्षिणं वाथ वाहयेन्मण्डलाननम्॥ ७७॥

शेषाणि कण्ठयेद्धीमान् वामतन्त्रविशारदः।

दक्षिणं पूर्वमावर्त्य ततः शेषाणि वर्तयेत्॥ ७८॥

पञ्चविंशतिग्रन्थिस्थं कार्यं सुश्रोणि अम्बुजम् ।

बालहेलिप्रतीकाशमष्टपत्रं सकर्णिकम्॥ ७९॥

बहुवर्णमेकवर्णं कार्यं शोभानुरूपतः।

यो यस्मिन् राजते वर्णस्तं तत्रैव निवेशयेत्॥ ८०॥

स्वेच्चया वर्णविन्यासौ योगपीठादिकः स्मृतः।

महोदयस्य सिद्धीश तन्त्रे  रावण पूजिते ॥ ८१ ॥

चतुःषट्दलपद्मादिभेदसाधारणं मतम् ।

पुरं महोदयं ह्येतन्महोदयविधायकम् ॥ ८२ ॥

उक्तयोगासनारूढं मालामूर्त्तिमयोदयम् ।

महोदयेन बीजेन विमलाद्येन सङ्गताम् ॥ ८३ ॥

पाशाङ्कुशधरां देवीं सुरूपां नवयौवनाम् ।

बन्धूककुसुमाभासां दिव्यचन्दनभूषिताम् ॥ ८४ ॥

कपालपट्टिशव्यग्रां त्रिचक्षुश्चतुराननाम् ।

भेकोल्लसन्महोत्तुङ्गधम्मिल्लोल्लासलासिताम् ॥ ८५ ॥

प्रबालकमयाशेषदिव्यालङ्कारशोभिताम् ।

महारजतसंरक्तवासोयुगविधारिणीम् ॥ ८६ ॥

पूजयेन्नाभिमध्यस्थां परिदूत्यष्टकं न्यसेत् ।

द्वादशारान्ततुर्येण विहरं निजशम्बरैः ॥ ८७ ॥

कुङ्कुमाद्यैः सुगन्धैस्तु पुष्पैर्जात्यादिभिः प्रिये ।

शर्करागर्भपक्वान्ननैवेद्यैः क्षीरसम्भवैः ॥ ८८ ॥

तिक्तहीनैः फलैर्भक्षैः  प्रभुभोज्यैर्हरामिषैः ।

द्राक्षाखर्जूरफलजै रसैर्नानारसासवैः ॥ ८९ ॥

मणिभूमिरुक्मपात्रैः कांस्यसौवर्णपात्रकैः ।

सर्वोपचारैर्देवेशीमुपचर्यविधानवित् ॥ ९० ॥

सुविकासिमहाशोकलतागृहसमाश्रितम् ।

पुंस्कोकिलकलालापिनन्दनान्तःप्रतिष्ठितम् ॥ ९१ ॥

चिन्तयेद् द्वारपालञ्च सञ्जयं शौर्यकारिणम् ।

महेक्षुधनुषं पुष्पपतन्त्रिकिरणारतम् ॥ ९२ ॥

विपञ्चीमुरजध्वानकम्बुकोलाहलालये ।

गणिकागणसंकीर्णप्रेक्षणीयविनोदकम् ॥ ९३ ॥

वराङ्गनाकरोत्क्षिप्तैर्वीज्यमानं सुचामरैः ।

ध्यायेन्महोदयं देवीं महोदयविधायिनीम् ॥ ९४ ॥

यो सौ गम्भीरमेघाद्या विद्युल्लेखा समाकुला ।

मत्तद्विरदगण्डाभ्यां पन्मदकणाकृतिः ॥ ९५ ॥

धारासारं विमुञ्चन्ती तामूर्ध्वे प्रविशन् स्मरेत् ।

तस्या व तस्याः यच्चोपगं सर्वं तद्ध्यायेत् कुङ्कुमच्चविम् ॥ ९६ ॥

तर्पयेचापि वह्निस्थां मन्त्री त्रिमधुरेण तु ।

मधुराढ्येन चाज्येन पयसा वा प्रसन्नया ॥ ९७ ॥

फल्गुषा वीरदेहेन मार्गकौशिकजेन वा ।

नम्रा नद्धजटा येन बालमाल्यधरेण वा ॥ ९८ ॥

मायूरधार्तराष्ट्रेण लावकाद्येन सुव्रत ।

कुम्भमण्डलवह्निस्थे कृते कर्माणि निश्चिते ॥ ९९ ॥

शिशुकृत्यैव निर्णीतं ततस्तमभिषिञ्चयेत् ।

कुम्भार्घपात्रशंखेन शुक्त्या रम्भादलेन वा ॥ १०० ॥

त्रेधापलं समादाय जलस्थलगरुत्मताम् ।

भृतेन पल्लवौ तेन गोक्षीराण्यंवुनाथवा ॥ १०१ ॥

हृदा कल्पितवीर्येण कपिशाद्यासनांगिना ।

चक्रालातसटाध्वस्ततमोमयगुणात्मना ॥ १०२ ॥

महोदये गुणशताद् विशेषामलमूर्त्तिना ।

योग्यं संसेवयेच्चिष्यं भाण्डेन तु घटादिना ॥ १०३ ॥

दक्षिणस्यां महेशान्या दिशि मण्डलके शुभे ।

नन्दिकावर्त्तसंचन्ने चित्रवर्णकराजिते ॥ १०४ ॥

पयःपूर्णघटस्त्रावे सूत्रकण्ठविधारिणि ।

मङ्गलानि तु भाण्डानि प्रवालाद्यानि सर्वदा ॥ १०५ ॥

पिष्ठातकादियुक्तानि शस्यन्ते शुभकर्मणि ।

चतुःषष्टिमितां कृत्वा कोष्ठकासु समां बुधः ॥ १०६ ॥

मध्यकोष्ठकतुर्येण वर्त्तयित्वा सरोरुहम् ।

कोष्ठमानां ततो वल्लीं समन्तात् परिवर्त्य च ॥ १०७ ॥

वीथीसंलग्नमालायां ग्रन्थिपञ्चकमध्यगाः ।

रेखाः प्रमार्जयित्वा तु तद्बाह्ये ग्रन्थिसप्तके ॥ १०८ ॥

तालुकाः पुष्पसर्गन्तु समानन्दीनि धारयेत् ।

तत्र पीठं समं द्रौमं सितवासोऽवगुण्ठितम् ॥ १०९ ॥

स्थाप्य तस्मिन् स्थितस्याणो रूपिणीभिः सह स्त्रिभिः।

कारयेत शुभे लग्ने निर्मथ्यन कथं बुधः॥ ११० ॥

शङ्खतूर्यरवैः रम्यैर्गेयैर्मङ्गलपूर्वकैः।

कन्यानिर्मत्सने शस्ता विलासिन्यो विशेषतः॥ १११ ॥

वासोऽलङ्कारगन्धाढ्याः सदासौभाग्यकर्मणि।

समुद्रमासुरी नैवं कृतं निर्मत्सरं सदा॥ ११२ ॥

दीप्ताङ्गारविनिक्षिप्तं चाकृष्याशेषदोषकृत्।

सप्तशो ह्यारनालेन साङ्गारेण निषेचितम्॥ ११३ ॥

आममांसादिभिर्वीरं निर्मत्स्य चगलैस्तथा ।

निर्मत्सयेद्विचित्रैस्तु रचितैर्वीरपूर्वकैः॥ ११४ ॥

ततो पक्वशरावस्थैर्विचित्रैर्वटकौदनैः ।

कामिनीयुगलं हृष्टं पुनः पश्चात् प्रतिष्ठितम्॥ ११५ ॥

पुनस्तया गृहीतं तु पाणिभ्यां मल्लकद्वयम्।

विक्षिप्ताभ्यां परिभ्राम्य तदनूद्य समर्पयेत्॥ ११६ ॥

ततः प्रागुदितार्घेण निर्मत्स्यामत्स्यताक्षतैः।

सितव्याकोशमूर्द्धानं स्नापयेत् साधकं गुरुः॥ ११७ ॥

ब्रह्मवेतालकरवैर्घटै रक्तघटक्रियैः ।

समबीजतया यस्तु चन्द्रमौलिदिगन्तगैः॥ ११८ ॥

ततोऽन्ते चन्द्रमतुलं हृद्यं स्वच्चाम्बुना स्नपेत्।

केतकारत्नगर्भां तु कृत्वा मूर्द्ध्नि पिटालिकाम्॥ ११९॥

तदन्ते तु गुरुः साक्षादभिषेकघटेन तु।

महोदयातनुध्यानसमर्पितमनास्नपेत् ॥ १२०॥

निर्मत्स्यारत्निदीपैश्च पञ्चस्त्रिभिरनेकधा।

देवीनेपथ्यधृक् प्राणान् धृत्वा देव्यै प्रणामयेत्॥ १२१॥

वासोभिर्ह्यन्तरेह्यन्तः प्राक्प्रोक्तैः पीठमस्तकैः।

दत्वा पद्मासनं पूर्णमब्जोर्घ्वे विद्यया शिशुम्॥ १२२॥

देहभूतं प्रविष्टस्य दूत्यष्टकमथो ददेत्।

शिरश्चक्षुर्गुहाह्लादाभिगुह्यो रूपपादुकाम्॥ १२३॥

वामदक्षिणयोगेन गुल्फजानुप्रतिष्ठितम्।

किङ्कराणां चतुष्कन्तु विन्यसेदाद्यमादरात्॥ १२४॥

महोदयं समावाह्य तदङ्गानि प्रविन्यसेत्।

अनेनाब्जदलस्थायिदूतीवृन्दे प्रपूजिते॥ १२५॥

विदिक्पत्राद्यगाः पूज्याः किङ्करा वह्निपूर्वगाः।

परिधाप्या कल्पजालमपूर्वं रक्तवाससी॥ १२६॥

ततः समर्पयेन्मन्त्रं प्रोक्तेनान्यतमेन तु।

मैरेयरूप्रपूर्णेन पात्रेणालब्धबिन्दुना॥ १२७॥

महोदयाः पुरः स्थित्वा प्राणचारे पुनः पुनः।

स्वशिष्ययोः स्वविज्ञाय विद्योदयमनातुरः॥ १२८॥

प्राणं पूरकसंयोगात् प्राणाद् वाथ विरेचनात् ।

विद्याचक्रे स्थितो मन्त्री शिवचक्रावलम्बकः ॥ १२९ ॥

आत्मचक्रच्युतो मन्त्रं स्वशिष्याय समर्पयेत् ।

ततः संश्रावयेत् सर्वान् नाराचांश्च प्रसिद्धये ॥ १३० ॥

शिवाप्तशिवभक्तानां समयी भव पुत्रक ।

दिव्यद्रव्यगुणोत्कृष्टकन्यास्त्रिशुभकर्मणाम् ॥ १३१ ॥

लिङ्गिनामस्थिधारीणां भस्मिनाञ्च जुगुप्सिनाम् ।

नमस्याभैरवे तन्त्रे स्वगुरोश्च विशेषतः ॥ १३२ ॥

योषितेऽप्यथ धारित्वं वक्त्रित्वं तत्स्वभावता ।

भूयिष्ठं स्मरणं स्थाणोस्संस्तवः समयो परः ॥ १३३ ॥

सर्वमुल्लङ्घयेन्मन्त्री यद्गुरुं भूतलादपि ।

गुरुं लुलादपि लघुं नानुसंस्कारदं क्वचित् ॥ १३४ ॥

वीरयोषित्कुमारीभ्यो वामहस्तेन पूजनम् ।

सर्वं सर्वं सुकर्तव्यं मन्त्राणां च विशेषतः ॥ १३५ ॥

श्रुत्युक्तविपरीतन्तु प्रतितंत्रं सुर गणार्चिते ।

संस्कृतस्त्वेवमाकर्ण्य समयात् स्वामिनोदितान् ॥ १३६ ॥

निर्वृतःस्यात् प्रदानेन धनजातादिना प्रिये ।

स्वांशमन्त्रचरुं दत्तं गुरुणा प्राशयेत् ततः ॥ १३७ ॥

अनेन क्रमयोगेन प्राप्नोति महतीं दयाम् ।

कुरुतेऽस्यापि तस्याशु स्यात् सौभागमहोदयः ॥ १३८ ॥

गोगोचरगते तस्मिन् न निस्त्यक्तमना भवेत् ।

पल्लवास्तरणे नूनं भविष्यति सदासुखम् ॥ १३९ ॥

श्रेयांसि गुरुज्येष्ठानां यत्रासन्ने भ्रमन्ति हि ।

जपानुस्मरणं न्यासं न कुर्यात् तत्र साधकः ॥ १४० ॥

सुषिरबीजमनङ्गजितश्रियं जपनियोगरतस्य चकासतो ।

वितरतीह सुरासुरयोषितां हृदयसद्मनि नित्यतरां स्थितिम् ॥ १४१ ॥

किमिह रूपधनाश्रययौवतैर्मदनशास्त्ररहस्य निवेदनैः ।

युवतिवश्यकृतेति समादरो मनसि ते यदि वीरमहोदया ॥ १४२ ॥

निर्मत्सरादिकं कर्म यत् तस्मिन् कीर्तितं मया ।

शस्तमाना एकदापीं भूभृता ं चापि तत् सदा ॥ १४३ ॥

शश्वत् प्रक्रियमाणं हि न तु विघ्नापनुत्तये ।

एवमेतत् क्रमायातं महोदयविधायकम् ॥ १४४ ॥

महोदयार्चनं कृत्वा कृतवीरविधिर्गुणी ।

क्षमापयेत देवेशीं निर्माल्याय नये कृते ॥ १४५ ॥

शोधयेदुपलेपेन शकृता चामृताधरम् ।

इत्यवाप्य गुरुतो महोदयां पुण्यवान् भजतीतां विधानतः ॥ १४६ ॥

यो नरः स खलु सर्वसंपदो लीलया जुषति भैरवोदिताः ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्त्रे प्रथमषट्के श्रीकालसंकर्षण्यामेकोनविंशतमः पटलः॥

१९॥

विंशतिः पटलः॥

श्रीभैरव उवाच।

अथातः श्रूयतां वत्स यथा सिद्ध्यति भैरवी।

सिद्धार्थां वाप्तिदा नारी यथा वाचः प्रजायते॥ १॥

तथा ते संप्रवक्ष्यामि सन्देहविनिवृत्तये।

रम्ये स्वाभिमते स्थाने भूतधामादिके नृप॥ २॥

जप्त्वा महोदयां लक्षं हुत्वा चैव दशांशतः ।

कृतध्यानपरो योगी ह्यसिधाराञ्चरेद् ब्रतम्॥ ३॥

रमणीं मनोहरां प्राप्य सर्वालङ्कारभूषिताम् ।

सुभक्तां श्रद्दधानाञ्च सुरूपां नवयौवनाम्॥ ४॥

दिवा कुत्सितदिग्धाङ्गीं रक्तां शुद्धधृतां ।

उमारूपधरो मन्त्री गुप्तधाम्नि सुतल्पगः॥ ५॥

रुढनिक्षिप्तजननसुशिरावर्तने रतः।

अनन्यवासिनो देव्या रूपके परमेश्वरे॥ ६॥

चुम्बनालिङ्गनासक्तश्चरेद् वासरसप्तकम्।

व्रतमेतद् दुराधर्षं दुश्चरं ब्रह्मणोऽपि हि॥ ७॥

निर्णीतोऽस्य महायोगी सर्वकर्मरुहो भवेत्।

चरेद् वालक्षमेकन्तु देवीनेपथ्यधृङ् मुनिः ॥ ८ ॥

विचित्राभरणोपेतः गात्रेषु शिवरेतसः ।

विशुद्धालकहारेण कुण्डलाभ्यां विराजितः ॥ ९ ॥

विंशत्येकदिनेनाग्रां चरेद् वातन्महोदयम् ।

जपध्यानाभियुक्तस्तु व्रतमामिधभुग्नरः ॥ १० ॥

स्वल्पकस्य जुषी गुप्तो सर्वदृक् सङ्गवर्जितः ।

ततः कृत्वा सुविस्तीर्णं सर्वसंभारसंभृतम् ॥ ११ ॥

व्रतोत्तरकृतं देव्यै व्रतचर्यां निवेदयेत् ।

ततो जपेत् पुनर्लक्षं मानुषीणां प्रसिद्धये ॥ १२ ॥

द्विगुणं च परेलीनां रक्षः स्त्रीणां त्रिरूपिणाम् ।

चतुर्गुणं च यक्षीणां गान्धर्वीणां तु पञ्चधा ॥ १३ ॥

क्रीडा महेन्द्रकन्यानां जपं कुर्यात् समाहितः ।

प्रजापतिपुरंध्रीणां लक्षाणां सप्तकं जपेत् । १४ ॥

स्वचिन्तयोषितो मन्त्री जपेल्लक्षाष्टकं समम् ।

प्रजप्तैर्नवभिर्लक्षैः क्ष्माद्यौरभ्यन्तरस्थिताः ॥ १५ ॥

कामिन्यो वशमायान्ति क्षामोदर्यो मृगेक्षणाः ।

दशभिः सर्वसंस्थानस्थिताः प्राप्नोति संपदः ॥ १६ ॥

लीलाधत्यो विशालाक्षो लक्ष्म्यावेशानुरागया ।

आलिङ्ग्यते महेशस्य लक्षैकादशकेन तु ॥ १७ ॥

महोदयास्वरूपेण मन्त्री प्राप्तमहोदयः।

सर्वभोगान् समश्नाति स्वतन्त्रो सुवलितेऽध्वनि ॥ १८ ॥

कलौद्वादशभिर्जप्तैर्वीरमन्त्रस्य सुव्रत।

वस्तुविश्वेन तच्चान्यद् विद्यते यत् सुदुर्लभम् ॥ १९ ॥

लक्षद्वादशकोटीनां भविष्यत्यनुसेविनाम्।

अर्घार्गलां विनिर्भिद्य मलवज्रमयीं दृढाम्॥ २० ॥

स्वांशद्वारं न कस्येयं विद्योद्घाटयते जपन्।

कौकन्दरीं क्रियां वध्वा स्त्रीयोनावुषितं यदि॥ २१ ॥

जराव्याकोशसंकाशमनन्तं चिन्तयेद् गिरिम्।

स्रवन्तं चोषणं स्वच्चं खगवच्च विभावयेत्॥ २२ ॥

अनन्यवासनो व्यग्रस्तत्र तन्मयतां  गतः।

कामिनीं क्षणयुग्मेन करोति मदविह्वलाम्॥ २३ ॥

ताम्रनेपथ्यदृङ् मौनी शय्यायां संस्थितो निशि।

हृत्पङ्कजसमावस्थां दूतीकिंकरसंयुताम्॥ २४ ॥

प्रत्यक्षीकृत्य ध्यानेन ततः साध्यं विचिन्तयेत्।

पाशेनाक्रोडितं कण्ठे भिन्नं कुब्जेन मस्तके॥ २५ ॥

आकृष्यं तं प्रहृष्टाभिर्दूतीभिः  किङ्करैस्तथा।

संचिन्त्य तं समायातमाक्रान्तं चरणेन च॥ २६ ॥

उपयातं तु रञ्जीर मुखरेणाब्जवर्चसा सा।

ध्यानेनानेन साध्वीनां निश्चलेन गुणात्मना ॥ २७ ॥

विश्लेष्य मच्चरीरान्तः क्लिश्यतेऽथापि पार्वती ।

सुशिरं रक्ततत्वान्तमतिमार्गविनिर्गतम् ॥ २८ ॥

साध्यं तं चिन्तयित्वा तु तेन साध्यं विचेष्टयेत् ।

व्यूहमाकर्षयेच्चीघ्रं तन्तुनैव विनौकसाम् ॥ २९ ॥

प्रविष्टं बिन्दुमार्गेण तत्कलाजालमालितम् ।

हृच्चक्रं सामरस्यत्वादहन्यहनि तन्मयम् ॥ ३० ॥

कुरुते यः समाधिस्थस्तस्य ः तस्य शब्दाष्टकेन तु ।

मुक्ताच्युतमहावक्षा लक्ष्म्या याति दासताम् ॥ ३१ ॥

शूलकं दलमध्यस्थं तत्स्थं कुङ्कुमवारिणा ।

आलिख्याष्टदलं पद्मं बीजं तन्नाभिमध्यगम् ॥ ३२ ॥

बीजगर्भन्तु विन्यस्य प्रमोदपुटितं ततः ।

मन्त्रान्तः सर्वतोभद्रमिदमेव समालिखेत् ॥ ३३ ॥

सदा प्रमुदितं लिख्य सर्वेषु दलमात्रसु ।

पार्श्वेषु वेष्टयेत् पश्चात् सप्तधा बीजमायया ॥ ३४ ॥

ततो गुप्तप्रदेशस्थमहन्यहनि मन्त्रवित् ।

मालत्याद्यतिसौगन्धैः स्त्रग्भिः संपूजयेन्मुदा ॥ ३५ ॥

साध्यस्य जायते चिन्ता प्रथमे दर्शने प्रति ।

द्वितीयेन्वेषणोत्सादे प्रेषयेदभिसारिकाम् ॥ ३६ ॥

तृतीयेऽह्नि गोनाभितापितांश्च विषानुदम्।

वदनाम्बुप्रजालाब्जकुमुदानीव सेचयेत्॥ ३७॥

चतुर्थे दीर्घनिश्वासी मालायं वा प्रजल्पति।

मदनाग्निगृहीतस्तु पञ्चमस्वरगीतगः॥ ३८॥

अन्वग्घरिति सोऽत्यन्तं क्षमात्यक्तस्तु पञ्चमः।

उन्मत्तचेष्टितावस्थः षष्ठे स्थाने परिच्युतः॥ ३९॥

भ्रमते ग्रामारण्यांस्तु वीरदर्शनलालसः।

अशुचिः स्मरणामात्रप्रपीडितो व्याधिभिः स्यात्॥ ४०॥

अष्टमेति सुदुःसहैर्नवमे च भवेज्जडः।

कोष्ठवन्निश्चलाकृतिः सप्तमे त्यक्तभोजनः॥ ४१॥

साध्यशब्दो भवत्याशु ध्यायन् स्याद् दशमे हनि।

तस्माद्दिनत्रयं कार्यं यन्त्रमेतद् विपश्चिता॥ ४२॥

अन्यथोन्मत्तरूपः स्याद् भिषक् स्याज्जगतोऽस्य कः।

खादिराङ्गारवह्नौ तु साधनत्रयतापनात्॥ ४३॥

आकर्षयति कामिन्यः सप्ताहाच्चतयोजनात्।

मध्यान्ते मोहकृत् प्रोक्तमुन्मादयति रक्तगम्॥ ४४॥

तीक्ष्णतैलविषाक्तन्तु वपुषो दाहकृन्मतम् ।

क्षीरान्तः शान्तिमाधत्ते मुष्टिं त्रिमधुरान्तगम्॥ ४५॥

आयुःप्रवृद्धये मन्त्री विश्रमेदुपशान्तये।

नृपतस्करतः खिम्भ्यो भयाद्धेतिसमुद्भवान्  ॥ ४६ ॥

त्रायते तन्महायन्त्रं मधुरत्रयसंस्थितम् ।

द्विषकृद्घुटिकान्तस्थं मृत्युकृच्चापि मध्यगम् ॥ ४७ ॥

दीर्घकण्ठसकृन्मध्यपूजितं गमने हितम् ।

अथ किं वहुनोक्तेन शान्तघोरघनाश्रयम् ॥ ४८ ॥

यन्त्रमेतन्महीपाल सौम्यं क्रूरं तु साधयेत् ।

यन्त्रानीतं समाख्यातं तन्त्रेऽस्मिन् यत् सुविस्तरम् ॥ ४९ ॥

प्राङ्  मया कैकशेशाय तुष्टेन गलकृन्तनात् ।

तेषां मध्ये समाहृत्य सारं तद्भूरिविक्रमम् ॥ ५० ॥

प्रकाशितमिदं तुभ्यं हैमवत्या अनुग्रहात् ।

मणीनां कौस्तुभो यद्वद् शतृणां मृत्युदायकः ॥ ५१ ॥

ग्रहाणां  भानुमाली च तेजसां च दृगुष्णगुः ।

तथैतत् सर्वयन्त्राणां यन्त्रं मुख्यमुदाहृतम् ॥ ५२ ॥

शक्तिभिः सुप्रसन्नाभिरनुध्यातो यदा नरः ।

तदा महोदयां लेभे लेभे यन्त्रमिदं च यत् ॥ ५३ ॥

महाराजेनाग्रमिदं गोरोचनसवेणिकम् ।

योगिनीरजसा विद्धं लिखेत् तेन कुशेशयम्  ॥ ५४ ॥

पत्राष्टकसमोपेतं कालिका नाम गर्भिणम् ।

संलिख्य नाभिमध्यस्थं दलेऽष्टे कलिकां ततः ॥ ५५ ॥

योगिनीवेष्टितं व वेष्ठितं ह्येतं ह्येतद् यन्त्रं भूर्जप्रतिष्ठितम्।

स्वनासासृक्समोपेततमश्वत्थान्तं निधापयेत्॥ ५६॥

पत्तनं नगरं ग्रामं पुरं घोषं महापुरम्।

उपन्नस्थोऽपि योगीन्द्रः कर्षयन्नाम लेख्यतः ॥ ५७॥

पुरमेकाररूपन्तु लिख्य तत्कर्णकोटिषु।

स्वतः कण्टकिनं कृत्वा नामान्यंभःप्रतिष्ठितम्॥ ५८॥

साध्यस्य लिखितं गर्भे लिखेद् दिक्षु महोदयाम्।

गोरोचनेन भूर्जे तु सर्वेस्मिंल्लिखिते सति॥ ५९॥

वृषोऽन्धशृङ्गं शृङ्गस्थां रोधसः सरितोऽब्जगाम्।

सप्ताम्बुजवनस्थां तु वल्मीकशिखरालयाम्॥ ६०॥

मृदस्थिकृमिकेशादीन् कृत्वाकृतिं बुधः।

कारयेन्मत्स्यरूपन्तु प्रयोगं तद्धृदि क्षिपेत्॥ ६१॥

तदस्थिनलिकाक्षिप्तं ततो गुमूत्रमध्यतः ।

संस्थितं दिवसान् सप्त पूजयेत् सुसमाहितः॥ ६२॥

त्रिसन्ध्यं चानुद्विग्नो हेतुभिः सप्तमेऽहनि।

नान्यः पुंसगणावृन्दं कर्षयेल्लिखितान्वयम्॥ ६३॥

करालगलके वद्धमेतदुच्चाटकृत् स्मृतम्।

साध्यनाम विनिक्षिप्य योगिनीजठरस्थितम्॥ ६४॥

वेष्ठयेत् सप्तवारन्तु या मात्रालम्बिनी तया।

स्वनाम्ना तु समाकृष्य ं तेननूद्वध्य योषितः ॥ ६५ ॥

लिखित्वां धूलिकायान्तु त्रिसन्ध्यं ं खदिरानले ।

तापनाद्वशमायाति भार्या वाचस्पतेरपि ॥ ६६ ॥

द्विपुटे ग्रन्थिहीनेऽपि भूर्जे विरमशालिने ।

गोसकृद्रसगो कुन्थ काश्मीरजद्रवेण तु ॥ ६७ ॥

चतुर्दिक्षुः थधृन्नाम पूर्णचन्द्रेण वेष्टयेत् ।

तद् बाह्ये मण्डलाविष्टां लिखेन्मालालिपिं क्रमात् ॥ ६८ ॥

उत्तमाम्भसिकारुद्धं क्षिपेदङ्कुशं मूर्द्धनि ।

मरालषट्कलाधारां सूचीं वा दिविराजते ॥ ६९ ॥

तद् विनिक्षिप्य गर्भे तु तत् सर्वं पटलस्य तु ।

शिरोधिकारचन्द्रे तु ध्वनिं वीर्यवतो लिखेत् ॥ ७० ॥

रुद्रपादान्धतामिस्त्रनितम्बस्य महात्मनः ।

रक्षैषा वार्षिकी यस्य देहे तिष्ठति सैन्धव ॥ ७१ ॥

न तस्य भूतवेतालाः शाकिन्यो ग्रहपूतनाः ।

दृगङ्जलिनो भुजगाः पलाशिद्वेषिणोऽहिताः ॥ ७२ ॥

प्रभवन्ति महाघोरा न चाप्यामयजातयः ।

सातङ्कमविविक्तं च सुप्तं क्रुद्धं प्रहर्षितम् ॥ ७३ ॥

प्रलुप्त समयाचारं प्राप्तच्छिद्रमपीश्वरि ।

नार्चयन्ति दुराधर्षा रक्षितं रक्षयानया ॥ ७४ ॥

अनया रक्षितं चैव त्रैलोक्यं दशकन्धरः।
निर्जित्यावज्ञया यातो लङ्कां स्वभुजयार्जिताम् ॥ ७५॥
समयच्च्युतस्य विहृता यदा शान्तेर्मया पुनः।
रामेणापि तदानी तं तत्तस्यायुर्यमक्षयम्॥ ७६॥
कालसंकर्षणी नाम रक्षेयं शासनादिषु।
लिख्य वाचायुषोवृद्धिमनन्तां जनयेद् गिरिः॥ ७७॥
अथ दूतीगणस्याग्रे तं त्रिकालागमाश्रितः ।
योजयेत् तस्य वक्ष्यामि फलं भिन्नपदाश्रितम्॥ ७८॥
वैरिञ्चो वा मम ज्येष्ठस्त्रिलक्षं परिवर्तयेत्।
मूलदूत्यक्षरं यन्मे स भुङ्क्ते भूमिमण्डलम्॥ ७९॥
रौद्रीसंघा द्वितीयार्णोराविभूतिं प्रसाधयेत्।
तारकस्य तृतीयोऽपि ह्यसृजन् तैजसं बलम्॥ ८०॥
संयोगान्मुञ्जकेशिन्याश्चतुर्थ्यार्णोनिलंत्वदः।
धर्मघोषाश्रया जप्ता स्वपदं पञ्चमी ददेत्॥ ८१॥
षष्ठी चापि शुभा शीर्या सङ्गाद्वीर्यं हिमस्तुतः ।
तस्याः रूपाधिकारित्वमकरोज्जयरूपतः॥ ८२॥
सप्तमी चर्ममुण्डाया संघाज्जप्त्वा विवस्वतः।
स्वरूपमभजत् पारमपरं चाधिकारकृत्॥ ८३॥
आमर्दकाङ्घ्रिसं स्पृष्ट्या प्रजप्ता चाष्टमी नृप।

पुंस्तत्त्वंसरहस्यं च निःस्वरूपं चकाशयेत् ॥ ८४ ॥

आदितो लक्षवृद्ध्या तु जपोऽयं कीर्तितो मया ।

सर्वावाप्तिकरः पुंसां कालसंकर्षणीमते ॥ ८५ ॥

चतुर्णां किङ्कराणान्तु जपलक्षे कृते सति ।

वश्याकर्षणप्रेष्यत्वं सर्वजन्तषु निवर्हणम् ॥ ८६ ॥

जपत्रयप्रयोगस्तु क्रमशः कर्मसिद्धिदः ।

येन येन प्रकारेण चक्रमेतन्महोदयम् ॥ ८७ ॥

योज्यते तेन तेनैव विधायै व ख विदधै तन्महोदयम् ।

महोदयं प्राप्य तु कामभोगानम्भोजसौभाग्ययुतो हि को नु ॥ ८८ ॥

लक्ष्मीविधानान्न भुनक्ति लक्ष्मीः ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशति साहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां विन्शतिमः पटलः ॥ २० ॥

एकविंशतिः पटलः

श्रीभैरव उवाच

अथातः श्रूयतां वत्स सर्वारम्भकृताश्रये ।

भाग्यहीने यथा लक्ष्मीर्न निकायं समाश्रयेत् ॥ १ ॥

तथा वच्मि विधानन्तु पारम्पर्यक्रमागतम् ।

परेण भैरवेनादौ पूजितं भुवनाधिपैः ॥ २ ॥

अधिकारवशात् प्राप्तं मयाप्यस्वरभैरवान् ।

योगिनीकमरुद्धन्तु मालाद्यं वर्णपञ्चकम्॥ ३॥

चेतोधामादि दृष्टान्तं भवेत् पापं च पञ्चकम्।

प्राक् चोदितं तमालन्तु स्फुरद्वह्निकरोद्गिरम्॥ ४॥

अनन्तचर्मलालञ्च दशमेन प्रकल्पयेत्।

पद्मं जलादिकिञ्जल्कं कर्णिकाबीजमण्डलम्॥ ५॥

धनुषा कल्पयेन् मन्त्री गावस्तच्चरसेन तु।

वपुर्मालामयी कार्या गुह्यशक्तिपुटस्थितम्॥ ६॥

ह्ल्लक्ष्मीवाचकं प्रोक्तं नमोऽन्तं प्रणवादिकम्।

लक्ष्म्यर्थं पूजयेल्लक्ष्मीं लक्ष्मीमण्डलमध्यगाम्॥ ७॥

कालीकलाकलापेन समन्तात् परिवारिताम्।

जयद्रथ उवाच।

लक्ष्मीमण्डलविन्यासं न्यासं लक्ष्म्याः कलाक्रमम्॥ ८॥

सनामं श्रोतुमिच्चामि ब्रूहि चन्द्रार्द्धशेखर।

श्रीभैरव उवाच।

पद्मवक्रकृतकर्ममण्डले ग्रन्थितुर्यशत वर्तने कृते॥ ९॥

धार्य वेधसि सचिह्नलक्षितात् कोष्ठकान्सकलतत्वसंख्यया ।

तत्पुरे युगलकोष्ठमानया पूर्ववद् विहितनत्रिवर्तनः ॥ १०॥

तत्पुरेऽपि युगकोष्ठलिप्सयां वर्त्तयेद् विहरणाय वीथिकम् ।

क्रान्तिबाह्यगतकोष्ठकत्रिके द्वारतुर्यरचनां विभाजयेत्॥ ११॥

सर्वकर्णगृह    तुर्यगे बाह्यबस्तुदशसद्गृहाश्रिते ।

अन्तयोर्मदनबाणसंख्यया धार्य षट् तदनुमध्यगान् हरेत् ॥ १२ ॥

सद्मनामथ चतुष्ककन्दरे लोपयेद् ध्रुवगतं समन्ततः ।

तत्परस्य युगलस्य मध्यमां लोप्य जीवविगतां हि रेखिकाम् ॥ १३ ॥

अन्तरस्थलतया समानगं वर्त्य बाह्यमपि सल्लतात्रयं ।

लोपयेत् सकललोप्यलक्षणं यल्लतासु बहिरन्तरस्थितम् ॥ १४ ॥

एवमेतदखिलं हि लक्षणं प्रोक्तमस्य कठिनस्य सुव्रतम् ।

षोडशाच्चदकुले मया कृते पूर्वदृष्टविधिना विवर्तयेत् ॥ १५ ॥

कण्ठानां बाह्यरेखाणां लोपालोपेऽपि लक्षणम् ।

विद्यते वाहयेद्वारं याम्यं पश्चिममेव वा ॥ १६ ॥

सनन्दिं बुधविम्बाभं श्रीवत्समतिशंसितम् ।

शेषशोभावसानन्तु भवते देशिकेच्चया ॥ १७ ॥

लक्ष्मीमण्डलमेतद्धि सर्वकामफलोदयम् ।

शिरश्चेदे महातन्त्रे कथितं सिन्धुभूपते ॥ १८ ॥

एवं निष्पन्नधामा तु विविक्ताङ्गः प्रसन्नधीः ।

मुक्तादामवितानाढ्यं घण्टाचामरमालितम् ॥ १९ ॥

क्षीरवृक्षसमुद्भूतं रागादिद्वारशोभितम् ।

गिरितीरकृतोपान्तपताकाटोपाराजितम् ॥ २० ॥

विचित्रतैलवर्त्यान्तर्दीप्तं सा द्रवमालया ।

प्रविश्य यागनिलयं कृतपूर्वक्रियाक्रमः ॥ २१ ॥

पर्जन्यास्योपविष्टस्तु हुंफडन्तायुधेन तु ।

पानीयं शोधयेद्वह्निं सयमण्डलमालिना ॥ २२ ॥

प्रणवेनावसानेन प्लावयेच्च सवौषडा ।

विचिन्त्य क्षीरडिण्डीररूपिणीं विपुलां सुधाम् ॥ २३ ॥

ततः कोपात् तदाटोपां कारयेत् स्वलतायुगाम् ।

दशसप्ताक्षरां न्यस्य करजासु कलां न्यसेत् ॥ २४ ॥

वामतर्जनिकाद्यास्तु यावत् सव्यां प्रदेशिनीम् ।

सृष्ट्याद्या न्यस्य सव्यान्तो यावद्वामां प्रदेशिनीम् ॥ २५ ॥

भूयोऽप्यनुक्रमाद् देया वस्तुतस्तुशिवादयः ।

ततः स्त्वावाहयेल्लक्ष्मीं मालांगव्यापिनीं प्रिये ॥ २६ ॥

कृतस्त्वङ्गुष्टयोः शान्तं देशिन्योस्तत्परः शिवः ।

अन्तयोर्जलिनीं न्यस्य न्यसेच्चैव तदन्तयोः ॥ २७ ॥

पुरुजातिमहाज्योतिः सुरयोरावृतं शुभम् ।

संवर्त्ततरणिव्रातं तेजोऽस्त्रं च कनिष्ठयोः ॥ २८ ॥

विन्यस्य ध्यायेन्मुक्तिं लक्ष्म्या तत्तत्स्वरूपया ।

प्राणायामादिके तस्मादन्तःकरणपश्चिमे ॥ २९ ॥

कृते कर्मणि लक्ष्म्यार्घं षडङ्गं विदधेद्गुरुः ।

ततः शक्तिकराद्यन्तु लक्ष्मीकुम्भावसानगम् ॥ ३० ॥

दृष्टान्ताद्येन कर्तव्यं कर्म सर्वं सुमेधसा।

कृत्वात्मभुवि विश्वन्तु पञ्चगव्येन गन्धिना॥ ३१॥

अनन्तं तत्र विन्यस्य द्वात्रिंशद्भुवनाधिपम्।

शतकोटिप्रविस्तीर्णामनन्तां कर्मरूपिणाम्॥ ३२॥

विन्यस्याव्यक्त चरमं दीर्घनालं प्रविन्यसेत्।

नरादिकण्टकाटोपसमत्वागतमण्डलम्॥ ३३॥

चित्तं मायामयं दत्वा चिन्तयाब्जं सुधात्मकम्।

ज्ञानाण्डकेसराकीर्णं ज्ञानेश्वरदलालयम्॥ ३४॥

शक्तिमायोत्करं शान्तं नाभिमण्डलमण्डितम्।

रश्म्याष्टादशबीजाद्यं शक्त्युदन्वति संस्थितम्॥ ३५॥

दीप्तभास्वत्सुसंपूर्णं बिंबोपममनाविलम्।

ध्यानेन निर्मलीकृत्य तत्र विद्येश्वरीं न्यसेत्॥ ३६॥

मस्तके कंदले अष्टौ आस्ये कण्ठोरसि क्रमात्।

ज्ञानाश्रयोदरे नाभौ नितम्बे करयोर्द्वयोः॥ ३७॥

तथोर्द्वं जानुगुल्फेषु सृष्ट्याथा विन्यसेत् क्रमात्।

सृष्टिः रिद्धिर्द्युतिर्लक्ष्मी मेधा कान्तिः स्वधा स्थितिः॥ ३८॥

शिवारुद्रहता दृष्टिः साधना स्पृहणा धृतिः।

समाधिर्वासनान्तैताः षोडशैव गिरः कलाः॥ ३९॥

नामानुक्रमयोर्न्यस्य लक्ष्मीमावाहयेत् ततः।

हेमभूषणभूषाढ्यां तप्तकार्तस्वरश्रियम् ॥ ४० ॥

कुङ्कुमांशुकपीताङ्गीं पीतमाल्यानुलेपनम् ।

पद्मरागमणिव्रातविनद्धाङ्गददोर्लताम् ॥ ४१ ॥

चित्ररत्नचितोन्नद्धजटाटोपप्रकोष्ठिनीम् ।

सर्वरत्नप्रभाजालग्रैवेयकविराजिताम् ॥ ४२ ॥

महामणिरुगुद्बाहि कृतकुण्डलकर्णिकाम् ।

पिशङ्गमणिसन्नद्धगुणत्रयनितबिनीम् ॥ ४३ ॥

क्वणन्मणिमयारागनुपूराङ्कितपद्युगाम् ।

नानारत्नचिताकारमुद्रिकारचिताङ्गुली ॥ ४४ ॥

प्रोल्लसद्दललावण्यसरोरुहमुखाश्रयाम् ।

स्फुरन्नीलोत्पला लोकाः सपुष्पा ः मादकोद्धताम् ॥ ४५ ॥

एकहस्ते कृताम्भोजामन्ये भद्रघटालयाम् ।

विकिरंतीं तृतीयेन मणिवृष्टिमनातुराम् ॥ ४६ ॥

चतुर्थेनामृतापूर्णं मणिपात्रकृतादराम् ।

सर्वावयवसंपूर्णां स्वागताभाषणे कृते ॥ ४७ ॥

हृदा संस्थापनं कृत्वा पूर्ववच्चरिवेधने ।

पद्मभद्रघटाभ्यां तु कर्तव्या सन्निधानता ॥ ४८ ॥

प्राग्वद्दर्भादिकं कृत्वा वपुंषि क्रमशो ददेत् ।

सकले निष्कलं योज्य स्वभावः॑ समुदाहृतः ॥ ४९ ॥

स्नातायामभिषिक्तायां प्रदद्यात् पीतवाससी ।
मसृणेन नाभिपङ्कविलिप्तायामलङ्कृतिः ॥ ५० ॥
दातव्या प्रोदिता सर्वा माल्यानि सुरभीनि च ।
विष्णोरारभ्य मन्त्रेषु यावती पत्रसंस्थितिः ॥ ५१ ॥
स्थितिपूर्वाः कलास्तावद् भावनान्ताः प्रकल्पयेत् ।
शिवाद्युष्मावसाने तु स्वतन्त्रेन प्रतिष्ठति ॥ ५२ ॥
लक्ष्मीवेशधराः सर्वाः सर्वा ः व्यालोलचक्षुषः ।
कारयेन्निर्भरं प्रह्वमध्याध्यासितविग्रहाः ॥ ५३ ॥
पद्मचामरहस्तास्तु सम्मुखाः स्वामिनीं प्रति ।
सर्वोपचारैस्ताः  पूज्या भोगाङ्गानि प्रविन्यसेत् ॥ ५४ ॥
नाभावग्नौ गुहौ पूज्य रूपं दिवि शिरस्ततः ।
योगिनी यातुधाने तु नभस्वति पुरुष्टुतम् ॥ ५५ ॥
लक्ष्म्याः  पुरस्थितिं चाक्षि पूजयेत् क्रमशो गुरुः ।
पीठाभ्यासगतं बाह्ये केकरास्त्रं हविर्द्युतिम् ॥ ५६ ॥
पूजयेद् दिक्षु सर्वासुत्खातकोरगजन्तुरम् ।
एकस्मिन् निर्मिता यागे व्यतीते तु क्रमद्वये ॥ ५७ ॥
क्रम एषोऽस्य निर्दिष्टो रक्षाकर्मणि सर्वतः ।
चन्दनागुरुकर्पूरैर्लवङ्गैलासमावृतम् ॥ ५८ ॥
सहरिन्तु दहेद् धूपं लक्ष्म्यादीनां प्रति प्रति ।

दत्तार्घेभ्यः क्रियाजालं दर्शयेद् देहदर्शितम् ॥ ५९ ॥

आत्मदेहाङ्गुलिक्षेपाच्चक्राकारं  मुहुर्मुहुः ।

उभयोर्हस्तयोरेव मुद्रा सङ्कर्षणी मता ॥ ६० ॥

अनया देवताः सर्वा निःशेषाधारसन्ततिम् ।

प्रवेशितं तु भवते मन्त्रग्राममशेषतः  ॥ ६१ ॥

सर्वज्ञसिद्धिदा ह्येषाभीष्टमन्त्रनियोजिता ।

एषा मुद्रा महाभागा सर्वदेवनमस्कृता ॥ ६२ ॥

वद्धायां प्रणमन्तीह सर्वाकाराश्चराचराः  ।

नानया सदृशी मुद्रा त्रिषु लोकेषु विश्रुता ॥ ६३ ॥

सारैषा सर्वतन्त्राणां सिद्धीनां च परा स्मृता ः ।

एतां सन्दर्शयेल्लक्ष्म्या लक्ष्म्योर्वीरकृतादरः ॥ ६४ ॥

अथ किं बहुनोक्तेन सर्वचक्रेषु सुव्रत  ।

सामान्यैषा समाख्याता मुद्रा सङ्कर्षणी मया ॥ ६५ ॥

अनुक्तेष्वपि दातव्या तत्क्रियार्थप्रपूरिणी ।

स्वरभूषादिकां दीपाममृतेन प्रबोध्य तु ॥ ६६ ॥

सङ्कल्पयन्निवेद्यन्तु नानारसमतः परम् ।

मुद्राप्रमाणपूजानामुपचारे कृते सति ॥ ६७ ॥

सुगन्धवसुसंयुक्तां दद्यात् ताम्वूलमादरात् ।

शतं जप्त्वा निवेदित्वा मायाधूपध्वजालयम् ॥ ६८ ॥

तत्र पूर्वविधानेन भावं निर्वत्तयेद् विधम्।

ततोऽग्निपुरुषे न्यस्य लक्ष्मीचक्रमनाकुलः॥ ६९॥

तत्र निर्वर्त्य यत्नेन मानवीं त्रिविधां क्रियाम्।

शिशोर्यागप्रवेशान्तं ततः कर्म समाचरेत्॥ ७०॥

निरूद्धयोस्ततो  मन्त्रैः सञ्चितागामिकर्मणोः।

प्रारब्धकर्मणा लक्ष्म्याः कलसं शोधयेद् गुरुः॥ ७१॥

लक्ष्मीकलास्तु याः प्रोक्तास्ता एवामूलसंज्ञया।

अलक्ष्म्याः कीर्तिता देवि कलादुःखप्रदायिकाः॥ ७२॥

सन्ताड्य केकरास्त्रेण शिरःप्रभृतिधामगा।

तत्संपुटनियोगेन गृह्य संहारमुद्रया॥ ७३॥

मन्दिरानलसंयोगाद् देव्या त्रिदशमूर्द्धनि।

प्राग्वदायुधसंयोगाद् गृह्य वह्नौ नियोजयेत्॥ ७४॥

न युक्तां प्रोक्षयित्वा तु केकरास्त्रपुटीकृताम्।

हुंफडन्तां कलामाहुस्त्रिपञ्चादिशतान्तिकाम् ॥ ७५॥

शते पूर्णाहुतिर्देया तदर्धे च विपश्चिता।

शेषे कलालिकाये तु हुते पूर्णा प्रशस्यते॥ ७६॥

एवं लक्ष्मी कलाजाले संदिग्धे स्थाणुना तदा।

प्रणवादिवौषडन्ताः संयान्त्याहुतियोगतः ॥ ७७॥

लक्ष्मी कलाः स्ववपुषि समापाद्य क्रमेण तु।

लक्ष्मीदेहात् समाकृष्य हृदा पूरकयोगतः॥ ७८ ॥

योजयेच्छिष्यदेहे तु हृदि संपुटितां कलाम्।

पाशेन व पाषेन वेष्टयित्वा तु रोधयेदङ्कुशेन तु॥ ७९॥

ततो होमः प्रकर्तव्यः संपाताहुतियोगतः।

संख्यानमाहुतीनान्तु पूर्णायाश्च पुरोदितम्॥ ८० ॥

ज्ञातव्यं चुम्बकेन्द्रेण कलाक्रमविधायिना।

कलान्तिमावसाने तु लक्ष्मीमावाह्य रोधयेत्॥ ८१ ॥

तस्याः सनातनस्थित्यै शतं सहस्रमेव वा।

पद्मानां श्रीफलानाञ्च जुहुयात् क्षौद्रसर्षपाः॥ ८२ ॥

एवं लक्ष्मीशरीरे तु होमसंपर्कतो गुरुः।

शिशोर्विन्यस्य जृम्भे तु रूपे लक्ष्म्यात्मकोन्नतम् ॥ ८३॥

ऋद्धि वृद्धिविशाखान्ता धात्री सिद्धार्थिका स्मृता ।

क्षोदेनानेन तस्याङ्गं समुद्वर्त्य मुहुर्मुहुः॥ ८४ ॥

ततः संस्नापयेच्छिष्यं निर्मत्स्योक्तविधान्तः।

घटो योगः समाघ्रातस्तत्र मायोपयो न्यसेत्॥ ८५॥

तन्नन्दिनीसमे सोऽत्र द्रुतये यूषरूपिणीम्।

ध्यात्वा तत्रासनं दद्याद् दीप्य जन्मावसानिकम्॥ ८६ ॥

तत्र लक्ष्मीं समावाह्य कुर्यात् कर्मत्रयं त्रयम्।

मालायां व्याप्यतो॑ मन्त्री कलाभिस्तां स मन्त्रवित्॥ ८७ ॥

भोगाङ्गानि  प्रविन्यस्य विन्यस्येत कलास्ततः ।

गन्धादिपूजिते तस्मिन् मायाङ्कुशनिरोधिते ॥ ८८ ॥

गूह्यशक्तिपुटान्तस्थं लक्ष्म्या कुम्भ शतेन तु ।

सहस्रेण हि जप्वा तु पूर्ववत् सिञ्चयेच्चिशुम् ॥ ८९ ॥

इति लक्ष्मीघटपयसा स्नानमलक्ष्मीं विमुक्तसर्वाङ्गीम्  ।

पश्यामि न तारगणाङ्गगति गतसंपदो गति युक् ॥ ९० ॥

लक्ष्म्याभिषिक्तमृगाङ्का शुकवलिताः सकलदुरितितिमिरहराः ।

शरदिव साधक मूर्त्तिर्भ्राजति शुभ्राजितानान्दी ॥ ९१ ॥

निखिलगतममृतं मलपटलपावकं दुर्भगमम्बुधरमर्दनम्  ।

जनयति न कस्य लक्ष्मीं लक्ष्मीचक्रं क्रमप्राप्तम् ॥ ९२ ॥

यदि वाञ्चसे किमिह पौरुषैः सुखैः गुणविस्तरं वपुषि भासुरं निजे ।

कृतनिश्चयो विदितसाधनो हि तच्चरणाम्बुजं भज महेशसंपदः  ॥९३ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामलेचतुर्विंशतिसाहस्रे

प्रथमषट्के श्रीकालसङ्कर्षण्यामेकविंशतिःपटलः२१ ॥

द्वाविंशतिः  पटलः ॥

श्रीभैरव उवाच  ।

अथातिनिबिडभाग्यपटलपिहितसुखां कुविधनुर्यमपहाय

विविधसाधनविद्युल्लेखा विमालिनी ।

अमृताम्बुधाराकदम्बकप्रकाशितवीरमूर्त्तिमयीम्

हृतसन्तापां लक्ष्मीभट्टारिकां प्रणम्य तस्या ः विधानं वक्ष्ये ॥१ ॥

प्रागुदितान्यतमस्थानपदेशागां लक्ष्मीं लक्षमेकं जपेत् ।

तद्दशभागकृतहोमो देवि स्वरूपधारी त्रिसप्ताहमामलकभुग्

बर्हिपिशितभोजी वा चीर्णलक्ष्मीव्रतो विमला ।

वारिघनतरङ्गमालामालिनः विकचकोकनदरेणुपटलपिञ्जरते स्थानसरसः

पात्रमाश्रित्य लक्षमेकं जप्त्वा शिथिलनालसरोरुहा युतहोमाद् द्विदशग्र

ामलाभो भवति ॥ २ ॥

द्विगुणात् त्रिगुणाद्दशगुणाच्चतुर्गुणान् ग्रामायुतमाप्नुयात् ।

पञ्चधा माण्डलिकः स्यात् षोढा सकलवर्षाधिनिम्नगोपेतां महीं भुङ्क्ते ।

उदितलक्षवृद्धया तु सकलभुवनदिगावलिमीशान्यान्तां सम्पदञ्च भुङ्क्ते क

तद्विसप्तलक्षविधिर्मुञ्जकेशिनं सभृत्यभार्यं विधेयतां नयति ॥ ३ ॥

त्रिपञ्चलक्षजापीमाज्ञापयति पञ्चायुतेन कमला खनदी कमलकरा साक्ष

ात् साधक ।

वपुषि लीयते सर्वमङ्गलाग्नियोनौ विकासिनीं राजीवायुतहोमाद् ग्र

ाममाप्नुयात् ॥ ४ ॥

तत्पश्चाद् तत्पक्षाद् द्विगुणमेवं तद् द्विगुणाद् द्विगुणतरलाभः स्यात् ।

प्रोत्फुल्लनीलोत्पलायुतहोतुः सकलरमणीजनो दासतामुपैति त्र्ययुतहोमा

नियतमजिमूलकलाभो भवति ॥ ५ ॥

अयुतहोमाद् रैगांकं वपुर्गच्चति ।

एवं कुशेशयानां वैवस्वतम्॥ ६

कुमुदानां कुवेरं रक्तारविन्दानां वसु।

रक्तोत्पलानां लक्षहोमात् स्वयमिन्दिराम् पश्यति॥ ७

रक्तारविन्दविरचितमालावलम्बितगलः।

सकलावयवानां वांबुरुहभूषः ॥ ८॥

पीतवासास्तापिकापुष्परेणुरञ्जितकायः।

सुरभिधूपधूपितस्ताम्बूलपूर्णमुखो जनों जिताक्षः॥ ९॥

पञ्चास्त्रधृक् प्रयुतं जप्त्वा लक्षैकहोमान्ते समारूढः।

गजविमानां सकललक्ष्मीचितां लक्ष्मीं सम्भोगमाप्नोति॥ १०॥

सहस्त्राणां चक्रवर्तित्वं लभेत्।

रोहितानामशेषनित्याधिपतिः स्यात्॥ ११॥

प्राचीनानां नभोवारणरोहणेन याति।

श्रीगुरुस्थानानां योगिनीनां सामान्यो भवति॥ १२॥

रसलीनां मातृपदमाप्नुयात्।

सकलजलजलक्षहोमाद् वीरेश्वरपदास्पदी स्यात् ।

यः पुनः सुलक्षणोऽपि तत्प्राप्त्या मध्यमसिद्धयर्हो भवति॥ १३॥

कञ्चावर्गयोश्चाजपौष्णामिषयोर्हारी तलावकतित्तिराम्बुवटककेकिकार

ंडकलक्षणवीनां नियतहोतुर्गरुत्मान्स्वपदमर्पयित्वा निरधिकारी स्यात्।

अथ लक्ष्मीं धवलालये सुसमे मार्जितस्थण्डिले प्रागुद्दिष्टविधिना

प्रपूज्यासितया सुरा जवफल्गुषविविधरसानि तद्रजांसि च मु

ण्डविनिहितानि दत्वा परितः काण्या पूरितपात्रगालयां शोभां विदध्यात

तदन्ते महाज्यपूरितकन्दलांधकारारिमालाभिर्विपुलां शोभामाचरेत् ॥

१४ ॥

ततोऽयुतं जप्त्वा प्रागुक्तहोमानि सहस्रहोमे कृते सति ।

भगवत्याः पुरो मनःशिलातालतापिच्चकुसुमरजोभिः प्रागुक्तमम्बुजं

निर्वर्त्य तदपि कुम्भान्तः प्रक्षिप्य कर्मातिशक्तिपर्यन्तां सनखां कृत्याब्ज

ं नानावाग्रसामलभृतपूतमुपाचम्य कलाद्यङ्गांतं सकलीकरणं कुर्यात् ॥

१५ ॥

दलस्थापितकलाविन्दोर्लक्ष्म्या विकासात्मानमनन्यरूपमभिध्यायेत्

तेन च प्रवर्तकत्वम् ।

सकलकाष्ठान्तरालापूरणादनन्तरमेव लक्ष्मीत्वमुपगतः

साधकस्तेजोनिध्यन्तमस्खलितमुपभुज्याविशृङ्खलोऽमृतत्वं

साधकस्तेजो प्राप्नुयात् ॥ १६ ॥

अथ देव्यग्रतोऽवस्थितः सर्षपात् कोटितैलाक्तं मनोरुगद्वारमृत्पूरितं

सितकपाले दापयेत् ।खञ्जिरीटिकाभि वधाम्नाम्बुनाभिषिञ्चयेत् ततः प्रक

ृद्धामन्वगेव प्ररूढां शस्त्राभिजप्तदात्रेण विलूनां विमर्द्य ततो

मङ्गलस्थानीय दृषदोः संघर्षाच्चूर्णीकृत्य तच्चूर्णं सितं शिरसिकृत्य

देवीशतसहस्रजप्तं वा देव्यै षडङ्गं निवेद्य ं शेषस्येन्दुविरचिता

मौलिभागाः सिद्धेभ्योदद्यात्।

अवशिष्टपांशुना यावज्जीवं रजोरूपिते शिरसि सत्वमवचूर्ण्यते तद्रूपतां

नयति ॥ १७ ॥

अवेणिकेनावगुण्ठिताणुरदृश्यो भवति।

रोचनासमत्वाङ्गतिलकाद् गन्धर्वाधिपत्यं प्रसाधयति ॥ १८ ॥

एवं कान्त्या विद्याधराणां कुतद्य किन्नराणाम्।

तालेन पूर्वसिद्धानाम्। दरदेन यक्षाणाम्॥ १९ ॥

स्रोतोऽञ्जनेनामिषभुजां सिन्दूरेण गरुत्मताम्।

भृङ्गाद्यैर्मरुत्मताम्॥ २० ॥

शुक्तिजन्यरेणुरञ्जितमिन्दोः श्मशानकुतपशिफामूलालोपितं पितृणां

त्र्यग्निस्मरणादयुतं ब्रह्मणां चिताभूतिसंभृतमम्बिकानाम्।

नरपित्ताक्तं योगिनीनां सङ्गरापन्नेषुरलोलापृक्तं वीराणां विद्या

ध्वजरजोमिश्रं लाकिनीनाम्॥ २१ ॥

नवोढा प्रथमपुष्पोपेतं मनोजन्मनः रुद्रसुमनोयुक्तं निधनपदानाम्।

मातृस्त्रगुपरचितं भूचरीणां योगिनीकुसुमान्वितमुभयचरीणाम्॥ २२ ॥

गुह्यकरजोरूषितं खेचरीणाम्।वीरप्रसूतसमरसं वीराणां

भैरव्याकोशलुलितं भैरवपीठाधिष्ठित भैरवाणाममितसिद्धचूर्णं यत्

सामर्थ्यद्रव्येन युक्तं प्रयुज्यते ॥ २३ ॥

तत्सामर्थ्यमनायासात् प्रदर्शयति।

अथ किं भूयः प्रलपितेन तिलकाञ्जनचूर्णगुटिकालेपया दले
परसरसायनादि सिद्धित्रयं प्रसाधयति ॥ २४ ॥

अशोकरन्ध्रे द्विरन्ध्रयुक्तसिता ताम्रस्निग्धकोकनदवर्णर्का
र्णकारयद्रितरूद्रस्थविरहत्याधिदैवेऽतिशुभ्रवीरमस्तके कमठोरुकटाहे
वा मणिभूरितारमरकतराजवर्तशुल्वायतनपत्रेषु वागुरुचन्दनवदना-
शोकबकुलतिलकपुन्नागनीपचम्पकशिंशपाश्रीपर्णीदिवदारुहरिन्दिन्दु-
कान्तिं विज्ञानविदुषा शिल्पिनाथषडङ्गुलादारभ्य पाणिप्रमाणां लक्ष्मीं
स्वरूपनेपथ्यकृतास्पदां स्वमुद्रालङ्कृतां सर्वावयवसंपूर्णां स्वरूपां
विचिन्त्य तन्नितम्बाधो वामनामतोऽष्टावष्टौ कलाः स्वरूपिण्यो
लिखेत् ।

देव्या उभयपार्श्वयोः स्तंवेन मांसलकिङ्किणीप्रोन्नतकुम्भाम्भो
विपुलवृत्तायतं प्रोत्सृजत्या देवीमूर्धपरिसरपुष्कराचलविधातारावुत्किरेत्
।अथाभिवर्गैकैनागरेखया समासादितपटफ
लकभित्त्याम्बाचित्राद्युपासनात् क्वणत्कलसंपदः शाश्वताधिष्ठानाः
समास्वादयेत् ॥ २५ ॥

कपालयोगिनीसामान्यकृन्मतज्ञाख्यं कपालं यो-
व्युत्क्रमादनन्ताविलोकसप्तकक्षालिङ्गनविधात्र चिरादायतनपात्र सप्तकं
स्यात् ।

आगुरोर्वैष्णव्यः श्रैखण्डाद् ब्राह्मयस्त्रैमिषाद् यक्षिण्यः आशोकाद्

विद्याधर्य बकुलादशरसः ॥ २६ ॥

तैलकात्किन्नराङ्गना ः यौनाद् गान्धर्वयोषितः सिद्धकन्याश्चाम्का

ताक्ष्यीविलासिन्यः शैंषपाद् रक्षोबलाः काश्मीराद् भूपतिमहिष्यः

सुरदारुणाः सुरपुरन्ध्रया हारिन्ध्यादहस्करस्त्रियः तैर्मिकात्

पिशाचवनिताभूरादव्युच्चिन्नां संसेवितात् साधकेऽनुपदमेव

दासतामुपयान्ति ।

लक्ष्मीं संयोगकर्तारीं सर्वावाप्तिकरीं मुखाम् ॥ २७ ॥

विदित्वा खेचरे तन्त्रे निर्लक्षणगतेऽद्भुतम् ।

कुसुमविधिं न वेत्ति न च साधकगात्रविधिं विविधगुणं न चास्त्रनिचयं

स्वनियोगसमम् ॥ २८ ॥

परिकरसंयुतञ्च नालं प्रथमानुगतं कथमखिलं भुनक्ति

शिवशासनशक्तिफलम् ।

इति भैरवस्त्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्त्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां द्वाविंशतिः पटलः ॥

२२ ॥

त्रयोविंशतिः पटलः

श्रीभैरव उवाच ।

अथातो विदितं वीरैर्दिव्यैर्देवगणैरपि ।

सिद्धं सूक्ष्मं भवाद्यन्तु सर्वं वक्ष्याम्यनुक्रमात् ॥ १ ॥

वर्णिनां शुद्धजातीनां कन्याफलधिकारिणः ः।

प्रोच्यते रुद्रपुष्पन्तु तथा सप्तकृतेषु च॥ २॥

योषिन्मूलस्त्रगुद्दिष्टं मातृस्त्रक्परमेष्ठिना ।

गोरश्वाद् बन्धूपुष्पं योगिनीगुह्यकाख्यगम् ॥ ३॥

तयोः कुमारिकाख्यन्तु वीरभैरवनाशनम्।

पुष्पान्येतानि तन्त्रेऽस्मिन् षड्डुद्दिष्टानि शूलिना॥ ४॥

नानाश्चर्यकराण्येकवीरवीर्यवहानि तु।

रुद्रपुष्पविशेषेण चानुर्वर्ण्या वरस्त्रियः॥ ५॥

कर्षिता यान्ति दासत्वं साधकानामनादरात्।

मातृस्त्रक्तिलकाश्चैव सर्वमातृकुलोद्भताः॥ ६॥

दर्शनाद् वशमायान्ति वीराणां विश्वयोषितः।

शाकिन्यो रुद्रशाकिन्यो यो डाव्यो डामरिकाः शुभाः॥ ७॥

योगिन्यो वशमायान्ति तिलकाद्योगिनीस्त्रजः।

जपादीनां तु देवीनां रक्तादीनां तु सुव्रत॥ ८॥

नानातन्त्रप्रतिष्ठस्य कुसुमालकजन्मनाम्।

यान्युद्भवास्तुवनिभा यच्चन्ते त्वक्षमेलकम्॥ ९॥

तिलकां त्रिःसमाकृष्टां वीरेभ्यो गुदकास्त्रजः।

जायते वीरसामान्यो वीरो वीरविशेषतः॥ १०॥

पिण्डाकृष्टिं रसाकृष्टिं तरसा नभसि भ्रमात्।

जातियोनिविभागस्य व्यतीतस्य प्रवेदनम् ॥ ११ ॥

रूपाणां परिवर्तञ्च चित्रो भीमः सुमानसः ।

प्रसाधयति वीराणां वीरशासनवेदिनाम् ॥ १२ ॥

धनमिश्रममिश्रं वा पुष्पषट्कं नराधिप ।

न तदस्ति जगत्यत्र यदाश्चर्यं न साधयेत् ॥ १३ ॥

अथ वीरस्य गोप्यानि तथागोप्यानि सुव्रत ।

वच्मि संक्षेपतस्तुभ्यं तपोयोग्यानि विस्तरात् ॥ १४ ॥

वीरत्वावाप्तिदानुक्तमर्घपात्रमलं शुभम् ।

प्रागुक्तैकतमं मन्त्रैः संस्कृतं न प्रकाशयेत् ॥ १५ ॥

सर्वरत्नाक्षसूत्रं च तेजोवृद्धिविधायकम् ।

जाम्बूनदाक्षजं पाद्मं बलजं कलधौतजम् ॥ १६ ॥

खपदास्पदोभिजनकं वीरास्थिजमनाविलम् ।

धनभूयस्करं शुभ्रं स्फाटिकं कलधौतजम् ॥ १७ ॥

निहन्ति तदघौघानि वैद्रुमं शुभकर्मकृत् ।

राजवर्त्तमणिप्रोतं मणिभूतिविधायकम् ॥ १८ ॥

मारकतसमुत्पन्नं चतुष्कं वृद्धिदायकम् ।

शिववृन्दसमायोगकरमच्चकराक्षजम् ॥ १९ ॥

मलसिद्धिलोमेनोत्थं मदिरास्वादकर्मकृत् ।

सर्वेच्चालिप्सपर्यायिकारकं जीवकोद्भवम् ॥ २० ॥

इत्येतदक्षसूत्रन्तु स्मृतं द्वादशरूपकम् ।
विद्याचक्रास्पदं गुप्तं कर्षणीयं विपश्चिता ॥ २१ ॥
धौतवस्त्वादिभिः पूर्णैरालम्बं गन्धनिःस्वनैः ।
कपालकृत्यं मेधावी हृदा पुष्पैः प्रपूजयेत् ॥ २२ ॥
ततः प्रतिमणौ मूलं विन्यसेत् कोमलाकृतिम् ।
चक्रं वा विन्यसित्वा तु कुब्जपन्नगरोचितम् ॥ २३ ॥
वपुष्यायुधबीजन्तु हार्दे श्रीवत्ससंपुटे ।
रथाङ्गपतिहस्ते तु प्राकृतं विनिवेदयेत् ॥ २४ ॥
तेन कार्योजपो वत्स सर्वकर्मप्रसिद्धये ।
भाष्यं स्वान्तमुपांशुञ्च त्रिस्वरूपं हि संस्थया ॥ २५ ॥
अक्षराक्षरसन्तानं स्वश्रोत्रश्रुतिगोचरम् ।
जयो गावः समाख्यातो तद्रुतो न विलम्बितः ॥ २६ ॥
मनोऽनन्तरसंलीनं सर्वार्थपरिवर्जितम् ।
स्मरते वर्णसनातनं यत्रासौ मानसो जपः ॥ २७ ॥
प्रोक्तो भयार्थसंपृक्तः स उपांशुः स्मृतो बुधैः ।
उषो मध्यंदिनं सायमन्तर्नक्ताहमेव च ॥ २८ ॥
रेच्यं वीरैरखण्डन्तु साधनाराधनस्थितैः ।
दिने दिने तदेका घोरैकं कुर्यात् प्रयत्नतः ॥ २९ ॥
एकाधिष्ठितनिर्व्यूढिमहस्येचन्ति सूरयः ।

सचक्रं पावकं होमे लक्षाद्ये च समाप्तिगम् ॥ ३० ॥
देवादेर्न्यस्त मन्त्रस्य सर्वगो गोचरस्तथा ।
गार्थ गोलसन्तानमन्यागौरपटुक्रियम् ॥ ३१ ॥
महाफलसमास्वादसमभोगार्थयोषितः ।
रक्षामनुचरं दृष्टं दासगुप्तमधस्तु नः ॥ ३२ ॥
वीराणां नृपशार्दूल तन्त्रेऽस्मिन् भैरवार्चिते ।
शुभ्रशङ्खे प्रकर्तव्ये द्व्यङ्गुले कर्णिके शुभे ॥ ३३ ॥
चरुके द्व्यङ्गुले शस्ते तुर्याङ्गुष्ठः शिखामणिः ।
त्रिवृन्नरकचोत्पन्नस्त्रिपञ्चसरिकः समः ॥ ३४ ॥
कण्ठाज्जघनसंस्पर्शी शस्तः पञ्चवटोऽपि च ।
सुवृत्तमणिसङ्घातः स्यादेकावली समाः ॥ ३५ ॥
धार्या साधकचन्द्रेण शेषभूता तदिच्चगा ।
प्रागुक्ततरुदण्डस्थं द्वासप्तत्यङ्गुलं समम् ॥ ३६ ॥
समानं वा समुद्वाह्यं खण्डाङ्गं भैरवाणुभिः ।
ध्वजो त्रिशूलमुण्डो तं विविधं तत्प्रशंसितम् ॥ ३७ ॥
किञ्चित् किलकसंयुक्तमधोर्ध्वावद्धकं त्रिकम् ।
मालालम्भनशोभाढ्यं शताष्टाधिकसज्जटम् ॥ ३८ ॥
कल्पादिपिञ्चसत्पुञ्जप्रबद्धललनाकरम् ।
चित्रवर्णकसूत्रोरुरज्जुवेष्टनसंयुतम् ॥ ३९ ॥

खट्वापादगतं वाथ विघ्नघ्नं तत् प्रशंसिनम् ।

सुपुण्यवान् महावीरः सधीरस्स स जगद्गुरुः ॥ ४० ॥

समचेष्टो महेशानि योगिनीनाञ्च सम्मतः ।

य उद्वहति खट्वाङ्गं कपालञ्च महारवम् ॥ ४१ ॥

न तत्पुण्यमघघ्नञ्च त्रिषु लोकेषु विद्यते ।

मुद्रापञ्चकधारीणां यत् संमानमुदीर्यते ॥ ४२ ॥

ते धन्यास्ते स्वसैन्यस्था वीरा मातृवल्लभाः ।

यत्र वेलाव्रतेनापि दध्युः शङ्खं विभूषणम् ॥ ४३ ॥

केशस्पूतागमापाण्डुकर्णदेहाम्बुजच्चदे ।

कपालभोजनादीनि संपर्कात् सन्तरन्ति हि ॥ ४४ ॥

उमाकल्पतनुत्राणे मर्माण्यंगानि त्रायति ।

दुष्टकर्मेषु जालानि न स्पृशन्ति सितान्यपि ॥ ४५ ॥

भ्रमत्पतङ्गवद्यत्र साधकेऽस्थिव्रतांशुमान् ।

कुतस्तत्र समासीत वसन्ते मासि बलीयस्यपि ॥ ४६ ॥

अस्थिभूषा शशिज्योत्स्ना भासिताङ्गत्रिविष्टपे ।

कुतो विद्यान्धकारस्य वस्तुस्थितिनिदर्शनम् ॥ ४७ ॥

आगामिममलालातकृतभस्माग्निभस्मनाम् ।

पलितं साधकानां हि उद्यद्धानुमतामिव ॥ ४८ ॥

काश्मर्यः शाल्मला वाथ लघुदारुमयः समः ।

दशाङ्गुलो मुखे धार्यो मुखरः सुमहारवः ॥ ४९ ॥

वाद्यानां डड्डीकादीनां लक्षणानि महीयसाम् ।

साधकेच्चावशस्थानि फलदानि भवन्ति हि ॥ ५० ॥

लम्बवल्कलसूत्रत्वक्संभवौ सुखदौ समौ ।

धार्यौ साधकचन्द्रेण योगपट्टोपपट्टकौ ॥ ५१ ॥

केयूरकटके धार्ये प्राक्प्रदर्शितरूपके ।

सर्वहिंसकदोषेषु प्रतिषेधकृतास्पदे ॥ ५२ ॥

इत्युक्तं मनसि कृत्वा सदागमनिदर्शनात् ।

साधकेनोपयोग्यन्तु धृतं शुभफलावहम् ॥ ५३ ॥

अवधार्य त्रिशूलं वा लक्षणोपचितं शुभम् ।

सर्वं हेत्यर्घमीशानजनहार्दमनिर्मितम् ॥ ५४ ॥

चतुरस्रे समे हस्ते क्षेत्रे रुद्रमितानि तु ।

कुर्यात् समां ततो मन्त्री पिटकानि समानि तु ॥ ५५ ॥

कृत्वा पञ्चाधसंस्थानि कार्यो हेतुर्विपश्चिता ।

ऊर्ध्वं षड्घटिकास्थाने लिखेच्चृङ्गत्रयं समम् ॥ ५६ ॥

जीवांशपार्श्वरेखां तु सार्द्धभागाङ्कसंस्थया ।

वामहस्तस्य मध्ये तु कुर्यादुल्लेखमूर्ध्वतः ॥ ५७ ॥

तदूर्ध्वे जीवमानेन समुल्लेख्या द्वितीयके ।

पार्श्वयोरुभयोरेवं शृङ्गमूलं विवर्त्य तु ॥ ५८ ॥

ऊर्ध्वं भागत्रयाद्वक्ष्य सूत्रभ्रान्त्या तु मेलकम् ।

रेखायां शृङ्गमूलस्य बहिरस्य समाचरेत् ॥ ५९ ॥

सार्द्धयुग्मांशसूत्रेण जीवाग्रादंतरस्थया ।

रेखया सह संयोगो कार्यस्तूभयपार्श्वयोः ॥ ६० ॥

शृङ्गद्वयं विवर्त्यैवं मध्यशृङ्गं समालिखेत् ।

मूले त्र्यंशसमं कार्यमग्रात् सूत्रद्वयेन तु ॥ ६१ ॥

तस्याधः कण्टकस्थूलः शृङ्गमूलसमाश्रितः ।

मूलाधोगा समा कार्या पट्टिका त्र्यंशरूपिणी ॥ ६२ ॥

तुर्येण सुसमाना स्याच्चतुष्कोणविभागगा ।

तदर्धे जीवभागे तु पार्श्वे लेलोपलेखना ॥ ६३ ॥

मध्यतः कण्ठमावर्त्य पट्टिकावद् घटो भवेत् ।

किं तत्त्वयोः समुल्लेख्यः कार्योऽस्य घटरूपकृत् ॥ ६४ ॥

ततोस्य द्विगुणो दण्डः कार्यः सामलसारकः ।

जीवभावसमः सो हि प्रशस्तस्तु सुवर्तुलः ॥ ६५ ॥

दण्डाध्यासमधो युग्मं तत्वा मध्यमसंस्थया ।

भ्रान्त्या विवर्तयेद् धीमान् वृत्तमालालसारकम् ॥ ६६ ॥

तस्याधः कीलकः कार्यो अङ्गलांशोऽङ्गुलोऽथवा ।

स सदार्द्धः प्रकर्तव्यः शूलारोपणहेतवे ॥ ६७ ॥

नवकोष्ठेऽथवा क्षेत्रे पूर्ववत् पार्श्वसानुनी ।

विवर्त्य वर्तयेच्चृङ्गं मध्यमध्युषिभागिकम् ॥ ६८ ॥

तन्मूलं जीवरेखातो भागमानेन चिह्नयेत् ।

चिह्नयेदग्रसंयोगात् पार्श्वे रेखे निपातयेत् ॥ ६९ ॥

शेषाद् विलोपयेद्रेखां मध्यशृङ्गे त्रिरेखिणम् ।

ततोऽधः पार्श्ववृत्तानु भागमानेन पट्टिका ॥ ७० ॥

वह्नेरुल्लेखनाग्रन्थिः कार्योऽध्वो जीवभागिकः ।

तथैव पट्टिकाधोऽपि प्रोक्तं दण्डे च लक्षणम् ॥ ७१ ॥

सपट्टिकस्वराशात् सकुम्भं शक्तिसपद्मतः ।

सिद्ध्यत्येकादशाङ्गाश्च क्षेत्राच्चूलं पुरोदितम् ॥ ७२ ॥

द्वितीयमपि यत् प्रोक्तं तल्लोकाष्टनवांशगम् ।

सपट्टिकं सग्रन्थिं वा ग्रन्थ्यधो वा सपट्टिकम् ॥ ७३ ॥

संसिद्धं त्रिविधं शूलं सर्वपावकयोथकम् ।

खदिराशोकमन्दारशिंशपावेणुशालजा ॥ ७४ ॥

सर्वलोहोद्भवा वाथ शूलदंष्ट्राः प्रशंसिताः ।

तीक्ष्णायससमं कार्यं त्रिशूले ग्रन्थिवेधगम् ॥ ७५ ॥

वेधदण्डसमारोप्य सुदृढो निश्चलात्मवान् ।

एतच्चूलं समोद्ग्राह्यं सितशृङ्गं समुज्वलम् ॥ ७६ ॥

वीरैश्वर्यसमाविष्टैः क्रूरसत्वनिबर्हणम् ।

नानेन रक्षितमनं घनोऽप्यामर्दकाश्रयः ॥७७ ॥

तज्जिघांसयितुं शक्तो मयाप्यादरचोदितः।

किमायुधधरो ह्येवमनुज्ञानास्त्रवान् गुणी ॥ ७८ ॥

ज्ञानभूषणभूषाढ्य साधयेद् गुणमालिकाम् ।

अस्त्रानीकं सवपुषमिदं सर्वविघ्नघ्नमुग्रय -

सन्ध्यावत् सकलमणवः सन्निधानान्निदध्युः ।

तच्चानुध्यावचनसहितं सन्तु सेवाश्रितानां

यच्चामोघं भवति विषदं साधकानामवेद्यम् ॥७९ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसंकर्षण्यां

साधकोपयुज्यमानव्रतनिर्णयस्त्रयोविंशतिः पटलः ॥ २३ ॥

चतुर्विंशतिः पटलः।

श्रीभैरव उवाच ।

अथ क्रियाकलापस्तु क्रियाफलविधायकः।

वर्ण्यते सन्नियोगस्तु सन्देहविनिवृत्तये ॥ १

वज्रं खड्गं कपालं तु खट्वाङ्गमुरगाङ्कुशौ।

स्पन्दनाङ्गं त्रिशूलञ्च धनुर्नाराचमुद्गरः ॥ २ ॥

चर्मकृत्ति सरोजञ्च दंष्ट्रिणी सकचं शिरः।

गदा दण्डो ध्वजः शक्तिर्वरदाभयदर्पणाः ॥ ३ ॥

परशुः पट्टिशं वृष्टिश्चशको योनिशृङ्खला।

चामरं भद्रकुम्भश्च विकिरा मुसलं हरम्॥ ४॥

निष्ठुरा मुखरी ज्वाला तथा शवकमण्डलम्।

घण्टा महारवो लिङ्गं तथा च विकटानना॥ ५॥

प्रेतकान्तावसानास्तु मुद्राः प्रोक्ताः प्रसिद्धये।

चत्वारिंशोदिता शुभ्राश्चतुर्भिरधिकाः प्रिये॥ ६॥

भाव्यरूपं महालक्ष्म्याः शाम्बरं प्रागपेक्षितम्।

प्रोक्तनेपथ्यवृन्मन्त्री गन्धिगन्धाक्तपाणिकः॥ ७॥

प्राग्लक्षणोक्तशिष्येभ्यः मुद्रावृन्दं प्रदर्शयेत्।

तिर्यक् कृत्वा करं सव्यं प्रसारितमवाङ्मुखम्॥ ८॥

सान्तरं स्वगुहाग्रे तु तस्योर्ध्वे सर्वदुर्मुखम्।

स्थाप्यं यथोभयोः स्यातां संसक्तौ मणिकूर्परौ॥ ९॥

करयोङ्गुष्ठरुद्धे तु कुचयित्वा कनिष्ठिके।

शाखात्रयं प्रसार्यन्तु विरलं वज्रशृङ्गवत्॥ १०॥

कर्णिकारस्त्रगुद्भासि वज्रमेतत् सकण्टकम्।

वज्रेश्वरी मनोह्रद्यमामर्दकगणोदितम् ॥११॥

कनिष्ठा ज्येष्ठरुद्धा तु त्रयोऽङ्गुल्यो घनोच्छ्रिताः।

विकासीन्दीवरश्यामं खड्गचापादिकाः स्मृताः॥ १२॥

उत्तरोत्तानहस्तेन्दु : कपालं भैरवी स्मृतम्।

तन्मुष्टिबन्धनोत्तानं खट्वाङ्गं देशिनी स्मृतम्॥ १३॥

अङ्गुष्ठदेशिनी योगा नागरुक्पाशदर्शनम् ।
अष्टौ कुटिलकोटयस्तु तया कुब्जेऽलकच्चविः ॥ १४ ॥
विकराङ्गुलितलभ्रान्त्या रथाङ्गमचिरोपमम् ।
स्वनासाच्चोग्रयाच्चूलं दर्शयेद्भास्वदुत्कटम् ॥ १५ ॥
मुष्टिबन्धं करं वाममुत्ताम्याकुञ्चिताङ्गुलिम् ।
सव्यं स्वांशगतं कृत्वा शब्दं कृतिमदभ्रमात् ॥ १६ ॥
चापमार्गणयोर्मुद्रां दर्शयेदेकतः स्थिताम् ।
शशाङ्करश्मिवद्धारिकार्मुकं हरिधर्मवत् ॥ १७ ॥
कबरीस्थौ करौ कृत्वा मध्यमे संप्रसारयेत् ।
ज्येष्ठौ पुटगतौ कृत्वा भुजसंपुटयोगतः ॥ १८ ॥
नीलमेघप्रतीकाशो मुद्गरः कीर्त्तितो दृढः ।
तलपृष्ठगतौ हस्तावङ्गुष्ठौ चोच्छ्रितौ तयोः ॥ १९ ॥
चुम्बिताग्रौ स्मृतौ ह्येष सन्ध्यारुणस्तु नन्दकः ।
सव्यमुष्टि लघुर्लम्बा कृत्तिः सौदामिनीप्रभा ॥२० ॥
विस्तीर्णकरशाखस्तु सिताब्जः पाणिसंपुटः ।
कनिष्ठिकोत्सृतं मुष्टिं वामं वामकरालकम् ॥ २१ ॥
कृत्पदातिविषाणान्तां दंष्ट्रामुद्रां प्रदर्शयेत् ।
प्रशस्तेयं महामुद्रा शासने ज्ञापनीया ॥ २२ ॥
अन्योन्यस्पन्दितानान्तु प्रागज्ञानस्वरूपिणाम् ।

वामहस्तस्य मुष्टिस्तु स्वप्रलम्बस्वभावगः॥ २३॥

प्रत्यग्रक्षतजादिग्धं संस्मरेत् सकचं शिरः।

वाममुष्टेः सृतांगुष्ठं सर्वमुष्टिप्रपीडितम्॥ २४॥

तस्याप्युदग्रज्येष्ठेन गदा स्यादायसाङ्किता।

मुष्टिबद्धोच्छ्रितो  हस्तः प्रसारितकनिष्ठिकः॥ २५॥

दण्डः सुपक्ववेण्या च सर्वदुष्टविघातकः।

विकीर्णकरशाखेन पाणिना च परेण तु॥ २६॥

शिरीषकुसुमाभासां वैजयन्तीं प्रदर्शयेत्।

करयोर्ग्रथनं कृत्वा मध्यमे हृत्प्रचुम्बिते॥ २७॥

प्रसार्य दण्डवद् बाहू शक्तिः स्यादञ्जनप्रभा।

सितोऽंबरसमुत्क्षिप्तः सम्मुखस्तु कराङ्गुलिः॥ २८॥

भुजङ्गमफणाकारकरेणापाण्डुरोभयोः।

घनाङ्गुलौ करे वामे सन्मुखे दक्षमुष्टिना॥ २९॥

मणिबन्धं गृहीते तु स्वमुखं वीक्षयेद् बुधः।

एषादर्शा समाख्यातः शरन्मामण्डलद्युतिः॥ ३०॥

पपातानुकृते हस्ते ज्येष्ठे नक्रस्य तर्जनीम्।

संसक्तशाखपरशुर्मध्यन्दिनरविप्रभः ॥३१॥

वेणीवद्धाङ्गुलीजालो मध्यमे तु प्रसारयेत्।

हृल्लग्ने पार्श्वविक्षिप्ते तदन्यां कारयेत् तयोः॥ ३२॥

बाहुसंघट्टदण्डेन पट्टिशोऽप्यर्कवर्चसः ।

अधोमुखौ करौ कृत्वा शाखाग्राङ्गुष्ठचुम्बितौ ॥ ३३ ॥

भूयोऽङ्गुलिक्षेपाद् वृष्टिः पीयूषवर्चसा ।

यत्कार्यार्थोपयोग्यन्तु दृष्टापूतं च यद्धनम् ॥ ३४ ॥

सर्वकर्मसु तस्येव वृष्टिरुक्ता प्रपूरणी ।

लघ्वनामान्तरेऽङ्गुष्ठं क्षिप्य तिर्यक् कृताङ्गुलिः ॥ ३५ ॥

स्वच्चमुक्ताफलाभस्तु चषको योगिनीप्रियः ।

तलपृष्ठसमायोगे त्र्यङ्गुलेऽस्य कृते सति ॥ ३६ ॥

तलान्तरुत्सृजेत् कार्यं हृल्लघ्नाग्रे कनिष्ठिके ।

ज्येष्ठा वाङ्मुखसंघट्टाद्योनिः स्यात् कुङ्कुमच्चविः ॥ ३७ ॥

अङ्गुष्ठतर्जनीयोगाद् ग्रथनाच्चृङ्खला मताः ।

सुप्रलम्बं करं सव्यं पुष्टिं सञ्चालयेन्मनात् ॥ ३८ ॥

नागारिके सरिसटारूपकं चामरं स्मरेत् ।

कृत्वा च सुशिरं मुष्टिं वामं दक्षदलान्तरे ॥ ३९ ॥

सर्वशाखानिरुद्धन्तु हेमं भद्रघटं तथा ।

तिर्यक् सव्याङ्गुलीक्षेपाद् विकिरेन्मणिमालिनीम् ॥ ४० ॥

ज्येष्ठोत्सृष्टां च मुष्टिञ्च सव्यं वामेन पीडयेत् ।

गवलालिमण्डलनिभं दृढं प्रत्यपरं स्मृतम् ॥ ४१ ॥

मध्योर्ध्वमुष्टिना गृह्य प्रसारितकनिष्ठिका ।

प्रदेशिनीं वाममुष्टिः शिर स्याच्चुकपक्षभाग् ॥ ४२ ॥

गुप्ताङ्गुष्ठे भवेन्मुष्टिर्निष्ठुरा किङ्किणी ततः ।

मुक्तलाब्जं मुकुलवत् सा भवेत् करसंपुटम् ॥ ४३ ॥

हस्तद्वयप्रकम्पाच्च ज्वालाज्वालेव जाज्वला ।

शाखाग्रपत्रकं श्लिष्टं कृत्वोर्ध्वास्यं करोत्तरे ॥ ४४ ॥

प्रौढेन्दीवरसंकाशं करकं सासवं स्मरेत् ।

विकटा कुञ्चिता शाखा वामहस्तप्रचालनात् ॥ ४५ ॥

किङ्किणी जालरूपाभा भाव्या रवहिता हिता ।

सव्यहस्तस्य मुष्टिं तु चालयेत् स्थिरकूर्परम् ॥ ४६ ॥

डमरुको रोचनाभो मुखरो भैरवीप्रियः ।

हस्ताङ्गुष्ठेन वामेन दक्षिणस्य करस्य तु ॥ ४७ ॥

ग्राहयेद् ग्राहमङ्गुष्ठं मध्यपृष्ठेऽङ्गुली स्थपेत् ।

प्रवरप्रदर्शनादेशा लिङ्गालिङ्गस्वरूपिणी ॥ ४८ ॥

त्रैलोक्यं दर्शयेत् क्षिप्ता सृजते संहरत्यपि ।

महामुद्रेश्वरीं देवीमीशत्वे विनियोजयेत् ॥ ४९ ॥

सांनिध्य करणाच्चैतां देवतानां प्रदर्शयेत् ।

योगं प्रवर्द्धयत्येषां सर्वज्ञत्वं प्रयच्चति ॥ ५० ॥

विकृतं स्वासनं कृत्वा जिह्वां निष्क्रामयेद् बुधः ।

अतिशुष्कोदरं कृत्वा तनोश्च प्रविलम्बितौ ॥५१ ॥

उभौ मुकुलितौ हस्तौ कुर्यान्नग्नस्तु मन्त्रवित्।

विकटा नाम मुद्रैषा रक्ताकर्षविधौ स्थिता ॥ ५२ ॥

संहारिका प्रयोगानां नास्त्यस्याः सदृशी क्वचित्।

सर्वकामानवाप्नोति क्लृप्ता या साधकोपमा ॥ ५३ ॥

अर्धमुन्मीलिते नेत्रे वक्त्रं च विकृतं तथा।

बाहुग्रीवाश्लथत्वाच्च शवमुद्रा प्रकीर्तिता ॥ ५४ ॥

हन्त्येतया कालमृत्युः सिध्यते कर्मविस्तरः।

षण्मासाभ्यासयोगेन मृत्युञ्च जनयेद् बलम्॥ ५५ ॥

दण्डकासनमारूढो ऋजुग्रीवशिरःस्थितः।

बाहुकूर्परयोर्न्यस्य जान्वास्थाप्य च कूर्परौ ॥५६ ॥

तर्जनीं प्रसृतीकृत्य मध्यमुष्टौ धने सकृत्।

द्वितीये चिबुके न्यस्या कुंचयित्वा विधानतः॥ ५७ ॥

प्रदेशिनीं ततोऽङ्गुष्ठे योजयित्वा विकुञ्चयेत्।

शेषाः प्रसारिताङ्ङ्गुल्यः सोपानविधिना क्रमात्॥ ५८ ॥

कृत्यशान्तं प्रसन्नञ्च मुखं कुर्यात् स्थिरेक्षणम्।

कान्तेयं कान्तवत्कान्ता बध्वा ज्ञानं प्रवर्द्धयेत्॥ ५९ ॥

स्वेच्चया वरणं अस्याः अभ्यासक्रीडनीयके।

सौम्यो देव्या भवन्त्यस्या घोरा अपि प्रदर्शनात्॥ ६० ॥

लाङ्गलं निष्ठुरां योनिं कुब्जं सङ्कर्षणीं ध्वजम्।

चामरं विकिरां विकटां गुहाशक्त्या प्रयोजयेत् ॥ ६१ ॥

वरदाभा यदा हृष्टिः पाणिपात्रकमण्डलुम् ।

कान्ता कुम्भोजमुकुलं लिङ्गं चास्या हृदः क्रिया ॥ ६२ ॥

कपालं दर्पणं पाशं मालारन्ध्रान्तिमस्य च ।

चर्म वर्मधनुर्दंष्ट्रां परशुं धनुषापि च ॥ ६३ ॥

शस्त्राण्यस्त्रानुवाद्यानि शेषान्यत्र स्मृतानि तु ।

लिङ्गं दंष्ट्रीगवं कान्तां विकटाकर्षणीक्रियाम् ॥ ६४ ॥

मुद्राषट्कमिदं देव्यै सन्निधानाय दर्शयेत् ।

शेषे स्वरूपदृष्टास्तु मन्त्रग्रामे क्रिया मताः ॥ ६५ ॥

मुकुलिः शस्यतेनूनं लोकेशादियवीयसाम् ।

अनुक्तास्वपि नियोगः कार्यः श्रुतिनिदर्शनात् ॥ ६६ ॥

उभाभ्यामेकवीराभ्यां यामलाभ्यां सुव्रत ।

त्रिकालकर्मणि सदा देव्युक्तां दर्शयेत् क्रियाम् ॥ ६७ ॥

मुद्राकर्मणि संप्राप्ते यन्त्रमुद्रा न चोदिता ।

मन्त्रमुख्यैः स्मृता दंष्ट्रा मुकुलश्च यवीयसि ॥ ६८ ॥

कुंभाय शस्यते वज्रं निस्त्रिंशं चेदनाय च ।

मुण्डसन्धौ विकृष्टश्चैवं खट्वाङ्गं भैरवो रु भैरवा ॥ ६९ ॥

शंशनीयसत्वानां गजरोधावकर्षणे ।

कृत्तनाय रथाङ्गन्तु त्रिशिखाभेदनाय च ॥ ७० ॥

वेधनाय धनुःखण्डे  मुद्गरः स्फोटनाय च ।

नायकाराध्यातः  सर्वेषां दुष्टकर्मणाम् ॥ ७१ ॥

सुतीक्ष्णाबद्धया त्वद्य कृत्तिर्विषसनाय च ।

लक्ष्म्यै कोकनदं सेव्यं दंष्ट्रिणी योगिनी प्रिये ॥ ७२ ॥

शिरोभैरवभावाय गदारी भञ्जनाय च ।

दण्डो दुष्टविमोहाय ध्वजः प्रोच्चाटनाय च ॥ ७३ ॥

स्रुक्स्रुवास्त्रभिदुश्चर्म सर्वकामप्रसिद्धये  ।

भृत्यः प्रपालनायाथ भयेभ्योऽप्यभयं मनः ॥ ७४ ॥

भानुचन्द्रमसोश्चैव तेजसे दर्पणः क्षमः ।

शृङ्गे तीक्ष्णकुठारस्तु पट्टिसत्रोटनाय  पट्टिश च ॥ ७५ ॥

निर्वाणयोगतप्तानां वृष्टिः पीयुषवर्षमुक्  ।

तत्प्रशान्त्यै च वशको योनिरेतो मुमुचे नृपः ॥ ७६ ॥

शृङ्खला सर्वसत्वानां बन्धनाय प्रयोजिता ।

चामरं प्रभुभावाय घटं चापि निधिं दृशे ॥ ७७ ॥

समस्तमणिलाभाय विकिराघातनाय च ।

निग्रहाय च क्षुद्राणां सर्वेषां मुसलः क्षमः ॥ ७८ ॥

पातालचालनायोच्चै लाङ्गूलं निष्ठुरक्रियम्  ।

मनोमरुद्धयादीनां रोधनाय बलीयसी  ॥७९ ॥

लक्ष्मीधनार्जनाभ्यान्तु मुत्कुलिर्बलशालिनी ।

ज्वालनाय स्मृता ज्वाला शिखोनोवुन्य पीच्चया ॥ ८० ॥

सर्वामृतकराकृष्ट्या करकः पेशलो मतः ।

एडाद्यक्षाभिघातस्य विलुप्त्यै किङ्किणी हिता ॥ ८१ ॥

सर्वेषां दुष्टरूपाणां त्रासनाय महारवः ।

लिङ्गं शिवाप्तसिद्धीनां दात्रेभ्यस्तं बलोत्कट ॥ ८२ ॥

विकटाध्वानप्रत्यक्षाय प्रशंसिता ।

सर्वासां प्रेतसिद्धीनामनायासप्रसिद्धये ॥ ८३ ॥

प्रेतमुद्राः प्रशस्तास्तु सेविता मन्त्रयोगतः ।

निजकान्त्या तिरस्कृत्यै कान्तिमतां नृप ॥ ८४ ॥

कान्ताभ्याससमारम्भं कुरुष्वान्यं परित्यज ।

स्वस्वरूपस्फुटाटोपश्चोत्तमाङ्गकृतास्पदा ॥ ८५ ॥

खलिङ्ग धारिण्यो मुद्रा ध्येयास्तु मण्डले ।

स्वमन्त्रासनमारूढाः सकृदुच्चारविग्रहात् ॥ ८६ ॥

सर्वावाप्तिकराः सन्ति वीरैः संपूजिता विधौ ।

मोचयन्त्या उपासकान् ॥ ८७ ॥

यतोऽतोभिहिता मुद्रा व मुद्राः मोचनाद् रावणार्थतः ।

द्रावयन्ति घनां मूर्चां शिवत्वं मोचयन्ति च ॥ ८८ ॥

पशूनां पाशजालेभ्यो मुद्रा गीयन्ति सूरिभिः ।

इत्येवं दिव्यविद्यामनुविविधनिधीः सत्क्रियाश्चाप्ययोगी

योगी मन्त्रस्वरूपं व्रतसलिलनिधिस्तीर्णदुस्तीर्णपारः ।

वीराङ्गै रक्षितात्मा विभुचरणयुगं सेवमानः सुभक्त्या

के ते सन्त्यत्र भोगाः शिवमतविहिता ः नाप्नुयाद् यानुयत्नात्॥ ८९॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां मुद्रापटश्चतुर्विंशतिः

पटलः॥ २४॥

पञ्चविंशतिः पटलः।

श्रीभैरव उवाच ।

अथातो या महाविद्या सर्वपातकनाशनी।

सर्वा घोरारवे घोरा सर्वातङ्कापहारिणी॥ १॥

विश्वेश्वरमुखोद्गीर्णा विश्वेशैः संप्रपूजिता।

विश्वसिद्धिप्रदातारी विश्वव्याप्तिविधायिनी॥ २॥

सकृदुच्चारणात् पुंसामुपपातकनाशनी।

महापातक संदोहात् सप्तोच्चाराश्चहन्ति या॥ ३॥

पवित्रं सन्निधानञ्च सर्वकामप्रदं च यत्।

नास्त्यन्यत्र जगत्यस्मिन् यत् सामान्यं प्रचक्षते ॥४॥

मृतसञ्जीवनी दीप्ता जीवहा दीर्घजीविनाम्।

कालसङ्कर्षणी नाम या विद्या कीर्तिता मया॥ ५॥

शेते तु प्रलये यस्मात् कालसंकर्षणी ततः।

प्रागुक्तैकतमे स्थाने स्थितिं कृत्वा सुखावहम् ॥ ६ ॥

प्रच्छादिततनुर्मन्त्री वासोभिश्चेडिकादिकैः ।

लक्षं जप्त्वा युतं हुत्वा पुरन्ध्रीवेशलालसः ॥७ ॥

सर्वावयवभूषाढ्यःसदा विद्याव्रते स्थितः ।

जप्त्वोदर्कमुखां विद्यां नमोऽन्तां विंशदक्षराम् ॥ ८ ॥

सहस्रं प्राकृतानान्तु क्षमः स्यात् कर्मणां नृप ।

ध्यायमानोरुणां देवीमात्मानं साध्यमेव च ॥ ९ ॥

त्रिसन्ध्यं शतजापेन समाम्नातं त्रिरोधनम् ।

धराश्रयरमण्यस्तु मनोभवमदालसाः ॥ १० ॥

वशमायान्त्यनायासाज्जापिनां शब्दजप्तकान् ।

आकृष्य जातिसंयुक्ताः कृष्यन्ते विवशास्तथा ॥ ११ ॥

उच्चाटयति रोगांश्च उच्चाटयति मामपि ।

काकपक्षः कृतोष्णीशो गुटिकाकर्दमाञ्जितः ॥ १२ ॥

वङ्गाक्षमालया मन्त्री द्वेषयत्यप्पनन्यजम् ।

मनःशिलाद्रवाल्लब्धः पीताच्च मणिमालया ॥ १३ ॥

सुप्रसारितसंस्थानो जरां स्तम्भयते न कः ।

वश्याकर्षणविद्वेषप्रोच्चाटे च चतुर्थके ॥ १४ ॥

आसनं कर्मकृत् प्रोक्तं वीराणां क्रमशो नृप ।

पद्मं स्वस्तिकवीरञ्च करालं भावनावशात् ॥ १५ ॥

भूतवेश्मैकलिङ्गन्तु ह्यथ लोकाष्टकागृहम् ।

सुसुप्तं प्राप्य मेधावी नानासृक् सातविग्रहः ॥ १६ ॥

भेदप्लुतविचित्राङ्गं स्वाप्य लिङ्गान्तरा मृजः ।

शङ्खास्थिलशुनं नीलं करालं सकृता सह ॥ १७ ॥

तेन लिङ्गं समालभ्य विद्यां मलयमालिनीम् ।

लिख्य फट्कारमध्यस्थां तत ः ईडासरोपयः ॥ १८ ॥

सूत्रास्थिमयं विपुलं दहेद् धूपञ्च तन्मलम् ।

क्रूराधिपो महामन्त्री भैरवासनसंस्थितः ॥ १९ ॥

विकटक्रियाविधानैश्चिदङ्गारानलाग्निभिः ।

ताडयेद् द्विः फडन्तान्तं प्राक्प्रोच्चारणविद्यया ॥२० ॥

शतेन हृदये शूलं सहस्राच्चोणितस्रवम् ।

भवते तस्य हे राजन् युताद्वर्त्तिमामपि ॥ २१ ॥

एष घोरः प्रयोगस्तु तन्त्रेऽस्मिन् पन्निलात्मज ।

गोपनीयस्तु शिष्याणां दुष्टदृष्टदुरात्मनाम् ॥ २२ ॥

वोऽनेन व्यवसितं पायान्मन्मूलं देवतागणः ।

स्रोतांसि यानि मन्त्राणां घोराघोरतरात्मनाम् ॥ २३ ॥

महारक्षाविधानाद्यैर्न च रक्षंन्ति तान्यपि ।

ह्रींकारः कर्षणे शस्तो मकारो मुद्रणेऽपि च ॥ २४ ॥

हाकारो हन्ति दुःखानि चंकारो कर्षयेदसृक् ।

डकारो डाकिनीस्वार्थनिग्रहाय च दुर्मतः ॥ २५ ॥

योकारो वेगकर्तृत्वे सर्वेषां भूभृतामपि ।

गृह्वापयति रक्षां हि सर्वांगमविधायिनाम् ॥ २६ ॥

गकारो मामपीशानि किमन्यैर्देवतागणैः ।

नरोरगसुरेभ्यस्तु मन्त्रेभ्यः परमात्मनाम् ॥ २७ ॥

शकारस्त्वाकरश्शंभोरिकारो दहते जगत् ।

जडनं रोदनं स्तंभं बन्धनं विषनिग्रहम् ॥ २८ ॥

तकारः कुरुते जप्तः पाशरूपो महाबलः ।

निर्वापयति तप्तानि वह्निसूर्यातपादिभिः ॥ २९ ॥

धकारोऽधोमुखो ध्यातो जप्तः सप्तानि लीलया ।

स्तंभनं घट्टनं धैर्यं श्रोत्रादीन्द्रियनिग्रहम् ॥ ३० ॥

प्राणरोधो गिरां हानिं वैकल्यं जंभनं तथा ।

थकारः कुरुते जप्तो ध्यानश्चापि क्रियावताम् ॥ ३१ ॥

फडेकस्त्रासकृत् प्रोक्तो जनन्या कुलतां परः ।

निग्रहः सर्वभूतानां मकरश्च तृतीयकः ॥ ३२ ॥

वज्राञ्जनशिलादीनां चतुर्थः स्फोटकृत् स्मृतः ।

सर्वारिष्टोर्जिताध्वंसि जपात् सर्वान्तिमो भवेत् ॥ ३३ ॥

जपस्तु शतिकोर्णस्य स कर्मारम्भकृन्मतः ।

भूतकर्मकरस्तन्त्रे जपः साहस्त्रिको मतः ॥ ३४ ॥

हुं सस्फुटप्रयोगेन अघोराक्षरपञ्चकम् ।

मेदोसृग्रक्तमज्जास्थिशुक्रसंग्रहकृन्मतम् ॥ ३५ ॥

ज्योतिर्व्याप्तशुनासीरपुटगं कुण्डलाक्षरम् ।

पुष्टिकृत् क्षीणवपुषां प्रजप्तं तप्तभूतिरुक् ॥ ३६ ॥

सर्वेषामेव दुष्टानां कोदण्डं दण्डनाय तु ।

प्रलापसंपुटोच्चारात् शंसितं सर्ववेदिनाम् ॥ ३७ ॥

आवामापुटितं  शान्तं कुरुते वर्तुलाक्षरम् ।

लाघवं गरलोच्चादे ध्वंसने कुष्ठश्लेष्मणा  ॥ ३८ ॥

वृतान्तमूष्मयामुक्तमात्मानं कर्मणि क्षयम् ।

आमिषं कररुद्धञ्च दत्तं वा वाग्विभूतिदम् ॥ ३९ ॥

जात्यङ्गकल्पनायुक्तं विमलासनसंस्थितम् ।

पदवीप्सापदेनैव भवमूलनमोऽन्तिना ॥ ४० ॥

कदम्बवनमध्ये तु ध्यानं लक्ष्मीस्वरूपिणम् ।

मुक्ताहारविलासाढ्यं किन्तु कुन्देन्दुवर्चसम्  ॥ ४१ ॥

वाचामधीशं कुरुते नियुतात् समुपासितम् ।

प्राकृताः संस्कृता वाथ नानादेशस्वराश्रयाः  ॥ ४२ ॥

कास्ताः वाचो जगत्यत्र या न सन्त्यस्य सेवनात् ।

जयद्रथ उवाच  ।

कीदृक् पुरे महेशान यद्युते चाग्निभूतिदा  ॥ ४३ ॥

एतत्प्रसादतो ब्रूहि संदेहविनिवृत्तये ।

स्फुरद्वदनचन्द्रांशुभाभिर्भासितविग्रहम् ॥ ४४ ॥

प्रोवाच ससितक्लेशं शङ्करः सूनृतं  वचः  ।

पुनः प्रकाशकं देव्याः समसोत्तयन्तविस्तरम्  ॥ ४५ ॥

पतङ्गमानं देहानां मालाःकृत्वा समन्ततः ।

स्थानैकान्ते स्वराण्डोऽपि चत्वारा धार्य कोष्ठकान् ॥ ४६ ॥

तद्वाह्ये सर्वतो मार्ज्य कोष्ठमालां चतुर्गुणाम् ।

ततो न जीवतुर्येऽपि द्विकोष्ठं धार्यकन्दरम् ॥ ४७ ॥

तदधस्ताच्च तुर्यं वै मध्यरेखात्रयं प्रिये ।

प्राक्प्रमाणस्ततोऽधस्तात्  कार्यः कण्ठो विपश्चिता ॥ ४८ ॥

द्वाराणि च सुवेश्मानि प्रयत्नेन विवर्त्य तु ।

द्वारकण्ठान्तरा रेखा भद्रकण्ठबहिर्गता ॥ ४९ ॥

विलोप्य द्वारवाह्येऽपि चतस्रो मार्ज्य मोक्षगाः ।

गर्भकोष्ठ चतुष्कं यत्तत्र कार्याम्बुजाकृतिः ॥ ५० ॥

पूर्वाभिहितमार्गेण चतुःषोढादलादिना ।

त्रिहस्तां तु समारभ्य यावत् सप्तगुणं प्रिये ॥ ५१ ॥

चतुर्वर्णं चतुर्द्वारं श्रीवितानमिदं पुरम् ।

सनन्दि यन्मया प्रोक्तं तस्याप्येषा मतिर्मता  ॥ ५२ ॥

मण्डलस्य स चक्रस्य षडङ्गेनाम्बुजं भवेत् ।

द्वारकण्ठः स्मृतोऽशोभो भद्रकण्ठो द्वितीयकः ॥ ५३ ॥

पद्मवीथ्याधभागस्तु भागेनैकेन पङ्कजम् ।

परतोऽप्येवमेवं हि वीथ्याद्यं भागलक्षणम् ॥ ५४ ॥

सर्व मन्त्राश्रयं ह्येतत् सुख्यातं वाग्वतीप्रियम् ।

दर्शनादस्य जायन्ते ज्ञानानन्यजनाः श्रियः ॥ ५५ ॥

मूर्खकृपणविद्विष्टजन्तुभ्यः पन्निलात्मज ।

भक्ता वागीश्वरी वेति सर्वविद्याप्रदायिनी ॥ ५६ ॥

लक्ष्मीकल्पविधानेन साधकानां क्रियावताम् ।

हृषीका भूषहारन्तु घकारपुटितो चली ॥ ५७ ॥

त्रिकर्णाधिष्ठितो वर्ण कुरुते ब्रह्मणोऽपि हि ।

कल्पासनमहायानस्थितैर्जप्तः समुष्टिना ॥५८ ॥

स्वर्णेन पुटितं कृत्वा पावनोर्णस्तदुन्नतिम् ।

श्रीहर्म्यकाननारामगोपुराट्टालकादिषु ॥ ५९ ॥

योगिनीमेलककरौ दरपूर्णपुटेष्वतः ।

रोदनान्तर्गतं जप्तमक्षरन्तु सबिन्दुकम् ॥ ६० ॥

रक्तमाकर्षयेदन्वक् सर्वसत्वाङ्गसंस्त्रमम् ।

ह संपुटे महाहानिं महाविजयसम्भवाम् ॥ ६१ ॥

कुर्यादुदीर्णशत्रूणां प्रजप्तः साधकेश्वरैः ।

मथते बिलयन्त्राणि तेजांसि च तपस्विनाम् ॥ ६२ ॥

आससंपुटितः शब्दस्तेजसां परमो निधिः।

भुजङ्गभूतरक्षांसि सर्वलोकवराङ्गनाः ॥ ६३ ॥

विद्याद्याकर्षयेद् वर्णो हर ईकारसंपुटः।

गुटिकाद्य शेषा याः सिद्धीरयुताद्यं प्रसाधयेत्॥ ६४ ॥

महापदन्तु पत्राङ्गमहितात्ममहीयसीम् ।

कुर्याच्चण्डपदं चापि चण्डवीर्यं प्रसाधयेत्॥ ६५ ॥

योगेश्वरेश्वरत्वञ्च कुर्या कुर्याद् योगीन्द्रश्रीपदम्।

संभूतिस्थितिहर्तृकृत् त्र्यक्षरं जगतः पदम् ॥ ६६ ॥

मुहूर्तोन्मुद्रणं भूतग्रहरक्षोनिवारणम्।

डाव्याद्यनन्तक्षुद्राणां भुजङ्गानां विनाशनम्॥ ६७ ॥

पातकाद्यन्तदुष्टानामुपपातकिनामपि।

महापातकदुष्टानां प्राणिनामन्तिमं पदम्॥ ६८ ॥

कालं विशोध्य चिराच्चतसाहस्त्रिकायुता।

लक्षात्र कुरुते भोगं वीराणां तालमानगम् ॥ ६९ ॥

द्वाभ्यां भानुमतःसोमस्त्रिभिस्तज्जस्य तुर्यभिः।

पञ्चभिस्तु गुरुः षड्भिरेकाक्षो गुरुसत्तमः॥ ७० ॥

शीर्षस्य सप्तभिर्लक्षैर्ध्रुवस्यापि तथाष्टभिः।

एवं जपप्रवृद्धया तु साधयेदुत्तरोत्तरम् ॥ ७१ ॥

विहारं साधकेन्द्राणां पदे पदमनादिमम्।

पुङ्ध्वनिपरावानां वपुषो निर्गतास्त्रियः ॥ ७२ ॥

शूलेश्वरीतनुस्थानसन्निधाना महाबलाः ।

लक्षोत्थादित्रिकान्तास्तु तच्चरुं सप्तजन्मजम् ॥ ७३ ॥

वीमभ्यः संप्रयच्चन्ति सर्वज्ञत्वप्रसाधकम् ।

षड्जन्मानं पशुं दीप्तं कृतशक्तिपदास्पदम् ॥ ७४ ॥

प्रकाशयत्यनायासा तथा योगीश्वरीपदम् ।

या सा चण्डा महाघोरा चण्डकर्मकृतास्पदा ॥ ७५ ॥

सा पशुं पञ्चजन्मानं मातृसायुज्यकारकम् ।

चण्डलक्षप्रजापिभ्यः संप्रयच्चत्यनादरात् ॥ ७६ ॥

महीयसि पदे या सा चकारोन् महिमां पराम् ।

सा महा पदजापीनां महत्वं साधयेद् वरम् ॥ ७७ ॥

पदचक्रोदितायास्तु सिद्धयश्च प्रपञ्चगाः ।

यवीयस्योध्व सामन्याः समग्रचा गूढविक्रमाः ॥ ७८ ॥

ताः सर्वामीक्षतां यान्ति लक्ष्याद्योमार्णजापिनाम् ।

लक्ष एवं पराकाष्ठा विद्याङ्गाक्षरजापिनाम् ॥ ७९ ॥

समस्ते व्यस्तमार्गेऽपि सिद्धिसंयोगकृन्मतः ।

इति शुभवतितन्त्रे कालसंकर्षणीये विविधविधिविधानं कोऽत्र

शक्तोऽतिवक्तुम् ॥ ८० ॥

तव मनसि विलासो यादृशस्तादृशत्वं जुष नरवर सिद्धिं नृत्यशूलेश्वरीं

च ।

इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्त्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां पञ्चविंशतिः पटलः ॥ २५ ॥

षष्टविंशतिः पटलः ।

जयद्रथ उवाच ।

देव शूलेश्वरीचक्रं कीदृक् तद् युज्यते कथम् ।

एतत् प्रसादतो ब्रूहि दृगुन्मूलितदर्पक ॥ १ ॥

जुषन्त्यग्रश्रियः केन शासनेञ्जप्रतिष्ठिते ।

चन्द्रचूडामणिद्युप्तजटाबन्धस्य ते हर ॥ २ ॥

केन कल्मषनिर्मोचविमोचाभिनवाङ्गिनः ।

प्रसादं मणिमूर्धानस्ते रेजुरुरगा इव ॥ ३ ॥

विकासं केन गच्चन्ति तद् बलादित्यवोधितः ।

विध्वंसिततमोनिद्राशरदीवाम्बुजाकराः ॥ ४ ॥

केन मन्त्रद्रुमो दामफलतृप्तिमुपागताः ।

त्वत्प्रसादात् तु संप्राप्त विजृम्भितगुणात्मकाः ॥ ५ ॥

केषां नानेकसंसार संभूतः कर्मकर्दमः ।

त्वत्प्रसादाम्बुवाहिन्या क्षालितस्तनुसंगतः ॥ ६ ॥

नाभिर्भवति तञ्ज्ञानां तमोरुढं नवांशुभिः ।

पृक्तं भानो निवेशेन केषां सर्वार्थदर्शनम् ॥ ७ ॥

त्वत्पादाश्रितसंतृप्ता न ययुः कोऽत्र निर्वृतिम् ।

तत्वे प्रविशत ः प्राणा महाज्ञानपरा इव ॥ ८ ॥

इति सर्वहितासक्ताश्चन्द्रमौलेऽम्बिकायते ।

मया संपृच्चितं ब्रूहि कस्त्वं स्तोतुं समुत्सहे ॥ ९ ॥

श्रीभैरव उवाच ।

वत्स । गोपितुमारब्धा देवी शूलेश्वरी मया ।

सा तवांशाङ्कुशाकृष्टस्नेहेनाद्य प्रकाशते ॥ १० ॥

कृत्वा तु शाङ्करे क्षेत्रे गृहद्वादशकं समम् ।

पदद्विसप्तकं लोप्यं कर्णतुर्येऽपि सुव्रत ॥ ११ ॥

चतुष्कोष्ठं प्रकर्तव्यं समं द्वारचतुष्टयम् ।

कण्ठकोष्ठसमुच्चूरेधो मोक्षो द्विसदर स्मृतः ॥ १२ ॥

प्राकाराभ्यन्तरे माला मेकरो हां विलोप्य तु ।

शेषे षट्कोष्ठके क्षेत्रे शूलं प्राक् क्रमवर्तितम् ॥ १३ ॥

पूरयेद्वर्णकैशुभ्रैः प्रागुक्तेऽपि सितादिभिः ।

कीलकः कृष्णवर्णस्तु काञ्ची वाम सदा भवेत् ॥ १४ ॥

शिरीषस्त्रङ्गिभो दण्डः पट्टिके विद्रुमच्चवि ।

कुम्भो हेमोपमः षष्ठः शृङ्गान्यन्ते सितानि तु ॥१५ ॥

धाराः सिताः प्रकर्तव्याः कण्ठकोलिसमप्रभाः ।

नानादानवरक्ताम्बुप्रशासितत्रिशोऽथवा ॥ १६ ॥

यो यस्मिन् राजतै वर्णस्तस्मिन् शूलेऽस्य सः शुभः।

प्रागग्रं वर्तयेच्चूलमथवोत्तरकण्टकम् ॥ १७ ॥

प्राकारशृङ्गमध्यस्थः क्षेत्र रुद्राङ्गुलं समम्।

वन्ध्याब्जं मध्यशृङ्गाग्रवृत्तास्पदविभागगम्॥ १८ ॥

अष्टपत्रं सनाभिं तु दशषट्केसराकुलम्।

पूर्ववत् पूरयेत् तद्धि तत्र देवीं प्रपूजयेत्॥ १९॥

करालस्य चक्रेणादंष्ट्रिणाग्रत्रिचक्षुषा ।

राज्ञीनामञ्जनाभासि वर्णेन च स्फुरत् त्विषाम् ॥ २० ॥

कृत्तिकालमहाशूलखट्वाङ्गोद्यतपाणिनिम् ।

सर्वभूषणभूषाढ्यां भस्मपाण्डुवपुष्मतीम्॥ २१ ॥

अनन्तासनमारूढामधस्तात् त्र्यक्षरैस्त्रिभिः।

विचलादुष्मवसनैर्जातिकल्पितगात्रकैः॥ २२ ॥

पूर्वोद्दिष्टक्रमात् तुभ्यं तस्य आराधनादिकम्।

तेजो वृषोत्थरक्षःसु मरुत्प्रागादिदिक्षु च॥ २३ ॥

हृदाद्यस्त्रावसानानि विन्यस्याङ्गानि मन्त्रवित्।

पवित्रवटिकाशुद्धो देहः प्रयतमानसः॥ २४ ॥

भवभावोद्भवापूतद्रव्यजातिं प्रयोजयेत्।

तव द्रव्यद्वयं व्याप्तं सितचन्दनपूर्वकम्॥ २५॥

देव्यै देयं महावीरैः सुगन्धं गन्धधूपकम्।

त्र्यंशानुवटिका कार्या भवोद्भवसनातनैः ॥ २६ ॥

एकाङ्गा रस्यते नारमथवैकं सनातनम् ।

पवित्रे पावनः सेकः स्यादयं सुनिवेशितः ॥ २७ ॥

क्ष्मानृगोमायुमांसानि त्रिशूले वल्लभानि तु ।

तानि दद्यात् प्रयत्नेन न तद्रक्तानि विशेषतः ॥ २८ ॥

एवं दीपोविचारस्तु महाद्वयप्रदर्शितैः ।

पूजितां सर्वलाभस्तु कुर्यान्शूलेश्वरीं नृप ॥ २९ ॥

स्वसमानाप्तदृष्टानि तद्युक्त्या संप्रसाधयेत् ।

सर्वाणि सिद्धरूपाणि शूलस्यालीलया  गिरिः  ॥ ३० ॥

अथ शृङ्गत्रये त्रीणि कृत्य चामीकराणि तु ।

तत्र देवीत्रयन्यासं  कुर्याद्वर्णं द्वयेन तु ॥ ३१

मूलयागाङ्गयुक्तेन पृथग्वर्णविभागिना ।

मध्याब्जेन यथा पूज्या देवी शूलेश्वरी परा ॥ ३२ ॥

पश्येद् घोषावतीं द्वेन सा विज्ञेया परापरा ।

शूलेशी प्राप्तनेपथ्या किन्तु प्रौढार्कवर्चसा ॥ ३३ ॥

अजीवधर्ममध्येन ज्योतिर्द्वयपरां पुमान् ।

अपरार्थप्रतिष्ठानां ज्योतिर्ज्वालावभासिनीम् ॥ ३४ ॥

चक्राणां त्रिस्वरूपाणां शान्तघोरातिघोरिणाम्  ।

योनयः कीर्तिता ह्येताः ---र्णिकरूपगाः ॥ ३५ ॥

आभिः संपूजिताभिस्तु सिद्धाभिस्त्रिस्वरूपकम् ।

विश्वसंयोगिनीजालं शान्तघोरविमिश्रकम् ॥ ३६ ॥

वशमायात्यसन्देहात् सेत्स्यन्ते सर्वसिद्धयः ।

न तदस्ति जगत्यत्र मध्यमोत्तमकन्यसम् ॥ ३७ ॥

यन्न सिद्ध्यति भूपाल गूढयोगनिषेविणी ।

ते यास्यन्ति परां काष्ठां भुक्त्वा संभोगसन्ततिम् ॥ ३८ ॥

ये त्रिशूलमुखाया तदग्धदुष्कृतदारवः ।

परमाद्वयभावनसत्क्रियया भज शूलनिवासिशिवां हृदये ॥ ३९ ॥

न च वाञ्छितवस्तुकृते लघुता लघुकर्षगुणे परिहारमुखम् ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षिण्या शूलेश्वरीकल्पे षड्विंशतिः

पटलः ॥ २६ ॥

सप्तविंशतिः पटलः ।

श्रीभैरव उवाच ।

वीराणां क्रीडनार्थाय वक्ष्ये सामान्यकर्मिणाम् ।

विद्यासंसाधिकाः सम्यक् पारंपर्यक्रमागताः ॥ १ ॥

ओङ्कारं सनमस्कारं ततश्चोद्गमनेश्वरी ।

चतुर्थ्यन्तं पदं लिख्य ततः शुच्यशुचीपरे ॥ २ ॥

कापालिनिलिस्वाहान्तं विद्यैका विंशदक्षरा ः ।

जप्तायुतं भवेत् सिद्धिस्ततः ततः कर्माणि योजयेत् ॥ ३ ॥

गन्धमूषकहृत्पूर्णं शवमाल्यं सुशोभितम् ।

चूर्णीकृत्य सहस्रन्तु तज्जप्त्वा मखसन्निधौ ॥ ४ ॥

शिरस्याचूर्णनात् कुर्यात् त्रिभौमा वशगास्तु यः ।

प्रणवाद्यं विलिख्यादौ हुण्डनमुण्डने तथा ॥ ५ ॥

अमुकस्य मुखं स्वाहा वन्धास्याद्यन्निर्योजयेत् ।

पूर्व क्रम प्रसिध्यं    मेतन्मुखासने ॥ ६ ॥

भास्वद्द्रुमलतापत्रपुटसंश्लिष्टमग्रजम् ।

कलकण्ठककण्ठकैः संभ्य सप्ताभिमन्त्रितम् ॥ ७ ॥

वाल्मीकं सुशिरे क्षिप्त्वा    अष्टशतोपलम् ।

वामापादेन चाक्रम्य समाप्यास्यं निबध्यते ॥ ८ ॥

।ओं  उं नमो भगवतीति महाशंखिन्यथापरम् ।

भिक्षामावाहयान्तं च भूयः  शंखिनि वै पदम् ॥ ९ ॥

नमोऽस्तु दानसंयुक्तमनसा सप्तमं तृणे ।

पात्रेषु संस्कृता भिक्षा भ्रमिष्णोः पतति ध्रुवम् ॥ १० ॥

सुवर्णमञ्जरीकेति द्वन्द्वयोगेन विद्यया ।

अभिमन्त्रित कपालं  विद्याम्भोभिः प्रपूर्यते ॥ ११ ॥

चण्डालि विजयेशेषं वीरे विजयदानयुक्  ।

प्राग्विद्यासाधनात् सिद्धां विद्यां कर्माणि योजयेत् ॥ १२ ॥

कृत्वा मण्डलकं वृत्तं प्रातः प्रातस्तु विद्यया ।

शताष्टोत्तरजप्तानि   जातीपुष्पाणि निक्षिपेत् ॥ १३ ॥

मासाद्रूपवतीं कन्यामवाप्नोत्यविचारतः ।

श्मशानाद्यं भवाद्यञ्च पिशाचिपदमालिखेत् ॥ १४ ॥

विद्वेषयद्भिरभ्यस्तं हुं फडन्तं महामतिः ।

अनया मालया नुन्नां साध्यरूपविनिर्मिताम् ॥ १५ ॥

शतजप्तेऽन्तराले वै बध्वा क्षेत्रे निधापयेत् ।

करालगन्धने वाथ बद्धा द्वेषयते रिपुम् ॥ १६ ॥

तत्वं सटे मठे लिख्य नटे सर्वं ततः परम् ।

बन्धं करोमि सिंहानां व्याघ्राणां पदमालिखेत् ॥ १७ ॥

चौराणां शाकिनीनाञ्च ं च हुं फट् स्वाहावसानकम् ।

सदा प्रस्थानकाले तु मन्त्रितं लोष्ठकाष्ठकम् ॥ १८ ॥

प्रक्षिपेद् दिक्षु सर्वासु मन्त्रितं विद्ययानया ।

बद्धदृग्घिंसकानान्तु पथि या    गुणी ॥ १९ ॥

शुद्धं कुलं द्विरभ्यास कुलजेन्यं पिशाचिनि ।

द्वन्द्वयुक्तानुमानेन स्वमन्त्राह्लादनं परम् ॥ २०

नित्यं हि शतजापेन कर्णे कर्णपिशाचिका ।

नानाराष्ट्रान्तरोद्भूतां वार्तां ब्रूते गुणात्मिकाम् ॥ २१ ॥

शिवं लम्बोदरं चैव वामनं कदृ कदृ च ।

कथय हुं फट्स्वाहान्त मन्त्रो कः ॥ २२ ॥

जपात् पिशाचोऽप्यथ च कथयेद्विश्वजल्पितम् ।

चलेति च द्विरभ्यस्तं द्विरभ्यस्तं च चालय ॥ २३ ॥

हुंकारं ग्रसयुग्मञ्च हेद्रावय फडन्तगम् ।

द्विरभ्यासं गिलिद्विश्च भञ्जत्रूट पदं द्विधा ॥ २४ ॥

मोटयद्वि स्फोटयद्वि आविश रक्ष च द्विधा ।

हेमहास महाविच्चे रक्ष मां च समायुतम् ॥ २५ ॥

परसैन्यान् परा ह्येषा विद्याद्वन्द्वसमायुता ।

महामायेति विख्याता सिद्धकर्मसु योजयेत् ॥ २६ ॥

सिध्यते चाप्ययं राजमनुष्यगजवाजितः ।

सिद्धकाष्ठानि संगृह्य कृष्णाष्टम्यां विचक्षणः ॥ २७ ॥

प्रज्वाल्य चिद्धुताशं च होमयेत् शवकच्चदान् ।

अष्टोत्तरशतं यावत् तेन निर्वाणभस्मना ॥ २८ ॥

अनुवातविरक्तेन युद्धारम्भविलासिनी ।

मत्तेभ बलसर्वाद्यासेनाध्यक्षं पलायते ॥ २९ ॥

संमूढाश्च भटास्तस्यां महामायाविमोहिताः ।

संरुद्धचेतसः सर्वे जिघांसन्ति परस्परम् ॥ ३० ॥

निर्जैरेव सुभृत्त्यैस्तु स्वामिनां क्रियते क्षयः ।

स्वामिभिश्च सुभृत्यानां शिरांसि सुसितांसिभिः ॥ ३१ ॥

विलूयन्ते प्रकोपाढ्यैराहवामर्षितैर्भृशम् ।

अथवा भस्मना तेन साध्यपुत्तलिकाकृतौ ॥ ३२ ॥

विद्याजप्तस्वरूपं वा यदङ्गं छिद्यते नृप ।

तदङ्गरहितः साध्यो भवेदिति सुनिश्चितम् ॥ ३३ ॥

कुणपं वेणुलोहं वा विद्ययाष्टाभिमन्त्रितम् ।

मा स्फोटयेत् तेन संक्षुब्धो ------मस्तके भृशम् ॥ ३४ ॥

यावत् स न तथा याति तावत् साध्यो विपद्यते ।

नैनं रक्षयते शम्भुरीश्वरो न सदस्पतिः ॥ ३५ ॥

उन्मत्तपत्ररसयुग्भस्म नस्तिलकेन तु ।

स्वललाटं समीक्षन्ते न मोहान्विता जनाः ॥ ३६ ॥

विवेकशून्यतां यान्ति यदि पीयूषपाणिनः ।

पानसंयुक्तं वश्यकृत् त्रिदशेष्वपि ॥ ३७ ॥

निशायां सुविमिश्रन्तु भवेच्चूर्णनादिकम् ।

त्रिरक्तमिश्रिणां शुष्कभस्मना गोलका ॥ ३८ ॥

लिखिता कर्षयेज्जन्तुमाकर्षणविधानतः ।

तिलकाञ्जनचूर्णानां लेपनानां तु स्पर्शिनाम् ॥ ३९ ॥

साधर्म्यं धनसंयुक्तं तदर्थं संप्रसाधयेत् ।

येन येन प्रकारेण महामाया प्रयोज्यते ॥ ४० ॥

साधयेत् तेन तेनैव सर्वकर्माणि लीलया ।

चितिभस्मभयेच्चसमोपेतभस्मना तेन ताडितः ॥ ४१ ॥

जन्तुरस्त्रसुगुप्तोऽपि व सुगुप्तिपि महाभूतेन गृह्यते ।

गोक्षीरपूरितं कुम्भं विद्ययाशनमन्त्रितम् ॥ ४२ ॥

तेन संस्नापितं सत्वं स्वस्थो भवति तत्क्षणात् ।

गृंजनं भस्मविद् भस्म खररक्तेन पेशयेत् ॥ ४३ ॥

तेन प्रेतपटे लिख्य शत्रुसैन्यविदर्भिताम् ।

विद्याक्षरैस्ततोद् वर्तिं कृत्यं लेख्य प्रदीपयेत् ॥ ४४ ॥

तिलतैलं कपाले तु सुप्रदीप्तं चिदग्निना ।

यथा  यथा विनश्येत सावर्त्तिर्वर्त्तिर्दीपिता ॥ ४५ ॥

तथा तथा प्रजायन्ते शत्रवो विशरारवाः ।

अस्मिन् सम्यक् कृते रात्रौ प्रयोगे विधिसंयुते ॥ ४६ ॥

अहमेव विनश्यामि का कथा हीतरैर्जनैः ।

अथवा मातृभिः साध्यं मध्ये चैव विदर्भितम् ॥ ४७ ॥

गोकुत्थं कुङ्कुमं क्षोदलिखितं भूर्जनिर्व्रणे ।

मधुरत्रयसंयुक्तं ततः साध्यं वशे नयेत् ॥ ४८ ॥

वशकृत् प्रोक्ता विद्या कल्याणकारिका ।

जन्तूनां भाग्यहीनानां प्राधान्येन नराधिप ॥ ४९ ॥

वश्याकर्षणविद्वेषमारणोच्चाटनादिना ।

फलयोगेन सिद्ध्यन्ते विद्ययानया ॥ ५० ॥

कृतानि साधकेन्द्राणां मर्त्यभोगाभिलाषिणाम् ।

महामायामन्त्रविधिः ---------- ॥

ध्रुवाद्यं ------------ष्टै युक्तं सतारकम् ॥ ५१ ॥

साध्यनामतदन्ते तु द्रावयोपपदान्वितम् ।

फडन्तमेतत् संलिख्य भूर्जे संवेष्टितं ततः ॥ ५२ ॥

साधयत्याशु  द्रो द्वारकृतो हृदि ।

उत्क्षिप्य शुल्वसूच्या तु विद्ध्योपस्थे कृतिं ततः ॥ ५३ ॥

निर्धूमखदिराङ्गारैस्त्रिसन्ध्यं तापयेद् बुधः ।

सप्ताहात् कृष्टिमायात्यनुलोम्यपि न संशयः ॥ ५४ ॥

विमलाद्यससुतारं स्मरणं कन्यपदान्वितम् ।

यच्चर्याभ्याससंयुक्तशक्तिशक्तिमता युतम् ॥ ५५ ॥

फडन्तमिति मन्त्रज्ञः प्रयोगं विपुलेऽम्भसि ।

स्तनमात्रप्रविष्टस्तु जपेदयुतसंख्यया ॥ ५६ ॥

यावन्तीं वल्लभां कन्याम् नीचोऽप्युत्तमवर्णजाम् ।

अप्रमोदं भवादिञ्च कारणाक्रान्तमस्तकम् ॥ ५७ ॥

सारसं द्रव्यसंज्ञञ्च याचयान्ते द्विधा पुनः ।

सौम्यघोरीफडन्तश्च प्रयोगोऽयं यथा पुरा ॥ ५८ ॥

सेवितः साधयेद् वत्स सर्वं चित्तसमीहितम् ।

अघोरीपुटितो जप्तो धृतराष्ट्रो नदीशयुक् ॥५९ ॥

सर्व कामार्थसंसिद्धिं कुरुतेऽयुतजापिनाम् ।

शिव स्मरकरा लीना मोहय सम्मोहय ॥ ६० ॥

मुहुः करालस्मरणं प्रयोगमिदमद्भुतम् ।

क्षेत्रेऽथ कर्परे लिख्य पटे क्षेत्रं निधापयेत् ॥ ६१ ॥

मोहयेज्जन्तुचक्रं तु क्षिप्रमेव हि मण्डलम् ।

विमलं नमस्कृतं चैव प्रेषकाय सदान्वितम् ॥ ६२ ॥

घोषकाय तथा चान्यं प्रेषिताय लघुः परः ।

कुरु स्वाहा समायुक्तविद्यया सर्षपान् जपेत् ॥ ६३ ॥

तां क्षिप्तां लङ्घयेद्यस्तु स वश्यो भवतेऽचिरात् ।

चामुण्डिनीति प्रथमं चिच्चण्डालिनि चापरम् ॥ ६४ ॥

चिच्चण्दालि पदं लिख्य अमुकं दह दहेति च ।

पचयुग्मं पुनर्लिख्य ममशब्दसमन्वितम् ॥ ६५ ॥

वशमानय स्वाहान्तं वेद्येयं विमलादिका ।

अनजाम्भोधिजा हुत्य एकविंशतिसंख्यया ॥ ६६ ॥

जुहुयाद् यस्य नाम्ना तु त्रिसन्ध्यं पूजिताम्बिकः ।

स भवेद् दासवद् वश्य आत्मद्रविणदायकः ॥ ६७ ॥

नमो भगवते लिख्य रुद्रायाभययुग्मकम् ।

हस युग्मं मर्दयुगं च भगजिह्वामुखं ततः ॥ ६८ ॥

बिन्दुरूपं तु तत्कृत्वा भगजिह्वामुखं पुनः ।

हुं फड्युग्मसमायुक्ता स्वाहान्ता मृतचूलिका ॥ ६९ ॥

विद्येयं कथिता राजन् सर्वकर्मप्रसाधिका ।

सन्नक्षत्रतिथिवारसंयमोपोषवर्जिता ॥ ७० ॥

माक्षीकवान्ते घटितां सुरूपां शालिभञ्जिका ।

स्वासृग्जो सृक्सकाश्मीरद्रवेणालिख्य पूर्ववत् ॥ ७१ ॥

प्रयोगं भूर्जपत्रे तु तद्धूर्जं हृन्निवेशयेत् ।

तस्यास्तां किङ्करास्तस्य कण्टकैर्ग्रथितांगिनीम् ॥ ७२ ॥

शताष्टोत्तरजप्तैस्तु विविक्तैस्तर्हाप्य पूजयेत् ।

त्रिसन्ध्यं सौमनैः पुष्पैरब्दान्ते अब्दसप्तकम् ॥ ७३ ॥

आकर्षयेत् प्रयोगोऽयं सप्ताहाद् देवतादिकाम् ।

सर्वाङ्गसुन्दरी दुर्गा मानुषीणां तु का कथा ॥ ७४ ॥

जपेद् वा सततं यस्तु तस्य वश्यं जगत्त्रयम् ।

या स्थिता कामरूपिण्यो ता रमन्ति न संशयः ॥ ७५ ॥

कर्षयेत् सप्तरात्रेण नामयुक्तन्तु यज्जपेत् ।

स्त्रीपुंनपुंसकं वाथ दिव्यादेशेन संशयः ॥ ७६ ॥

तत्त्वं भगवति पदं चामुण्डे च परं ततः ।

योगाञ्जनवशीयुक्तं करणेति पदं ततः ॥ ७७ ॥

स्त्रीवशीकरणे चान्यं तथा पुरुषसंयुतम् ।

वशीकरणे च परं सर्वशब्दं ततः पुनः ॥ ७८ ॥

वशीकरणे च स्वाहा विद्येयं चित्तभेदतः ।

योजिता साधयेत् सर्वं यदसाध्यमपि क्षितौ ॥ ७९ ॥

भवं शङ्करशब्दं च हिरिकेश्यथ पिङ्गले ।

आदित्यदयिते हुं च फडन्तेयं महाबला ॥ ८० ॥

आदित्यदयिता नाम विद्या सर्वज्ञभाषिता ।

आदित्याभिमुखो भूत्वा पटेनार्द्रेण प्रावृतः ॥ ८१ ॥

यामुद्दिश्य जपेत् कन्यां प्राक्प्रयोगेन साधकः ।

लभेत् तामविचारेण यावदसौ शुष्यते पटः ॥ ८२ ॥

तारादिकमिदं लिख्यमिचिकेति पदं पदम् ।

स्वाहान्ताष्टाक्षरा विद्या भूरिकर्मप्रसाधिका ॥ ८३ ॥

नानाश्चर्यकरी  तुभ्यं वीरकर्मप्रकाशिका ।

वामे करतले लिख्य पद्ममष्टदलं बुधः ॥ ८४ ॥

स्वनासोऽसृक्सु गोकुत्थकाश्मीरकरसेन च ।

मञ्जुपिच्चेन तन्नाभौ नाम गर्भं भवे लिखेत् ॥ ८५ ॥

ततः प्राग्दलतः स्थाप्य विद्यां ह्येतां भवादिकाम् ।

वामोरावप्यसंभिन्नमेतल्लेख्यं विलिख्य तु ॥ ८६ ॥

ततस्तल्लेख्य यत्नेन घण्टा वाग्दुष्टपाणिना ।

जपेदयुतसंख्यानं यन्नाम्नापल्लवार्तिना  ॥८७ ॥

तामाकर्षयते शीघ्रं त्रिभौमं जन्तुमण्डलम् ।

सहस्रान्तरकामिन्यो पक्षिण्यश्चायुतान्विताः ॥ ८८ ॥

अयुते वशमायान्ति योषितो ह्यमृतान्त्रगाम् ।

सर्वकल्पोपचारैस्तु वशीकरणकर्मणि ॥ ८९ ॥

योजितेयं महाविद्या वशीकुर्याज्जगत्त्रयम् ।

कामिनीति पदं पूर्वं रञ्जनीति ततः परम् ॥ ९० ॥

उक्तयोगयुता देवी कामिनीयं नवाक्षरा ।

सर्वकामप्रदा प्रोक्ता तन्त्रेऽस्मिन् रावणार्चिते ॥ ९१ ॥

योषित्सुरतकाले तु वामपाणिशतेन तु ।

अभिमन्त्र्य स्पृशेद् योनिं विद्यामन्त्रं समुच्चरेत् ॥ ९२ ॥

ततः प्रेखांक्षरस्तस्मिन् रणे षट्के विमज्जते ।

स्फुरद्विलोचना नारी मन्मथोद्दामदीपिता ॥ ९३ ॥

नि  चलनैः कान्तं चात्यावद् गूहयेद् दृढम् ।

अजहच्चापलातावद् यावत् तेन न कामिता ॥ ९४ ॥

तावन्नरमतेऽन्यत्र न प्रयाति च निर्वृतिम् ।

गात्र शिरः स्पृष्टं वक्त्रं हृत्पाणिना प्रिये ॥ ९५ ॥

रक्षन्ति सर्वरूपिण्यः संस्पृष्टा विद्ययानया ।

एकैकमुत्सृजेत् तद्धि वशीभवति निश्चितम् ॥ ९६ ॥

शालिपिष्टमयीं कृत्वा पुत्रिकां यत्स्वरूपगाम् ।

सहस्रजपितां तान्तु शर्कराज्यविनिश्रितान् ॥ ९७ ॥

ग्रामे ग्रामे सनामास्तु भक्षयेद् विद्ययानया ।

स वश्यो भवते शीघ्रं जीविनाममुदेऽपि च ॥ ९८ ॥

ध्वजोपस्थेऽभिमन्त्रित्वाच्चतेनैकेन साधकः ।

सा वश्या भविता नारी यया सह भजेद्रतिम् ॥ ९९ ॥

अथोभयरतं द्रव्यं देव्यग्रे शतमन्त्रितम् ।

तिलकं कुरुते यस्तु सवश्यं कुरुते जगत् ॥ १०० ॥

एषा सा कामिनी नाम विद्याकामगुणालया ।

स्वाधिष्ठानसमारूढा जात्यङ्गपरिकल्पिता ॥ १०१ ॥

पूजिता कूरुते भोगान्ननन्यजगुणाधिकाम् ।

कामिनी विधिना यष्टा सर्वविद्यारणात्मनाम् ॥ १०२ ॥

कुर्वत्यभीप्सितानर्थान् मातृभेदक्रमेण तु ।

विद्यावृन्दं वेत्ति सर्वार्थसिद्धिं वाक्यस्पाणोः सेवनस्यानुषङ्गात् ॥ १०३ ॥

ज्ञात्वा देवीं तां च वज्रेश्वरेशीं मात्रान् भोगान् को नु भुङ्क्तेऽध्वदृष्टान् ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां विद्योद्धारः सप्तविंशतिः पटलः ॥ २७ ॥

## अष्टविंशतिःपटलः

श्रीभैरव उवाच ॥

अथ यासौ सुतृप्तेन्दुच्चायाप्यम्बुजकल्पना ।

श्लथकेशा सिताम्भोजविलोचनसहस्रधृक् ॥ १ ॥

स्वदेहांशुहृतच्छाया ---------धुतेजसा ।

पुष्परागमहारत्नभूषाभूषितविग्रहा ॥ २ ॥

सर्वाङ्कुशधरा देवी दिग्दोर्दण्डकणाङ्किता ।

पिशङ्गा वरनेपथ्या ------------पीतमा ॥ ३ ॥

सञ्जातालिमहामालाप्रचुम्बितकपोलिनम् ।

दंष्ट्राग्रोद्भिन्नशालाग्रप्रोत कर्मकशालिनम् ॥ ४ ॥

चतुर्दन्तं सदा मत्तं गजमारुहते सदा ।

नाम्ना वज्रेश्वरी देवी सौम्यरूपा महाबला ॥ ५ ॥

गोपिता सर्वतन्त्रेषु मया चोशनसादिषु ।

साध्यशेषगुणाभोगदलितेश्वरवेणिका ॥ ६ ॥

क्रूरेन्दुसंयुताध्यासा शृण्वथ समासतः ।

अनन्त पुण्यविद्याञ्च भैरवैश्वर्यमेव च ॥ ७ ॥

विपर्ययांश्च पुण्यादीन् कल्प्याधश्चादनं ततः ।

षट्कण्ठकर्णिकमलमूर्ध्वच्चादनं -- ॥ ८ ॥

विन्यस्य गोमयं कुर्यात् पङ्कजं प्राङ् निदर्शनात् ।

भास्वन्मण्डलमारूढं चतुर्वक्त्रं सनातनम् ॥ ९ ॥

दत्वामृतकरस्थायि बीजके तु प्रकल्पयेत् ।

विततान जटाभारं लोकालिहनलालसम् ॥ १० ॥

यत् तेजस्तत्समारूढं कल्पयेत् मामुमाधरम् ।

सर्वमेतन्महीपाल भवेदानन्तपूर्वकम् ॥ ११ ॥

कल्पमालामयी ध्येया तनुर्दिव्यामलाकृतिः ।

वक्त्रं भवमयं कृत्वा विद्याङ्गैरालभेत् ततः ॥ १२ ॥

सारमेकाक्षरं कृत्वा दद्यात् कुर्यात् क्षरेत् ततः ।

मूर्ध्वज्वालानले देया वपुष्मां स्त्रक्षैरेरथ ॥ १३ ॥

कौक्षेयकं पुरोद्दिष्टं पञ्चाक्षरमिति स्थितम् ।

मालादेहविनिर्यातमेतद् विद्याङ्गपञ्चकम् ॥ १४ ॥

वपुस्थं साधकेन्द्राणामरिवीर्यहरं परम् ।

योगीश्वर्यन्तु वर्णैश्च कल्प्यचक्षूंषि मन्त्रवित् ॥ १५ ॥

आवाहयेत् महादेवीं विश्वरूपां मनोन्मनाम् ।

जडतामधृत्य जिघ्रन् प्रमोद -- न्वितान् ॥ १६ ॥

शक्त्यन्तोच्चारयोगेन शक्तिसंवित्तिविद् गिरः ।

द्विरुरीयषडादित्यसङ्क्रन्दननभस्वती ॥ १७ ॥

संख्यास्वरविभेदेन----------प्रकल्पयेत् ।

सारमूर्ध्वशिखांगस्थं दृक्रिकं चारिसूदनम् ॥ १८ ॥

आधेयाधारसंस्थानि विद्याशिरमयानि तु ।

अङ्गानि वेदितव्यानि नेत्रज्योतिर्निदर्शनात् ॥ १९ ॥

आवाहनादिकं कर्म पूर्ववित् कृत्य मन्त्रवित् ।

हृत्तेजसि ददेत् पूर्वं चन्द्राङ्कितकपर्दिने ॥ २० ॥

मायाविनिःसृतां पूज्य पिङ्गलञ्च नभस्विनि ।

दिग्दलेषु न पूज्यानि दृग्दिशिस्थं प्रपूजयेत् ॥ २१ ॥

एवं षडङ्गसंयुक्तां कान्तां शुभकरीं लभेत् ।

सन्निधीकृत्य देवेशीमुपचारैः पुरोदितैः ॥ २२ ॥

उपास्य तर्पयेद् वह्नौ होमद्रव्यैः प्रकाशितैः ।

जपं कृत्वा निवेदित्वा होमकर्म विधीयते ॥ २३ ॥

अनयोर्व्युत्क्रमात् क्रम्य याति निष्फलतां ध्रुवम् ।

नित्यं तेजसि यष्ट्वा तु होमकर्म फलावहम् ॥ २४ ॥

काम्येत रत्नफलके विज्ञाने जातिवर्जनात् ।

शक्ति कार्येथ कुण्डे च स्थण्डिले मण्डलेप्यलौ ॥ २५ ॥

अन्या तु संस्कृतान्येषां न्यासात् स्यात् संकरो न हि ।

यागोपचयके सर्वं जातरूपमयं शुभम् ॥ २६ ॥

अर्घपात्रादिकं कार्यं वज्रेशीपदकांक्षिभिः ।

वज्रेशीरूपिणा नित्यं सेव्या देवी सुमेधसा ॥ २७ ॥

एतदेव व्रतं साधु साध्वर्थप्रतिपादकम् ।

साधूनां ॑ साधुवृत्तीनां सर्वाध्वार्थविमिश्रितम् ॥ २८ ॥

फुल्लारविन्दशोभाढयं व फुलाढय रससानुसमाश्रितः ।

तत्र स्थानविशुद्धिं तु कृत्वा सीराद्युपस्करैः ॥२९ ॥

मन्दिरैर्मठिकाद्यैस्तु पातयेत् क्रूरघातकी ।

कृष्णसूत्रधराङ्गारमर्दनाङ्कितम ॥ ३० ॥

रोपयेत् खादिरं शङ्कु दशदिक्ष्वस्त्रमन्त्रितम् ।

विपुलाम्बलिमाहृत्य लोकपालाम्बिकात्मिकाम् ॥ ३१ ॥

परितः स् गृहीतस्य क्षेत्र --- सत्तमः ।

तत्र कृत्य शुभागारं पूर्ववल्लक्ष्यलक्षितम् ॥ ३२ ॥

देवव्रतं क्रतुं कृत्वा टङ्कयोगे कृते सति ।

लङ्कालक्षजपोत्तीर्णो दशांशाग्निकृतक्रमः ॥ ३३ ॥

यागं कृत्य महादेव्यास्सर्वसंभारसंभृतम् ।

जपः सलक्षनिर्णीतो हुत्वाब्जानि दशांशतः ॥ ३४ ॥

अर्घकर्मक्रियाकल्पो जायते साधकेश्वरः ।

तुर्ययुग्मात् समानञ्च कर्मणोः पेशलो भवेत् ॥ ३५ ॥

यत्राखण्डलकोदण्डनिर्गमो धाम्निभावतः ।

तत्र वज्रेश्वरीजप्तः क्रूरघ्नं विकिरेद् बुधः ॥ ३६ ॥

सन्ध्यायामर्धरात्रे च वर्तिकां तैलबोधिताम् ।

केकरास्त्रायुतां जप्त्वा प्रक्षिपेदन्तदिग् बलिम् ॥ ३७ ॥

यावत् प्रविशते वर्णी जपेत् तावन्महेश्वरम् ।

सहस्रं जपते यावत् तावद् धूमोद्गमो भवेत् ॥ ३८ ॥

द्वाभ्यां ज्वालाकुलं स्थानं भवते गर्जते त्रिभिः ।

जपेदेवं चतुर्थेऽस्य यावत् तावन्महाफणी ॥ ३९ ॥

प्रस्फुरन्मूर्द्धमाणिक्याभीषुभासितविग्रहः ।

शङ्खकुन्दावदातस्तु निर्यात्य क्रूरलोचनः ॥ ४० ॥

वीक्षते दिग्रणं त्रस्तो मन्त्रमायापकर्षितः ।

दृष्ट्वा साधकचन्द्रं तु संकोचितमुखाम्बुजः ॥ ४१ ॥

अन्धरो वा जहन् शोभां यथा स कमलाकरः ।

पिण्डीकृतफणाजालसाधकाङ्घ्रियुगाग्रतः ॥४२ ॥

तरसाक्षिप्तकायस्तु स पपात ममार च ।

ततस्तं वीरमातङ्गः सहायानुचरान्वितः ॥ ४३ ॥

भक्षयेन्निर्विशङ्कस्तु स्मरन् वज्रेशीरूपकम् ।

तेन भक्षितमात्रेण वज्रेशीरूपधृङ् मुनिः ॥ ४४ ॥

-------शक्तिपर्यन्तं जगत्यत्राविशृङ्खलः ।

ससहायाशुजापश्च साभिप्रेतो ध्रुवाश्रयः ॥ ४५ ॥

अथवास्योत्तमाङ्गस्थमणिक्षिप्तमुखान्त ।

यतोच्चरेन्मन्त्री रम्यभागे मनोरमे ॥४६ ॥

समुच्चयेद् गतोस्थिनिं धनलिप्साविडम्बितः ।

यः कश्चित् स लभेद् भूप महापद्मनिधिं निधिम् ॥ ४७ ॥

व्यपतेन्न व्ययं तेन क्षयं याति व्योमस्थित्यंतसंख्यया ।

अथ भूतनिशामध्ये गत्वा भूतालयं गिरिः ॥ ४८ ॥

वज्रार्गलं लिखेत् तत्र मण्डलं सप्तहस्तकम् ।

निशातालपराकेन शिलाकिंशुकजेन वा ॥ ४९ ॥

षट्कण्टककरस्थायिपंकजेन व षट्कं कण्टककरस् विभूषितम् ।

तत्र वज्रेश्वरीं पूज्य षड्गात्रकविमालिताम् ॥ ५० ॥

तावद्दानाम्बुसंपृक्तैरासवैस्तर्पगन्धिभिः ।

भृष्टपक्वसुहृद्यानि फल्गुषांतानि सर्वतः ॥ ५१ ॥

चन्द्रपात्रे कृतामीषन्मृदुनि सुरभीणि च ।

निवेद्य विधिवन्मन्त्री पावकानि वह्ननि च ॥ ५२ ॥

पूर्वोक्तैश्चैव नैवेद्यैश्चाद्य मण्डलनायकम् ।

अर्घं पुनः पुनर्दत्वा वज्राङ्कुशकृतःश्रिया ॥ ५३ ॥

वह्निस्थां तर्पयेद् देवीमनङ्गास्त्रामिषैर्नवैः ।

तिलैः सिद्धार्थकैर्वाथ वसाज्याक्तैस्तु भूरिशः ॥ ५४ ॥

राजीवं शक्तिदण्डञ्च कृपाणं वरुणायुधम् ।

पताकां लकुटिं शूलं प्राक्कृत्वाग्रादि विन्यसेत् ॥ ५५ ॥

हस्तानि शतधाराणि पुष्टानि समयानि तु ।

अस्त्राण्येतानि दीप्तानि कंजे दलगतानि तु ॥ ५६ ॥

हृदा संपूज्य विधिवत् ततः कर्म समाचरेत् ।

गोप्यकौशेयगेशानः पीतनेपथ्यधृङ् मुनिः ॥ ५७ ॥

अनन्तद्दृढबन्धांतमासनं  कल्प्य संहतम् ।

आत्मानमात्मरूपन्तु कल्पयेद् ध्यानविद्यया ॥ ५८ ॥

पद्मना    ष्तं दन्तिनास्कन्दविग्रहे ।

ततस्तु सकलीकरणं कृत्य मन्त्रं परापरम् ॥ ५९ ॥

भोगेङ्गसहितं  न्यस्य परि दत्वा सटानलम् ।

ध्यानेन च     जपेद् बीजं मनोर्चिषा ॥ ६० ॥

यावत् सहस्रमेकन्तु तावत् काष्ठा ज्वलन्ति हि ।

प्रोल्लसन्तीन्द्रचापानि स्फुरते विद्युतां लताः ॥ ६१ ॥

पिप्पलालपिनां माला ः गर्जन्ति च समन्ततः ।

आसां दिशोऽन्धकारेण स्वस्वरूपा विभाविताः ॥६२ ॥

अयुतेनाचलद् वज्रं दिग्बन्धेन गजोऽकरोत् ।

मत्ताम्बुधरनिर्घोषगम्भीरं कण्ठगर्जितम् ॥ ६३ ॥

रमन्ति सुचिरं विद्धा ः यावत् ते परमां गतिम् ।

तस्मिन् कालेऽब्जशृङ्गाग्रस्थितमस्त्रकदम्बकम् ॥ ६४ ॥

क्षरत्प्रज्वालनाभासि बभूव तडिदंशुवत् ।

तद्गृहीतकरा वीरा भवन्ति व्योमचारिणः ॥ ६५ ॥

स्वच्चन्दाः सर्वगा नित्या महामोदविजृम्भिताः ।

न शक्तिः सुचिरं सिद्धा यावदन्ते परा गतिः ॥ ६६ ॥

सदा च वीरमार्तण्डो वज्राब्जगजचक्रिणः ।

स्पन्दनेन जगत्कृत्स्नमभ्रमद्दीप्तमण्डलम् ॥ ६७ ॥

अनस्तमितसूर्यस्तु स्वभासास्तमहत्तमाः ।

अनायद् रागहीनश्च अनायत् स धनोज्वलः ॥ ६८ ॥

वपुषा वज्रधारिण्या लीलायतजगद्गिरः ।

प्रयाति परमां काष्ठां स्वेच्चया लब्धभोजनः ॥ ६९ ॥

महोदयादेर्देवीनां देवीनां साधनाराधनैर्नृपः ।

उक्तेयं तत्क्रमाद् देवि तदुक्तार्थं प्रसाधयेत् ॥ ७० ॥

जयद्रथ उवाच ।

देव्या वज्राब्जधामानि श्रोतुमिच्चामि शङ्कर ।

साधकानां हितार्थाय संदेहविनिवृत्तये ॥ ७१ ॥

श्रीभैरव उवाच ।

षट्त्रिंशदङ्गुलं सूत्रमस्य कल्पोक्ते महीतले ।

दशाष्टाङ्गुलकं तत्र कुर्याद् वृत्तद्वयं ॥ ७२ ॥

कदलीकृत्य तत्र रेखां प्रपातयेत् ।

जीवसङ्गमतोधोर्ध्वमष्टभागैर्विभाजयेत् ॥ ७३ ॥

मूलबिन्दोश्चतुर्भागे समं वृत्तं तु भावयेत् ।

न तत् पद्मं वृत्तान्तं संप्रकल्पयेत् ॥ ७४ ॥

ततोऽम्बु जीवसाने तु भागेनैकेन मन्त्रवित् ।

भ्रामयेन्नाभिवृत्तन्तु मध्यं तद्वृत्तयोर्द्वयोः ॥ ७५ ॥

नाभ्यूर्ध्वं जीवपार्श्वे तु तयोर्मध्येन लाञ्चयेत् ।

नाभ्यङ्गनिर्णसूत्रे तु तयोर्मध्ये प्रपातयेत् ॥ ७६ ॥

तन्मध्योल्लेख्य यत्नेन ततोऽग्रान्मूलजीवनम् ।

कृत्वा सूत्रं व सूत्र लिखेच्छृङ्गे शृङ्गे लिखितोल्लेखमानगे ॥ ७७ ॥

शृङ्गबाह्ये तु या रेखा संसक्ता नाभिमण्डले ।

नाभोर्ध्वे तु तयोश्चिह्ने नाभिमाने कृते सति ॥ ७८ ॥

चिह्नजीव्यग्रमध्येनोल्लेखः  कार्यश्चतुष्पथे ।

शृङ्गाणां बाह्यमूले तु षट्कण्टकविधायिकः ॥ ७९ ॥

ततस्तु वर्तयेच्छृङ्गे मध्यमे पार्श्वयोर्द्वयोः ।

नाभ्यूर्ध्वबिम्वभागस्थं  भागं भागन्तु पार्श्वयोः ॥ ८० ॥

ऊर्ध्वमास्फालयेत् सूत्रे ह्यधो ह्येवं प्रयत्नतः ।

नीत्वा नित्या   स्वस्वरूपोपमानगा  ॥ ८१ ॥

------------------------

एवं निर्णीतकुलिशः प्रोक्तमब्जं विसर्जयेत् ॥ ८२ ॥

प्रोक्तस्थानेऽष्टपत्रं तु केसरालं सकर्णिकम् ।

संस्मृता    माया    विसर्गोमल चोदितैः ॥ ८३ ॥

जातरूपस्वरूपन्तु कृत्वा पङ्कजमुज्ज्वलम् ।

कीराभां कारयेन्नाभिशृङ्गधाराः सितान्शुगे  ॥ ८४ ॥

धुरिध्वाधमशेषं  तु   प्रपञ्चवलयोपमाः  ।

दाडिमीकुसुमाभांसि  शृङ्गमध्यानि कारयेत् ॥ ८५ ॥

द्यूतप्रवाहिनी सिद्धा भाति योज्य संततिम् ।

पततो ज्ञानिभिः --स तत्रैव गुणावहः ॥ ८६ ॥

विधायत्वात् तु वज्रेश्या : आसनस्य श्रियं पराम् ।

अथवाम्बुजनिर्मुक्त ह्यवते दधुतिका -- ॥ ८७ ॥

धून्यानिधून ख वर्त्तितं देशिकेच्चया ।

दक्ष्योदक्कण्ठकं वर्त्यं वज्राधिष्ठानमादरात् ॥ ८८ ॥

तत् परिवज्रवर्णन्तु व ।

वज्रवर्तनभागवत् ॥ ८९ ॥

ततस्तस्मिन् यजेद् देवीं निर्णीतक्रमयोगतः ।

यष्टे त्रिकन्तु विन्यासः-------- ॥ ९० ॥

काल शालिनीयं व्रजेश्वरी वज्रविधानतुष्टा ॥ ९१ ॥

चकारवीरावरवज्रकायां निसर्गतत्त्वाच्युत ॥ ९२ ॥

इति श्रीभैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसंकर्षण्यां विधिः अष्टाविंशतिः पटलः ॥ २८ ॥

उनतृंशः : पटलः

श्रीदेव्युवाच ।

निसर्गार्थो महादेव कीदृगर्थं ------ ।

-----------निर्भ्रान्तं वक्तुमर्हसि ॥ १ ॥

श्रीभैरव उवाच।

विलयोत्पत्तिहीनं˙ यत्स्वस्वभावाच्युताक्षरम्।

-------------------------॥ २॥

चानुभवाद्यैश्च वहिःस्थमिव भासते।

तस्याधिकारतो व्योमरूपयोऽन्तप्रतिष्ठितः॥ ३॥

अव्युच्चिन्नप्रवाहा ।

तानन्तस्वरूपैश्च वहिःस्थितम् ॥ ४॥

चित्स्वभावमयं दुर्गं सदोदितमखण्डितम्।

स्वप्रतिष्ठमसंगूढं----------˙ तत्व ॥ ५॥

चित्रगुणदर्शकम्।

बाह्यस्थं तद्धि मार्गस्थं नैसर्गमितरं मतम्॥ ६॥

श्रीदेव्युवाच।

महाविनो ।

दग्धजनानां तद्योग्य व ख तयोग्य पद्मदिवाकरः॥ ७॥

नीलग्रीवो मनो जन्मादेवं विध्वंसकेश्वरः।

भूयोऽपि ॥ ८॥

सर्वजन्तूनां किमन्तः स्पन्दते मतम्।

किं ज्ञेयं सर्वविद्यानां कर्तव्यानाञ्च का क्रिया॥ ९॥

अपेक्ष-------------------------।

त्वत् प्रसादतो ब्रूहि सन्देहविनिवृत्तये ॥ १० ॥

श्रीभैरव उवाच

कालसङ्कर्षणी देवी सकला ।

करविभागगा - ॥ ११ ॥

स्थूलाकारकृताधारा सूक्ष्मदेहत्वमाश्रिता ।

मुमुक्षोर्भोगसन्तानं लोपयित्वा ॥ १२ ॥

---------------------त्रिवलोत सूर्यमण्डलम् ।

स सोमः कण्ठबाहुस्थो घण्टिकाभमजं मुखम् ॥ १३ ॥

निरोधिका भ्रुवोर्द्धे तु ।

बिन्दुं खण्डेन्दोरुपरि स्थितम् ॥ १४ ॥

द्वादशाङ्गुलकोदण्डे ऋजु ऊर्ध्वे सकुण्डलम् ।

कृत्य विस्फूर्जिते ॥ १५ ॥

यः शेषव्रीह्याः व शेषं ब्रीह्या शरीरकम् ।

हंसाक्षरद्वये क्षीणे विसर्गे च लयं गते ॥ १६ ॥

रेखा बाह्यशरीरन्तु तल्लक्षणमिदं स्मृतम् ।

--------------------तद्बाह्यशरीरकम् ॥ १७ ॥

स शिवः शक्तियुक्तस्तु शरीरं परमं स्मृतम् ।

चारे हंसाक्षरं याति शक्तौ स च ॥ १८ ॥

तीता च रेखिका ।

स्वभावः कृतको यन्नो यत् तद् रेखा वसानिकम् ॥ १९ ॥

मायेयं तद्गतं सर्वं मत्स्यजालमिवाङ्भ ।

मदः सृष्टिकुण्डलम् ॥ २० ॥

तन्मनोन्मनसंवित्तिरेखा चात्मन इष्यते ।

हंमनोन्मन ख हंसनोन्मन इत्युक्तं सोन्मनः स ॥ २१ ॥

सर्गगुणलक्षणा

कालसंकर्षणी ह्येषा स्वभावस्था वधूतिका ॥ २२ ॥

उच्चुष्मा तु निराचारा निसर्गा पुत्रवाहिनी ।

अघोरामृतवर्णा या विज्ञप्तिस्था निरामया ॥ २३ ॥

श्रीदेव्युवाच ।

कालसङ्कर्षणी पूर्वपदानां संप्रयोजनाम् ।

स्यु ख स्फु------------------ते ॥ २४ ॥

श्रीभैरव उवाच ।

कालरूपस्त्वहङ्कारः कलाषोडशकान्वितः ।

सनादो मरुदाकीर्णे--------------- ॥ २५ ॥

एकसर्गस्तुटी द्वे तु रेखा तु द्यन्तमिष्यते ।

एवं सर्वेषु देहेषु हंसः कालस्वरूपतः ॥ २६ ॥

सम्यक् कर्षयते जीव ------- ।

------ माश्रित्य निर्व्यापारो भवत्यपि ॥ २७ ॥

वसर्गः प्रोच्यते मन्त्रो व मन्त्रः मननत्राणधर्मतः।

मन्त्रातीतदशा रेखा ------------- ॥ २८ ॥

कालरूपेण सा रेखामृतवाहिनी।

जीवकायसमाकर्षात् परिणामयते ततः ॥ २९ ॥

अतो सोऽहं -----------------।

उच्यते परमा शक्तिः प्रागुक्ता तु परापरा ॥ ३० ॥

स्वभावो कृतकः सत्ता सर्वसत्तासमालया।

सुप्रतिष्ठामला नित्या स्वस्वरूपोपमानगा ॥ ३१ ॥

कर्मशुद्धिकलाधारा वल्लीयं त्रिस्वरूपगा।

अपशब्दपदावस्था हंसशक्तिप्रतिष्ठिता ॥ ३२ ॥

हं कर्मसंस्मृता माया विसर्गो मल उच्यते।

एतत् सर्वं ध्वनेर्यस्माद् यस्माद् द्वये रेखावसानिके ॥ ३३ ॥

अवधूता तु सा तस्माद् गीताशक्तिप्रवाहगे

धुरि वाधमशेषन्तु प्रपञ्चं चिद्विलोमदम् ॥ ३४ ॥

चित्स्वभावं स्वभावस्थं कुर्यात्तेनावधूतिका ।

अवते प्रयोजकेभ्यो धुनित्वा योज्य सन्ततिम् ॥ ३५ ॥

या ततोज्ञानिभिर्धीरैरवधूता प्रगीयते।

हंसशक्तिः सरेखान्ता धुनित्वा लयसंस्थिता ॥ ३६ ॥

स्थित्युत्पत्तिविनाशिन्यो ह्यवते तेऽवधूतिका ।

धून्या निधूनते यस्मादध्व्या निर्वर्द्धते यतः ॥३७॥

अतोऽवधूतिका देवी कालसङ्कर्षणी मता।

अवपालनमित्युक्तं धुनने क्षपणं मतम्॥ ३८ ॥

अवनात् तेन धून्याच्च सावधूताभिधीयते ।

यो यस्य तु समुद्धारः स तस्योच्चुष्म उच्यते॥ ३९॥

संसारोच्चुष्मरूपोऽयमुच्चुष्मा सोदिता ततः।

स हंसस्तस्य सोच्चुष्मा शब्दशक्तिशरीरगा॥ ४० ॥

उच्चुष्मा प्रोच्यते तज्ज्ञैःरुच्च्वासार्थविचिन्तकैः ।

उद्गमः पूर्वजस्थानं हकाराक्षरमुच्यते॥ ४१ ॥

सोच्चुष्मा स विसर्गस्तु स्थूलोच्चुष्मः प्रकीर्तितः।

रेखा सूक्ष्मा समाख्याता तदन्तममृतं मतम्॥ ४२॥

उच्चुष्माकृतकं चित्त्वं भावनामयमुच्यते ।

रेखोपलब्धिकं तच्च मायारूपमुदाहृतम्॥ ४३॥

स्वभावो योऽधिकारस्तु स्वस्थोऽन्यैरविभेदतः।

रेखान्तममृतं तद्धि सूक्ष्मोच्चुष्मावसानगम्॥ ४४ ॥

निमित्तरूपतः शक्तेरुच्चुष्मोऽयमुद्गतो यतः।

उच्चुष्मादुच्यते शक्तिर्मामकीयमनोर्थतः ॥ ४५॥

निरस्याज्ञानमखिलं तेनेत्यं ज्ञानमात्मनः।

या चारान्तरविज्ञाना निराचारा ततः स्मृता॥ ४६ ॥

निर्निरस्यपदोक्तिस्तु आसमन्तार्थनिश्चयः।

चरार्थो गतिमक्षोभ्यामर्थदानप्रतिष्ठितः ॥ ४७ ॥

आसमन्तान्निरस्ते तु चारेऽस्मिन्नातिलक्षणे ।

स्तिमितानुगताशक्तिर्निराचारोच्यते वुधैः ॥ ४८ ॥

निःशब्देन हकारस्तु आसकारः ससृष्टिकः।

चारे रेखा समाख्याता तत्परे शक्तिमात्मनः ॥ ४९ ॥

चारो नादः समाख्यातो योऽयं मन्त्राणि वाहयेत्।

अप्रयत्ननिरस्तोऽसौ निराचारेति घुष्यते ॥ ५० ॥

आनन्दयति भूतानि निरस्वां निर्गलार्गलाम्।

निःस्वरूपा यतः शक्तिर्निराचारोच्यते ततः ॥ ५१ ॥

आचारिणश्चरित्वा तु निःशेषवशमार्गगाम्।

यतो निर्वाणदां देवी निराचारा ततो मता ॥ ५२ ॥

नैसर्गं शाश्वतं रूपमाचारः परमार्थगः।

निराचारस्तु यः प्रोक्तो विज्ञानादमृतप्रदः ॥ ५३ ॥

निसर्गः शाश्वतं रूपं स्वाभाविकमुदाहृतम्।

तद्यस्या ः मोक्षदं ज्ञानं सा निसर्गाभिधीयते ॥ ५४ ॥

यन्त्राणि तनवोऽन्यूनां ं तां निर्वाहयते यतः।

प्रगुणात् प्रगुणाद् योगात् प्रोक्तातो यन्त्रवाहिनी ॥ ५५ ॥

यंत्रं षोढागताध्वोक्तमधुगं त्रियुतं ततः।

महदाधाररूपस्था प्रोक्तेयं यन्त्रवाहिनी ॥ ५६ ॥

अघोरं शान्तमित्युक्तं निःशेषोपशमं स्थितम् ।

तत्स्वरूपं यतस्तस्यास्ततो घोराख्यया मता ॥ ५७ ॥

नमृता या कदाचिच्च नित्यत्वगुणयोगतः ।

अमृता सामृता शक्तिरमृता चामृतात्मनः ॥ ५८ ॥

आनन्दो नाम निर्वाणः सुखं यत्तन्निरन्तरम् ।

तत्स्वभावा यतस्मातु निर्वाणोक्ता ततो मया ॥ ५९ ॥

ज्ञायंते ज्ञेयसंवित्तिर्ज्ञप्तिरुक्ता ज्ञप्तिरूक्ता तु सूरिभिः ।

तद्रूपे तु यतः शक्तेः सा ज्ञप्तिश्चोदिता ततः ॥ ६० ॥

आमया नामदोषास्तु मायित्वाणूद्र्ध्वलक्षणाः ।

तैर्मुक्तातो यतः शक्तिः सूत उक्ता निरामया ॥ ६१ ॥

रेखान्तं भैरवं तत्वं रेखा देवः सदाशिवः ।

विसर्गमीश्वरं विद्धि सकारं मां त्वया सह ॥ ६२ ॥

हकारः पद्मजन्मा तु तद्बिन्दुः सौरिरुच्यते ।

निवृत्तिश्च प्रतिष्ठा च महद् बिन्दुगते विदुः ॥ ६३ ॥

सविद्यान्तो द्विसर्गस्तु शान्तिर्नाम कला मता ।

शान्त्यतीता तु सा रेखा योन्मनी परिकीर्तिता ः ॥ ६४ ॥

तदन्तस्तन्महाभूतमप्रयत्नस्वभावगम् ।

स्वभाववचनं रेखा विसर्गश्च मनोन्मनः ॥६५ ॥

सकारोमन इत्युक्तोऽहङ्क्रिया यन्त्रवाहिनी ।

भूब्रह्मप्राणजाग्रादि हकारादिषु संस्थितम् ॥ ६६ ॥

प्रपञ्चाक्षरमेतद्धि बुध्वा तिष्ठ सुखं प्रिये ।

प्रोक्तमेतत् सर्वगतं बहिरपि स्थितं तत्वं रूपगुणमक्षरम् ॥ ६७ ॥

निष्प्रपञ्चं मायात्मकं सकलनिष्कलं निष्प्रपञ्च संविन्मयं न

चिदुपागतम् ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां देवीनां मन्त्रवर्णस्वपनिरूप

णं नामैकोनत्रिंशः ॥ २९ ॥

त्रिंशतिः पटलः ।

श्रीदेवुवाच ।

किं ज्ञेयं सर्वविद्यानां चन्द्रचूडामणिर्मम ।

कथयस्व मया पृष्टं सन्देहविनिवृत्तये ॥ १ ॥

श्रीभैरव उवाच ।

निमन्त्रो न जानाति कश्चित् प्रश्नं नगात्मजे ।

न च वक्तुं महादेवि मम तुल्योऽपि यो भवेत् ॥ २ ॥

बहुभिस्तीर्णगहनैः कल्पनान्तां प्रतिक्रिया ।

नाति निश्चयीकर्तुं पृथक्तया प्रदर्शनात् ॥ ३ ॥

वस्तु ज्ञेयं समाख्यातं ज्ञानं तस्य विवेचकम् ।

विवेचको विकल्पस्तु स च चिद्रूपमाश्रितः ॥ ४ ॥

चित्रागमविभागस्थो व्यवहारः सुनिश्चितः ।

चिज्ज्आनस्य नियोक्तात्र चित्तं ज्ञेयं विवेचने ॥ ५ ॥

विज्ञानञ्च तथा ज्ञेयं त्रिकमेतत् पृथक् पृथक् ।

एकीभावं यथा याति ज्ञेयं तत् किल मोक्षदम् ॥ ६ ॥

विज्ञाने विमलं याति ज्ञानें ज्ञेयं विलीयते ।

ज्ञेयस्वरूपको योगी मुच्यते भवबन्धनात् ॥ ७ ॥

भावयित्वा च भाव्यञ्च भावना च त्रिकस्य तु ।

अस्मादवयत्वाद् यो मोक्षः स मोक्षो भावनामयः ॥ ८ ॥

ज्ञानेन ज्ञेयरूपाणां हेयोपादेयभेदतः ।

श्रुतार्थान्निश्चयस्तेषां मोक्षः श्रुतिमयोमयः ॥ ९ ॥

सत्संविन्मयदं मोक्षं विन्दते पदयोगिनः ।

योगिनस्तं न जानन्ति स्ववार्तामिव मानुषाः ॥ १० ॥

न स श्रुतिमयोमोक्षस्तदा तद्भावतामयः ।

मुख्यः संविन्मयः प्रोक्तः संविदर्थविशारदैः ॥ ११ ॥

श्रीदेव्युवाच ।

किल मुक्तास्मि देवेश सन्देहः प्रोज्झितोमया ।

सन्देहादपि सन्देहों न परं योजितः प्रभो ॥ १२ ॥

एकमेकस्वरूपन्तु मोक्षस्येच्चन्ति सूरयः ।

परत्वस्य तु तत्त्वज्ञो विरूपप्रतिपत्तितः ॥ १३ ॥

भावनाश्रितसंवित्तु यन्मे बन्धुविनाशकम् ।

यया तथ्यन्तु तद् ब्रूहि मया तद्वन्धविग्रहः ॥ १४ ॥

श्रीभैरव उवाच ।

अयत्नसंविदो मोक्षो योऽयं स परमार्थतः ।

शेषा प्रयत्नसंसिद्धिः सविकारा न मोक्षदा ॥ १५ ॥

वेत्तृवेदनवेद्योक्तक्रमतो वर्जिता मया

मृतास्ते शैवसिद्धान्तस्थिता यन्न पदोज्झिता ॥ १६ ॥

श्रीदेव्युवाच ।

स्वभावस्यान्ययत्नस्य निर्विकारस्य शङ्कर ।

उद्देशाय प्रसादेन देहि मे ज्ञानविग्रहम् ॥ १७ ॥

प्रालेयमिषुबिम्बार्द्धमौलिमण्डलभाषितम् ।

प्राहेशोऽनन्यजा पूर्णा दृगवेक्ष्य प्रियामुखम् ॥१८ ॥

स्वभावरंगमध्ये तु नृत्यते नटवज्जगत् ।

वृत्तित्रय समालंब्य नानाभावरसाश्रयैः ॥ १९ ॥

एतदिच्चादिकं तस्य न वाचकमुदाहृतम् ।

स्वभाव एव निर्दिष्टो वाच्यवाचकरूपतः ॥ २० ॥

बोध्यबोध्ये चले येषां मोक्षो मोक्षार्थवादिनाम् ।

तेषां प्रयत्नसन्तापप्रयत्नं ह्येव बन्धनम् ए वर्धनम ॥ २१ ॥

ते यास्यन्ति परां काष्ठां भावो येषां न चेतसि ।

परान्तरात्मबाह्यात्मचिन्तया ये च वर्जिताः ॥ २२ ॥

मुक्तामुक्तिगमार्गं स्वमार्गणं ह्येव बन्धनम् ।

तत्र चित्तादिसंकल्पो निर्विकल्पं हि तत्परम् ॥ २३ ॥

निर्गुणस्य हि नैर्गुण्यं विकल्पो गुणवद्यतः ।

अतो न वाचकस्तस्य वाचकः किन्त्ववाचकः ॥ २४ ॥

उपादेयमिदं ह्यत्र स्थितिं को वेत्ति यान्वितम् ।

विकल्पोच्चूनता नुतामनुभावप्रसाधिता ॥ २५ ॥

ज्ञेयानां भिन्नरूपाणां यज्ज्ञानमुपलब्धिकम् ।

विभुर्ज्ञेयस्य तद्रूपं शब्दस्येव रसेन्द्रियम् ॥ २६ ॥

प्रश्नोत्तरप्रयोगेन आसीत् स्वच्चस्वभागम् ।

हृतं भवत्या प्रश्नेन मया चाप्युत्तरेण तु ॥ २७ ॥

योगादिकमशेषन्तु योगं भूतलगोचरम् ।

जाग्रत्स्वप्नसुषुप्तान्तं प्रवेदिनाम् ॥ २८ ॥

लयोत्पत्तिस्थितिर्यस्य तदनित्यमिहेष्यते ।

तदा भावः स्मृतो नित्यो ह्यनित्यो तथ्यता स्मृता ॥ २९ ॥

वाच्यवाचकता वाच्य शब्दाद्यैर्भवते यदि ।

तदा तदर्थरूपं स्यादर्थोपि हि घटादिवत् ॥ ३० ॥

बृहद्वस्तुप्रतिष्ठायां सा स्वभावैकगोचरा ।

शेषात्मज्ञानशास्त्रेभ्यो ज्योत्स्नेव प्रविजृम्भते ॥ ३१ ॥

अनाकृष्टमहास्वापो विमुक्तस्वान्तमार्गणः ।

निर्लक्षं लब्धलक्षो यो विव्याध स धनुर्धरः ॥ ३२ ॥

उपेयुषं स्वां परमामवस्थां किं शास्त्रजालेषु मनो दद्ध्वम् ।

शास्त्राणि मायार्थविशारदानि प्रपञ्चशून्यस्तु पुनर्निसर्गः ॥ ३३ ॥

निर्विवेकनिरारम्भसुप्रतिष्ठस्वभावगे ।

उपदेशे गुरुरहं शेषान्ये मोक्षवादिनः ॥ ३४ ॥

वाच्यमवाचकमस्वरमजमत्तपमगुणसमलबलसंवेद्यम् ।

तद्वदुपदेशवेद्यं वक्तुं शक्नोति कोऽत्र हिमगिरितनये ॥ ३५

इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्त्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां निसर्गनिर्णयस्त्रिंशतिः

पटलः ॥ ३० ॥

एकतृंशतिः पटलः ।

श्रीभैरव उवाच ।

प्रपञ्चेन तया मुक्तः प्रविभागनिबोधितः ।

कर्तव्यानां क्रिया ह्येषा मुक्तेः साधनभावतः ॥ १ ॥

प्रपञ्चोऽयमयं शम्भुरुभयोरन्तरं स्फुटम् ।

आत्मतत्वक्रिया ह्येषा सदाशिवपदानुगा ॥ २ ॥

श्रद्धयानुभवाविष्टं परमेतद्धि तत्पदम् ।

विद्याविधानमेतद्धि बिन्दुतत्वस्वरूपदम् ॥ ३ ॥

अवधानविनिर्मुक्तमुपलब्धैकगोचरम् ।

शिवतत्वं स्वभावस्थं स्वस्वभावप्रकाशकम् ॥ ४ ॥

संसारदुःखविच्चेदं कर्तव्यं साध्यमिष्यते ।

यत्साधनक्रिया या तु निर्मथ्या सा क्रिया मता ॥ ५ ॥

आविर्भावतिरोभावविनाशस्थित्यनुग्रहः ।

कर्तव्यमस्य च क्रिया स्वभावपरभावना ॥ ६ ॥

प्रेरकत्वं हि यच्चंभोरिच्चामात्रप्रसिद्धिगं ।

हृत्यनिष्पत्ति दृष्टेन सा क्रियेत्युपचर्यते ॥ ७ ॥

बद्धानां बन्धविश्लेषो यत् यः स्वभावप्रबोधना ।

सा क्रियाणां क्रियार्थाय परमाणुः कृतो यया ॥ ८ ॥

भोगो नाम समास्वादः पुंसामनुभवात्मकः ।

स प्रपञ्चोऽप्रपञ्चश्च प्रयत्नश्चाप्ययत्नवान् ॥ ९ ॥

त्रियोगात् मानवः सिद्धः स्वभावश्च निसर्गजः ।

बन्धक्रियानियोगस्तु मोक्षः स्वाभाविकी क्रिया ॥ १० ॥

बन्धमोक्षान्तरं ह्येतदबुध्वा कुत्र निर्वृतिः ।

सूक्ष्मयिाधिगतमद्भुत बन्धमोक्षमित्थं नवाः शिवमहागमादर्शितार्था ।

येनापकृष्य रुजमुग्रमनदिसिद्धः तच्चाप्य वाप्यविपुलं भवताच्चयुतौजाः ॥

११ ॥

इति भैरवस्रोतसि विद्यीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं
शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां क्रियाशक्तिस्वरूनिरूपणं
नामैकत्रिंशतिः पटलः ॥ ३१ ॥

द्वात्रिंशतिः पटलः ।

श्रीभैरव उवाच ।

यत् तत् स्वभावरूपन्तु तत्त्वं शान्ततमं  स्थितम् ।
तद् ज्ञायते तत्क्रियया यतोऽङ्गं तस्य न क्रिया ॥ १ ॥
अनङ्गत्वाच्च तत् तत्वं तत् तत्वमुक्तं मुक्त येन हि ।
शक्तिगोचरगं तद्धि सप्रपञ्चं क्रियात्मकम् ॥ २ ॥
सूक्ष्मात् सूक्ष्मविभागेन भोगालयमुदाहृतम् ।
मन्त्रस्थं सप्रपञ्चन्तु उभयार्थप्रसाधकम् ॥ ३ ॥
निष्प्रपञ्चा प्रयत्ना या रुपलब्धेरनन्तरम्  ।
निर्वाणविभवा सिद्धिः शेषं क्रीडाविधायकम् ॥ ४ ॥
स्वाभाविकं स्वतन्त्रन्तु क्रीडाख्यं भावनामयम् ।
सूक्ष्मक्रियामयं ज्ञानं यत् तच्चूरुतमयं क्रिये ॥ ५ ॥
ज्ञानायत्ता क्रिया देवि तत् तन्त्रं  तत् कथं भवेत् ।
तस्मात् स्वविषयोपान्तं धत्ते स्वविषयं फलम् ॥ ६ ॥
येषु येषु यथायातं मुक्तिसाधनवस्तुषु ।
तेषु तेषु तथा वीर्यं तत्तु योग्यत्वसंस्थया ॥ ७ ॥

वासनाकर्मविद्याभिर्मन्त्रैर्दीक्षाख्यकर्मणा ।

चर्यायोगचरुप्राणिकायसंभवप्राशनैः ॥ ८ ॥

क्रियामार्गगतं तत्त्वं जन्तुर्निर्वापयत्युमे ।

न कश्चिद् बलवांल्लोके यज्ज्ञानमतिवर्तते ॥ ९ ॥

तन्मूलानि फलान्यत्र निश्चयः सर्वसूरिणाम् ।

प्रालेयाचलसम्भवे स्फुटतराः प्रश्नास्तदीयाखिलाः ॥ १० ॥

व्याख्याताः सुरवृन्दमौखरितटे रूद्धष्टपादाम्बुजे ।

चर्या त्वं शृणु सांप्रतं स्मर तनोर्भोगात्मनां भोगदाम् ॥ ११ ॥

स्वांशोद्देशविभागपाटनविधेरन्योन्यशर्मात्मिकाम् ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां सन्धिनिवारणो नाम द्वात्रिंशतिः पटलः ॥ ३२ ॥

त्रयस्तृंशतिः पटलः ।

श्रीभैरव उवाच ।

एवं निःशेषचक्राणां विज्ञानाशेषलक्षणः ।

ऋत्विगे कतमे चक्रे चतुर्थांशमयात्मनाम् ॥ १ ॥

श्रावयेत् समयान् भूत्यै यावतश्च यथास्थितान् ।

गुणदञ्च गुणातीतं गुणिनं गुणसंपदः ॥ २ ॥

शान्तघोरविमूढाश्च मिश्रामिश्रात्मकात्मिकाः ।

सदाभिवन्दयेत् प्राज्ञो निन्दयेन्न कदाचन ॥ ३ ॥

कन्याङ्गेषु विध्वम्सं भैरवस्नातकर्मणाम् ।

न कुर्याच्च विलोमस्थो ह्यन्येषामपि लिङ्गिनाम् ॥ ४ ॥

देवतानां गुरोश्चैव यद् द्रव्यं स्वीकृतं क्वचित् ।

न कुर्याल्लोपयोगन्तदकर्मी तु कदाचन ॥ ५ ॥

नारुहेद् गुरुतल्पञ्च वीरपत्नीं न कामयेत् ।

जटाभस्मधरां नारीं शङ्खभूषां तथैव च ॥ ६ ॥

नवा तद् द्वैतमन्त्रांगः प्रणमेद् द्वैतमन्त्रिणाम् ।

नाधिकारकृतिं कुर्याच्चुम्बकः साधकोऽपि हि ॥ ७ ॥

आह्निकस्य महादेवि स्थित्यैषा वामचारिणाम् ।

श्रीदेव्युवाच ।

गुरुनिन्दादिकैर्दोषैः राजसानेन्दुभूषणः ॥८ ॥

कीदृक्फलं ललाटाक्ष अग्निदग्धमनोभव ।

श्रीभैरव उवाच ।

गुरौ गुरुतरे तत्त्वे स्थानं साधारणं मतम् ॥ ९ ॥

निन्दिते वीचिपूर्वन्तु कूष्माण्डान्तमनुक्रमात् ।

गुरूणां गुरुतरो ज्ञेयो यच्चक्यंजितचेतसः ॥ १० ॥

प्रयान्ति परमां काष्ठां सदाविध्वस्तकल्मषः ।

सा परापररूपेण जगत्यत्र विसर्पिता ः ॥ ११ ॥

पर स्वाभाविको ज्ञेयः क्रीडावस्थः स मन्त्रराट् ।
क्रियाशक्त्याश्रितः सो हि गुरुरित्यभिधीयते ॥ १२ ॥
त्रिरूपोऽप्येकरूपोऽयं निर्मितो यैर्दुरात्मभिः ।
न तेषां न तनुध्यानं तेनैते यान्त्यधोगतिम् ॥ १३ ॥
योग्याशुचिर्मयारोध कूष्माण्डाधिपतिर्भवेत् ।
त्रयाणां कन्यकादीनां समयानां विलोपिनाम् ॥ १४ ॥
दुन्दुभादित्रिकस्थानं स्थितेः स्यादीश्वरस्थितिः ।
व्यापादिते तथा शैवे त्रिस्वरूपेऽपि च सुन्दरि ॥ १५ ॥
चतुर्थस्थानसंप्राप्तिर्भवेद् बोधादिसंस्थया ।
विद्यालये विमुच्यन्ते कामिकाप्तनिरोधिनः ॥ १६ ॥
कापालिकीं प्रपञ्चस्य संख्याकर्तुश्चलाकुलाम् ।
दण्डधृक् सूचकानां च लिङ्गिनां हास्यहिंसया ॥ १७ ॥
दण्डाः कोलाहलाःकङ्का हि  द्युपातालवासिनः ।
भवन्ति प्राणिनः स्थित्या कालाग्नेर्मम च प्रिये ॥ १८ ॥
देवतानामयादीनां कृतया द्रव्यहिंसया ।
प्रेतादिषु हि लोकेषु निरोधस्तत्स्थितिर्भवेत् ॥ १९ ॥
गुरुष्वेवज्ञया दृष्टे गतिर्दैवस्ववद् भवेत् ।
कामतो हिंसितेऽत्रापि नंदीख्यं पदमाप्नुयात् ॥ २० ॥
प्रदत्तं कर्मणा भुक्तं गुरुस्वं न निरोधकृत् ।

प्राणैरपि हि तत्प्रायोऽद्योऽसौ प्राप्नोत्यभीप्सितैः ॥ २१ ॥

अपशुप्राणिमेतद्धि भविष्यति जगत् किल ।

जलचक्रे विवर्तन्ते कालाद् योगत्वसंस्थया ॥ २२ ॥

तत्रापि गुरुपत्नीगाः योग्या रौरवभूमिषु ।

निरयस्नायिनस्ते तु गुरुघ्ना ये च पापिनः ॥ २३ ॥

वीरजायाभिगामी च भवेद् बालो हलान्तगः ।

दण्डमण्डलमाप्नोति जटाभस्माङ्गिनीषु या ॥ २४ ॥

कापालिनीनिषेवी रोधमुच्चुष्मजं लभेत् ।

अतो द्वयानुसम्बद्धबन्धनात् स्वफलाच्युतम् ॥ २५ ॥

रुणद्धि वागतीतन्तु स्वलयान्तमनन्दिते ।

ऋत्विजां च पदं लेभे गुरुं स्वाधिकृतक्षितौ ॥ २६ ॥

साधकश्चापि शिष्याणामनैकान्तिकसंस्थया ।

इति भैरवस्रोतसि विद्यापीठे शिश्वेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्त्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां समयाचारविधिः त्रयस्त्रिंतिः

पटलः ॥ ३३ ॥

चतुस्त्रिंशतिः पटलः ।

श्रीभैरव उवाच ।

अथ चारं प्रवक्ष्यामि सिद्धये साधकात्मनाम् ।

विपुष्टपालिते लेभे येसदा वाञ्छितं फलम् ॥ १ ॥

भैरवाश्रयिणां देवि चुम्बकादि महात्मनाम्।

अन्योन्यगोचरस्थानां क्षेमालापः प्रशस्यते॥ २॥

अधिकारेऽधिकरणे विज्ञाते न च क्रियाः।

श्रीदेव्युवाच।

प्रणामं नाम यत् प्रोक्तं लिङ्गिभ्यः सकृतो हर॥ ३॥

गुणायैव भवेन्नाथ न दोषाय कदाचन।

अधिकाराधिकरणं किमर्थं तेषु मृग्यते॥ ४॥

एतद् वदस्व सर्वज्ञ तत् तुष्ट्याम्नायमेव च।

श्रीभैरव उवाच।

यत्त्वयोक्तं हि तत् तथ्यं वन्दनालिङ्गिनं प्रिये॥ ५॥

उत्तरोत्तरसामान्यमधिकारमजानता।

प्रणामफलभेदेन परत्रापि निरोधकृत्॥ ६॥

शिष्टाधिकरणे शून्ये स्वेच्छाव्रतनिर्धारणे ।

प्रणामात् प्रोदितं स्थानमाप्नुवन्ति गुणाः स्मृताः॥ ७॥

चुम्बको भैरवः साक्षात् साधको गुह्यकेश्वरः।

चुम्बको ज्ञानशून्यत्वाद् वामपीठाधिपोद्गतः॥ ८॥

संमतो विग्रहः शंभोः स्थितिरेषामियं मता।

न्यूनोत्तमपदस्थानां वामजायामजाधिका ॥ ९॥

अतोऽनुक्रमशः शस्तस्तनुतामेति वन्दनम्।

चुम्बकस्तु त्रिभिर्वन्द्यः संयोगात् कः शिरोभुवम्॥ १० ॥

तस्यापि च शिरोर्नामाद् वीक्षणानि शुभानि तु ।

चुम्बके चुम्बकेशानमधिकारं महत्तरम्॥ ११ ॥

वन्दयेत् प्रसृतः मूर्ध्ना सोऽपि बाहुं प्रसारयेत् ।

श्रीदेव्युवाच ।

तपस्तप्तगुणायाश्च गृध्नः पश्चाभिषेचिता ॥ १२ ॥

अन्ये पूर्वाभिषिक्ताश्च निर्गुणा लघवोऽपि च ।

चुम्बकाः साधकेन्द्राश्च तेषामन्योन्यंमीदृशम्॥ १३ ॥

वर्तनं गृजनं ज्वाला व्यापकत्वरमेव च ।

श्रीभैरव उवाच ।

बिन्दुनादं तथा शक्तिं स्वभावस्थं च तत् पदम्॥ १४ ॥

मन्त्रात्मशक्तिविज्ञाननिर्भ्रान्तं यस्य सुन्दरि ।

मन्त्रार्थपदतुर्येऽपि यस्याध्यक्षस्य लक्षणः ॥ १५ ॥

स चुम्बकः प्राणं इह शिरश्छेदे प्रशंसितः ।

न चाधिक्यं तपोनिष्ठा नाभिषेकः प्रयुज्यते ॥ १६ ॥

यत् तत् स्थितं कुरङ्गाक्षिज्ञानं सर्वस्य मूर्धनि ।

समानज्ञानसंपृक्ते गरीयान् पूर्वसेवितः ॥ १७ ॥

स ए नास्ति पितृतुल्योऽथवा भ्राता यदि ज्ञातस्तु तत्वतः ।

तदा तं प्रणमेद् भक्त्या पूर्वोक्तक्रमयोगतः ॥ १८ ॥

साधकोऽपि प्रणामार्हः स्वगुरोरेकगर्भजः ।

स्वसंस्कारकनीयांसो ये गुरोरनुजाः सदा ॥ १९ ॥

ससंभ्रमसमुत्थानयोग्यास्तेऽत्र मया मताः ।

पुत्रकादियुगं यच्च दीक्षितं गुरुणा गुरोः ॥ २० ॥

तस्याप्ययं क्रमः कार्यो भ्रातुरप्यग्रजन्मना ।

अथ किं बहुनोक्तेन स्मृतेयं लोकसंवृति ः॥ २१ ॥

गुरुं वन्द्य प्रयत्नेन मन्त्रविद्यां शिवप्रदां ।

यो गुरुं सगुणं त्यक्त्वा गौरवाय महत्तरम् ॥ २२ ॥

आश्रयते व रु आश्रयंते न तं वन्दे वासना न च्युता यतः ।

श्रीदेव्युवाच ।

दानक्षपणजो धर्मः किंक्रियातो न शङ्कर ॥ २३ ॥

वासनातो व रु वाशनातो भवेद् येन स्तुतिस्तद्बन्धना भवेत् ।

निजगार्धेन्दुखण्डांशुमालालिङ्गितमूर्ध्वभृत् ॥ २४ ॥

धूर्जटिव्रतशैखण्ड किणितां सरोरुह ।

संस्पृष्टं व संस्पृंष्टं शुद्धशक्त्या तु एषां चैतन्यमादरात् ॥ २५ ॥

तेषां विहासनासाध्वी निश्चला मोक्षरागिणी ।

गुणवद्दत्विजे शोध्यं शोधितं शङ्कराध्वने ॥ २६ ॥

शिवयागः कृतः सम्यग् वासनातो विभाव्यते ।

सन्तोषवासनायेयं दीक्षा ज्ञानप्रतिष्ठिता ॥ २७ ॥

आघ्राताः शुद्धशक्त्या ते ते च मुक्तात्र शासने।

विद्युद्वच्चपला येषां वसाना चुम्बकादिषु॥ २८॥

ते भवान्तरिताः देवि मोक्षभाजो भवन्ति हि।

यद्यणुः संस्थितः शक्त्या ह्येकदा गुरुरूपया॥ २९॥

तदान्यगुरुसंस्थोऽसौ चुम्ब्यते नानिमित्ततः।

तस्मादत्र विपुष्टेयं वासना चललक्षणा॥ ३०॥

मुक्तये या नरा सापि कलाखचितवर्त्मनि।

विदितगुरुक्रमं स्फुटार्थं गुणविभवं गुणं समश्नुते ॥३१॥

यदि नियमं च वेत्ति युक्तं समयमपूर्वकं गुरोः पुरस्तात् ।

इति भैरवस्रोतसि विपीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यामाचारपटलश्चतुस्त्रिंशतिः पटलः॥ ३४॥

पञ्चत्रिंशतिः पटलः।

श्रीभैरव उवाच।

अथ सर्वविदुग्रांशुमार्गायातमराविलम् ।

वामेशानपदप्राप्तिकारकं दिव्यसिद्धिदम्॥ १॥

वर्तनं देशिकादीनां अहोरात्रं प्रतिष्ठितम्।

वचमध्याविभागेन शृणुष्वायतलोचने॥ २॥

सर्वावाप्तावप्यवश्यं कुर्यादाम्नायपालनम्।

आम्नायपालनाल्लेभुरभीष्टं मृत्तिकादयः ॥ ३ ॥
ज्योतिषां मण्डलाटोपलुलिते विमलाम्बरम् ।
विविक्तेषसि वीरेन्द्र समुन्नयसमाहितः ॥ ४ ॥
हरस्थानं व्रजेन्मौनी तत्रोत्सर्ग्युत्तरामुखः ।
नोत्सर्गी भूरुहादस्मद्वल्मीके दुर्गवेश्मनि ॥ ५ ॥
रथ्यायतनसस्यान्तर्नवारिप्राणिमध्यतः ।
स्वभाग्निदुर्गकौवेरभस्ममालाशिरश्चये ॥ ६ ॥
पुष्पारामलताहर्म्यमनोरम्ये युधामसु ।
विण्मूत्र मैथुनक्रीडां वर्जयेत् साधकेश्वरः ॥ ७ ॥
कृतशौचो विविक्ताङ्गमुपस्पृश्योत्तरामुखः ।
न्यासं कृत्वा तु करयोः शरीरे च पुरोदितम् ॥ ८ ॥
आगमोक्तमतः कुर्याद् अन्तःकरण साङ्गवत् ।
ततो हृदंबुजावस्थं मन्त्रचक्रं प्रति प्रति ॥ ९ ॥
मन्त्रपूतेन पयसा तर्पयेत् परितोषितः ।
योगिनीसर्वमातृंश्च देवीं वीरान्मुनीनृतून् ॥ १० ॥
सव्यापसव्यतस्तर्प्य व्यतीर्णांजलिंनासुरा ।
सकुशेनाक्षतयुजा सतिलेन ससुभ्रजा ॥ ११ ॥
स्वधा स्वाहा नमोऽन्तेन हृदयेनोपचारिणा ।
मार्जनं प्रथमं कृत्वा तथा चैवाघमर्षणम् ॥ १२ ॥

हृदा प्रक्षेपणं कुर्यादायुधेनामलत्विषा ।

भास्वन्मण्डलमध्यस्थं मन्त्रधाम्नेऽमृतात्मने ॥ १३ ॥

ध्यात्वाम्बुकुसुमापूर्णमञ्जलिं विनिवेदयेत् ।

तत्रस्था यजनं कृत्वा विनिवेद्य वरीयी ॥ १४ ॥

मुद्रयात्मगतं कृत्वा प्रारसेच्चाह्निकं ततः ।

तच्चाप्येकतमं प्रोक्तमन्तःकरणं पूर्ववत् ॥ १५ ॥

पात्रलिङ्गपदस्थञ्च रूपस्थं वा हृदि स्थितम् ।

पात्रस्थं त्रिविधं तच्च लिङ्गस्थं चापि पञ्चधा ॥ १६ ॥

पदस्थं नवधा देवि मयोक्तं मन्त्रपूजनम् ।

पात्रस्थान्तर्गतं प्रोक्तं रूपं स्वाकारगं मतम् ॥ १७ ॥

स्वमन्त्रप्रतिमारूपं यच्च प्रोक्तं सलक्षणम् ।

कीदृशं द्रुमधारूनां कटाहोर्ध्वञ्च तत् स्मृतम् ॥ १८ ॥

अरूपालमहारत्नसंस्थितं तद् द्वितीयकम् ।

तृतीयं मन्त्रकाये तु स्वकीयेऽनन्यवासने ॥ १९ ॥

पार्श्वतः प्रकृतिं दत्वा भोगस्थां पूज्य यत्नतः ।

कृतोपचारमखिलं जपात् पूर्वाह्णगो भवेत् ॥ २० ॥

प्रतिष्ठा तत्र संसिद्धिर्मायीयादि प्रतिष्ठितम् ।

नवहस्तात् समारभ्य यावदेककरं प्रिये ॥ २१ ॥

तल्लिङ्गसंस्कृतं कृत्वा तत्र मन्त्रं प्रपूजयेत् ।

साधकोद्दिष्टरूपञ्च गर्भैर्त्विजं यथेच्चया ॥ २२ ॥

अन्यत्पुष्पमयं लिङ्गं पूजामूर्तिप्रतिष्ठितम् ।

स्थण्डिले यज्यते तच्च गन्धं गन्धं च गोलकम् ॥ २३ ॥

अङ्गुलैकात् समारभ्य धातुजं चतुरङ्गुलम् ।

भूतवत् तत्प्रतिष्ठादौ तत्कालं वा प्रपूजयेत् ॥ २४ ॥

मृण्मयं व मृन्मयं बिम्बकं कृत्वा सम्पूज्याणुं तदास्पदम् ।

तेन नैवृत्तिकाभोगा सुलभाः साधकात्मनाम् ॥ २५ ॥

स्वभावस्य वचो धार्य संवित् तावच्युतात्मवान् ।

तदाराधनमेवोक्तं मन्त्रस्य परमे पदे ॥ २६ ॥

यदेतन्निबिडं शून्यं सर्वव्यापकमूज्ज्वलम् ।

तद्रूपोऽहं मदीया वा मूर्त्तिरेषा निरामया ॥ २७ ॥

एवम्विधेन भावेन क्रियते च यदाह्निकम् ।

ज्ञानशक्तिपदस्थन्तु साधकानां सुखप्रदम् ॥ २८ ॥

संकल्पात् प्रच्युतं तद्धि विकल्पस्थितिगोचरम् ।

तस्मिन् क्रियापदे मन्त्रं कुण्डलाख्ये प्रपूजयेत् ॥ २९ ॥

पूजनं नाम यत् प्रोक्तं तत्तद्धर्मविचिन्तनम् ।

तद्धर्मलब्धलक्ष्याणां प्राप्तिस्तद्धर्मिणी भवेत् ॥ ३० ॥

विषयच्युतोन्तरं गवां श्रूयते ध्वनिः ।

चिञ्चिणी चीरवाकी च घण्टाख्यस्त्रिविधो बलः ॥ ३१ ॥

नादाख्यं तत् पदं देवि मन्त्राधिष्ठानमद्भुतम्।

शिखण्डिपत्रचण्डांशुतेजोभासि मणिप्रभम्॥ ३२॥

बिन्दुरूपस्य मन्त्रस्य पदं तत् स्वगुणप्रदम्।

त्रिकैकञ्च महाव्योम नादनैरोधनं हि यत्॥ ३३॥

तन्निरोधकसंज्ञन्तु चिद्बिन्दुशकलान्तगम् ।

पदं विद्याख्यमेतद्धि प्रोदितं चेश्वरादिकम्॥ ३४॥

तत्र चित्तं विनिक्षिप्य स्थिराक्षः शक्तिनिर्गमम्।

पश्यति प्रज्वलद्दीपं शिखावर्त्मनि रश्मिवत्॥ ३५॥

यदा तदाखिला ध्वस्ताः पदार्था : यान्ति संविदम्।

भृकुटिं चार्द्धचन्द्रं तु तथा नेत्रान्तरे पदम्॥ ३६॥

मायेयं ध्यानतस्तत्र तद्व्याप्तिर्व्यज्यते स्फुटा।

प्राणापानसमायोगाद् द्वादशान्तपदद्वये॥ ३७॥

ध्यानेन पूजयेन्मन्त्रं मुख्यकल्पफलप्रदम्।

हृत्सरोजपदे शुभ्रे शुक्लपत्रविमालिनि॥ ३८॥

कर्णिकाकेसराकीर्णे बीजमण्डलमण्डिते।

वाच्यवाचकभेदेन ह्यभेदेनाथवा प्रिये॥ ३९॥

मनःसु पूजितो ध्यातो क्यत्र पुंस्तत्र भूतिदः।

एवमेकतमे ह्यस्मिन् पदमन्त्रकृताह्निकः॥ ४०॥

विलुप्तसमयाचारो न भवेत्त कदाचन।

अलुप्तसमयस्यापि स्वपदावस्थितं फलम् ॥ ४१ ॥

न त्वया न मया देवि कुपितेनाभिधार्यते ।

य इमं वेत्ति नो सम्यङ् न च यानविनिर्णयम् ॥ ४२ ॥

नात्मा शुद्धो न संकीर्णो न चार्घफलभाजनः ।

उक्तेनैकतमेनैव शुचिस्नानेन मार्जितः ॥ ४३ ॥

रूपस्थं वा सदा कुर्यादाह्निकं वीरवन्दिते ।

रूपमग्निर्महेशस्य तत्र चक्रं प्रपूजयेत् ॥ ४४ ॥

कृतान्तकरणे नित्यमस्थण्डिलममण्डलम् ।

अभिन्नं भिन्नरूपं वा प्रोक्तयुक्त्या गणाम्बिके ॥ ४५ ॥

कृतेऽन्तःकरणे कृत्वा जपं तत्रं निवेदयेत् ।

यतये कर्णिकास्थाय हृद्यागाह्वं समाप्यते ॥ ४६ ॥

एवमेकतमे स्थाने चुम्बकस्तु कृताह्निकः ।

तत्र संकीर्तनं कुर्यात् स्पन्दतेभ्यः क्रमागतः ॥ ४७ ॥

परामृतमहावीरविविक्तवपुषोऽमलाः ।

चुम्बकास्तत्र रक्षार्थं स्नाननिश्चयिनो मताः ॥ ४८ ॥

प्रभूतमूर्त्तिदोषाणां चारः प्रोक्तो विविक्तये व विविक्तंये ।

निखिलामयमुक्त्यर्थं समर्थं तत्वदर्शनम्  ॥ ४९ ॥

तत्वाविकल्पगो मन्त्री गृही लिङ्ग्यथवा प्रिये ।

स्वाम्नायस्य निरूद्धे तु नेपथ्यं संप्रतिष्ठितम् ॥ ५० ॥

यदि संवृत्तिगो देवि विविक्तस्तु यथेच्चया।

शिष्याभिलिखिते पूर्वं योगपीठे सलक्षणे॥ ५१॥

सरोरुहकृताधारे तत्र हंसं व हसं प्रपूजयेत्।

दिवि ग्रहवरं बन्द्यं गुरुं गुरुपदेन तु॥ ५२॥

कृत्वैशानीं मनो ध्यात्वा शरयन्त्रैकसंस्थिताम्।

पुस्तकं पूजयेद् भक्त्या सितमाल्यानुलेपनैः॥ ५३॥

गुग्गुलुसृष्टधूपं वा दग्धा चापि पुनः पुनः।

सम्बन्धादिक्रमं ब्रूयाद् गुरुर्भक्तजनस्य तु॥ ५४॥

नापवादकृत्तोक्तिस्थं तत्र कंचित् प्रवेशयेत्।

अनावेगास्त्वमी पापा ये चान्ये दृष्टमण्डलाः॥ ५५॥

स्वयं गृहीतमन्त्रास्ते ये चान्याप्तफलैषिणः।

तेषां तन्त्रमिदं गोप्यं श्रवसापि महात्मनाम्॥ ५६॥

स्नेहाद् भयाच्च लोभाद् वा विलोमाचारवर्तिनाम्।

तत् त्वं संकीर्तयेद् यस्तु सदुन्दुभिमुखं विशेत्॥ ५७॥

पुरः समन्वितानान्तु श्रावकानां क्रियावताम्।

आरभ्यत एति वक्तव्यं चुम्बकेन्द्रेण धीमता॥ ५८॥

आरम्भस्यावशिष्टाश्च सर्वारम्भसमानता।

प्राप्ता भवत्यतोर्थं हि शास्त्रिमारभ्यते वदेत्॥ ५९॥

शास्त्रं किं मुच्यते ह्येवं शिष्यवाक्ये कृते सति।

भीतानां सरुजार्तानां दुष्टानां चापि शासनात् ॥ ६० ॥

त्रयाणां च परित्राणाच्चास्त्रमुक्तं हि सूरिभिः ।

कुमार्गाच्चित्तमाश्रित्य नरं श्रेयसि योजयेत् ॥ ६१ ॥

शासनं तस्य हि त्राणं कुर्वन् शास्त्रं प्रशस्यते ।

पत्युः शासनमाज्ञोक्ता त्रायते च तयोर्जगत् ॥ ६२ ॥

शब्दशक्त्यात्मिका सा तु विभिन्ना फलभेदतः ।

इत्येवं शास्त्रमुद्दिष्टं तत् स्थित्यंतर्यथा पुनः ॥ ६३ ॥

सामान्यं च विशेषं च साधारणविशेषतः ।

विशेषतरमन्यच्च शास्त्रमुक्तं चतुर्विधम् ॥ ६४ ॥

इतिहासपुराणानि गणितं काव्यनाटकम् ।

चन्दांसि शब्दशास्त्राणि सामान्यविषयाणि तु ॥ ६५ ॥

सर्वेषां वर्णिकानान्तु सामान्यश्रवणादिह ।

श्रुतिस्मृत्युपनिषदो मन्त्रसूत्रं प्रकल्पकम् ॥ ६६ ॥

आन्वीक्षिकं च विज्ञानं साधारणविशेषगम् ।

द्विजं ते नयतस्तत्र जायन्ते नाधिकारिणः ॥ ६७ ॥

सौरं शैवं पाञ्चरात्रं प्रमाणं वैमलं मतम् ।

अथर्वं साङ्ख्ययोगं च बौद्धमारहतादिकम् ॥ ६८ ॥

विशेषाख्यं यतस्तन्त्रं विशेषसमयात् स्थितिः ।

भैरवं वज्रयानं च गुह्याद्युक्तं सगारुडम् ॥ ६९ ॥

भूततन्त्रादितन्त्रञ्च विशेषतरमुच्यते ।

वैशेषिके तु समयी यतोऽत्रैवाधिकारकृत् ॥ ७० ॥

निश्शेषतरमेतद्धि शास्त्रजालमतो मतम् ।

एवं चतुर्विधं शास्त्रं लौकिकाद्यं च पञ्चधा ॥ ७१ ॥

लौकिकं वैदिकाध्यात्ममविमार्गमथाणवम् ।

फलभेदविभिन्नञ्च शास्त्रमेवं तु पञ्चधा ॥ ७२ ॥

ध्रुवानणिजनस्थानमुख्यपञ्चाष्टकादिषु ।

प्राप्तिर्लोकादिशास्त्रेषु रतानां स्यादनिन्दिता ॥ ७३ ॥

एवमेतानि शास्त्राणि सामान्यादीनि यानि तु ।

न चाभिधातुं युगपच्चक्यं तेनापि केनचित् ॥ ७४ ॥

युगपद्वक्तुमशक्यत्वाच्चतुर्णामथ तत्स्थितम् ।

वाच्यमेकतमं शास्त्रं सामान्याद्यमनुक्रमात् ॥ ७५ ॥

लक्षणाद् यस्य शास्त्रस्य गणिताद्यन्यमस्य वा ।

भेदोपभेदकथनं व्याख्यानं क्रियते बुधैः ॥ ७६ ॥

शेषाणि च वदाम्पादौ ग्रन्थग्रन्थान्तराणि तु ।

अथ सामान्यवैशेषसाम-ऋग्यजुषः प्रिये ॥ ७७ ॥

शाखावरण भिन्नस्य स्मृत्यन्तरगतस्य तु ।

अथ वैशेषशास्त्रस्य शैवसिद्धान्तरूपिणः ॥ ७८ ॥

शिवरुद्रभेदसंज्ञः क्रमो वाच्यो विपश्चिता ।

विशेषतरशास्त्रस्य चतुःपञ्चगतस्य तु ॥ ७९ ॥

स्त्रोतस्त्रयनिबद्धस्य चतुर्भेदगतस्य तु ।

अन्तर्गतं हि तत् सूत्रं ग्रन्थान्तरमथापि वा ॥ ८० ॥

प्रारम्भे ते तु चोद्यादौ पीठभेदं भवेत् ततः ।

श्रीदेव्युवाच ।

प्रारम्भे योऽयमुक्तस्तु शास्त्राणां पृषवाहनः ॥ ८१ ॥

स सम्वन्धादृते नाथ प्रतिपत्तिकरः कथम् ।

कस्मात् तदागतं शास्त्रं केन चात्रावतारितम् ॥ ८२ ॥

अष्टकोस्य महेशान सृष्टं वा केन हेतुना ।

श्रीभैरव उवाच ।

अनादिमति संसारे हेतुरत्र महेश्वरः ॥ ८३ ॥

स स्वभावेन जन्तूनामनुग्रहपरायणः ।

जन्तवश्चाप्यनुग्राह्याः स्वदोषवशवर्त्तिनः ॥ ८४ ॥

तेषामनुग्रहोपायं वेत्त्यसौ सर्वविद्यया ।

सद्योपायो नु मुक्तोऽत्र तेन शास्त्रात्मकात् प्रिये ॥ ८५ ॥

ग्रस्तस्याभिरुजा यद्वद् भिषगौषधयोगतः ।

निर्वाणं कुरुते तद्वद् दीपः शास्त्रार्थदर्शनात् ॥ ८६ ॥

निपातः शिववीर्यस्य मूलं वै मुक्तियोनिषु ।

संवित्तोपदिशेच्चास्त्रं तदा दीक्षा प्रवर्तते ॥ ८७ ॥

निमित्तमुभयाख्यन्तु भूक्तिमुक्तिविलक्षणम् ।

तदुपेयस्तथा योऽपि सम्बन्धस्तस्य शास्त्रजः ॥ ८८ ॥

सम्बन्धश्च निमित्तञ्च वीजाङ्कुरव्यवस्थया ।

संस्थितं यो विजानाति व्याकर्तासौ विशारदः ॥ ८९ ॥

सम्बन्धो हि निमित्ताय सम्बन्धाय प्रयोजनम् ।

विहितं सर्वविज्ञानसूरिणा ज्ञानमूर्तिना ॥ ९० ॥

यत्तदत्यन्तगम्भीरमचलं सर्वतोमुखम् ।

स्वभावस्थमकाङ्क्ष्यैव तत्प्रवृत्तिमुपागतम् ॥ ९१ ॥

प्रवृत्त्यापूरणक्षुब्धं व प्राक्रुध्वं प्रसुप्तं योनिकुण्डलम् ।

तदृजुत्वमुयायातमव्यक्तं स्वरतां ययौ ॥ ९२ ॥

सदृशापूरितो देवः शब्दराशि सदाशिवः ।

सदारूपशिवत्वन्तु न हि भोगपतेर्यतः ॥ ९३ ॥

अतः सादाशिवः प्रोक्तः सदोर्ध्वे स्थानभेदतः ।

तेनार्थ दर्शनाच्चापि शास्त्रजालमनन्तकम् ॥ ९४ ॥

श्रोतृवक्तृविभेदेन तच्च विश्वेशमर्षितम् ।

सम्बन्धोऽयमभिन्नोऽपि स्थानभेदाद् विभेद्यते ॥ ९५ ॥

महच्चानन्तराख्यं च तथावान्तरमेव च ।

दिव्यं मिश्रमदिव्यञ्च षोढा सम्बन्धलक्षणम् ॥ ९६ ॥

चिदचिचक्तिसम्बन्धसर्गानुक्तो दृगात्मभिः ।

क्रियाधर्मप्रदेशात्मानंतराख्यः प्रकीर्तितः ॥ ९७ ॥

सदाशिवस्य वीराणां समादेशविवर्तिणाम् ।

बोध्यबोधकसम्बन्धः प्रोच्यते चान्तररात्मवान् ॥ ९८ ॥

सदाशिवपदावस्थो बोधकाद्यो मदन्तिकः ।

सम्बन्धो दिव्यसंज्ञस्तु मिश्रश्च मुनिदैविकः ॥ ९९ ॥

आदिव्यो मुनिमानुष्यसम्बन्धोऽयं गुरुक्रमात् ।

योऽसौ परापरः प्रोक्तो देवदेवः सदाशिवः ॥ १०० ॥

योगात्मानं तु वीर्यन्तु पञ्चमन्त्रमहातनुः ।

व्यक्ताव्यक्तमयं तस्य व्यक्तानां तु चतुष्टयम् ॥ १०१ ॥

ज्ञात ज्ञेयमयं चास्य व्यक्ताव्यक्तं च पञ्चमम् ।

पञ्चवक्रस्त्वसौ वीरः प्रसन्नस्त्रोतसां स्थितः ॥ १०२ ॥

मन्त्रपीठाधिपः सो हि चतुर्वक्रो हरोपरः ।

दिव्यपीठं प्रति प्रोक्तं मुद्रामण्डलपीठयोः ॥ १०३ ॥

उभयाख्योऽप्यसौ स्वामी क्रीडत्यमितविक्रमः ।

पञ्चभ्यस्तस्य चक्रेभ्यः शुद्धविद्याननो नृप ॥ १०४ ॥

बिन्दुनादमयः शुद्धः शास्त्रोद्धारो विनिर्गतः ।

चन्दोभिनमितैर्दिव्यैरनुष्टुबाद्यैरनिन्दितैः ॥ १०५ ॥

संस्थानमीशमन्त्रस्य तज्ज्ञशास्त्रस्य तच्च हि ।

न देवतार्थं चन्दोभिर्विद्यते तत्पदेऽमले ॥ १०६ ॥

उपचाराय बोधस्य तस्य मंत्रत्वमीरितम्।

चतुर्णां कारणं चैव कारणानां यशस्विनि ॥ १०७ ॥

परा लीला समाख्याता नेतुर्भोगमयस्य च व सा।

यस्तांबुध्वा विजानाति कारणानाञ्चतुष्टयम्॥ १०८ ॥

स कारणगुणः प्राप्तो महाकारुणिको भवेत्।

चन्दस्यानुष्टभे घोरो वामः सद्यः प्रतिष्ठितः॥ १०९ ॥

गायत्रीचन्दसि नरः सद्योनुष्टुब्पदाश्रितः।

ईशानो रूपगुह्यानां नामजातिक्रमेण तु॥ ११० ॥

देवता ब्रह्मरूपास्तु ऋगाद्यास्त्वर्थमुच्यते।

स्वविभुः शोरिविमलस्तुम्बुरुर्गुह्यकेश्वरः॥ १११ ॥

ऋग्यजुःसामसाथर्वञ्चतुर्णामन्तमेव च ।

देवतास्त्वर्थमेतद्धि चन्दः पूर्वप्रकाशितम्॥ ११२ ॥

यद्यप्यसौ सदेशान विक्रमात्मातिवीर्यवान्।

कलानिकायसम्बन्धात् तथापि हि सविग्रही॥ ११३ ॥

विग्रहे च त्रिलिङ्गस्य स्थितिः केन नधार्यते।

आतिवाहिकलिङ्गं हि यत् प्राणस्य वशात् स्थितम्॥ ११४ ॥

गतिमगतिं प्रकुरुते शुद्धशुद्धतरौ ।

तस्य सव्यापसव्येन स्त्रोतसा च रतः प्रिये॥ ११५ ॥

अग्नीं देवेन यज्ज्ञानमुक्तं तद् विस्तरात्मकम् ।

चतुःकरणसंयोगात् शृतः श्रोतरि वक्तरि ॥ ११६ ॥

सर्वशास्त्रेषु तन्वङ्गि व्याख्या ममेष्टारिन्दम् ।

मनोऽहङ्कारबुद्धिर्वाग्वक्तृः करणतुर्यकम् ॥ ११७ ॥

तदेव स्रोतयुक्तं तु श्रोतुर्वाचा विवर्जितः ।

स्रोतसोरवतारोऽयं वामदक्षिणयोस्तव ॥ ११८ ॥

मिश्रत्वावनयोरुक्तो ग्रामलाख्यश्च गीयते ।

मन्त्रमूर्तिरघोराख्यवक्त्राद् वाध्येति भास्वरा ॥ ११९ ॥

अप्रसन्नातिदुर्धर्षा दक्षिणार्धात्मिका तु सा ।

वामवामेश्वरोद्गीर्णा वामवामा विलासगा ॥ १२० ॥

प्रारम्भे विषुवाख्यस्य शैवं शैवे च यामलम् ।

तद्वैरोमे च निर्वाण पदनिर्लोमसूत्रकम् ॥ १२१ ॥

वामदक्षिणमिश्रेषु भिन्नं पीठचतुष्टयम् ।

व्यपदिश्यते मुखवत् शाखा शाखान्तरे स्थितम् ॥ १२२ ॥

इति भैरवस्रोतसि विद्यापीठे शिचेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां

नियताह्निकाचारषोढासम्बन्धावतारव्यावर्णनं नाम पञ्चत्रिंशतिः

पटलः ॥ ३५ ॥

षड्तृंशतिः पटलः ।

श्रीभैरव उवाच ।

मन्त्रविद्या सुहर्म्याणां सङ्घस्तोमकदम्बकम् ।

व्रातवृन्दं च निकरसमूहः संहतिर्बलम् ॥ १ ॥

विच्चिन्दोमण्डलं पीठं पर्यायैरुपशब्दितम् ।

पुल्लिङ्गवाचकाः शब्दाः पुंवाच्ये मुख्यलक्षणे ॥ २ ॥

तेषां पीठं महादेवि मन्त्रपीठं हि तत् स्मृतम् ।

स्त्रीलिङ्गवाचकास्त्र्याख्ये चाद्येऽर्घे संप्रतिष्ठिता ॥ ३ ॥

तेषां सङ्घस्मृतिस्तद्धि विद्यापीठं महेश्वरि ।

त्रिस्वरूपा स्मृता मुद्रा मनोवाक्कायसम्भवा ॥ ४ ॥

प्रधानासनवेद्योक्ता ह्युपसर्जनसंस्थिता ः ।

तासां संहस्मृतं घोरं मुद्रापीठं महेश्वरि ॥ ५ ॥

त्रिपीठं यत्र वा हूय यज्यते फलकाङ्क्षिभिः ।

मण्डलं मलमित्युक्तं मलं पर्याप्तिरुच्यते ॥ ६ ॥

विद्यादिमन्दभोगानां मलं तत् कुरुते यतः ।

अतो मण्डलमुद्दिष्टं तेषां वृन्दशतात्मकम् ॥ ७ ॥

तत् पीठं मण्डलाख्यन्तु यष्टमर्घप्रतिष्ठया ।

यत्र तत्रानुविद्यानां गुणत्वं संप्रयुज्यते ॥ ८ ॥

यत् तद्धि परमं तेजो मन्त्रपीठं हि तत् स्मृतम् ।

तस्य भोक्तृस्वरूपस्य विद्याख्यं भोग्य इष्यते ॥ ९ ॥

उभयस्यापि मुद्राख्यं मण्डलं त्रिष्वपि स्थितम् ।

भूयो भेदं त्रिपीठन्तु मण्डलं चाप्यभेदगम् ॥ १० ॥

सप्तकोटिसहस्राणि दशकोटिशतानि च ।

मन्त्राणां दक्षिणाद् वक्राद् अघोरान्निर्गतानि तु ॥ ११ ॥

अन्यद् भेदप्रभेदेन भैरवाश्च यशस्विनि ।

सहस्रैर्द्वादशैर्मन्त्रयं मन्त्रपीठमुपागतम् ॥ १२ ॥

स्वच्चन्दभैरवं चण्डं क्रोधमुन्मत्तभैरवम् ।

ग्रन्थ्यन्तराणि चत्वारि मन्त्रपीठे स्थितानि च ॥ १३ ॥

सर्वाणि शतसार्धानि शताष्टादशकानि तु ।

मन्त्रपीठं समाख्यातमत ऊर्ध्वं न विद्यते ॥ १४ ॥

कोटित्रिंशच्च संख्यानमेकलक्षैकषष्टि च ।

सहस्राणि च पञ्चाशशतिकानि ग्रहप्रिये ॥ १५ ॥

ग्रन्थान्तराण्यसंख्यानि विद्यापीठे स्थितानि तु ।

पञ्चाशद्दशसिद्धानि मूलमन्त्राणि सुन्दरि ॥ १६ ॥

विद्यापीठप्रसिद्धानि नामभिः कथयामि ते ।

सर्ववीरसमायोगं सिद्धयोगेश्वरीमतम् ॥ १७ ॥

पञ्चामृतं च विश्वाद्यं योगिनी जालशम्वरम् ।

विद्याभेदं शिरश्चेदं महासंमोहनं तथा ॥ १८ ॥

नयोत्तरं महारौद्रं रुद्रयामलमेव च ।

ब्रह्मयामलसंज्ञञ्च तथान्यं विष्णुयामलम् ॥ १९ ॥

दशतुर्यं स्मृतं स्कान्दमर्मं पञ्चदशं मतम् ।

रुद्रभेदो हरिस्कन्दगौतमीयामलान्वितः ॥ २० ॥

पञ्चैतानि विभिद्यन्ते भेदैरष्टादशैः प्रिये ।

मातृकृत्यां कुलाह्वाने सप्तषट्पञ्चभेदतः ॥ २१ ॥

योगभोगोपभोगेन वेदितव्यानि सूरिभिः ।

ब्रह्माणीमादितः कृत्वा यत्पूर्वाया यजुर्भवेत् ॥ २२ ॥

तद् यामलं तदाख्यं स्यात् सप्तधा मातृयामलम् ।

कृत्याः प्रोच्यन्ति योगिन्यो जपाद्याः षट्कमाश्रिताः ॥ २३ ॥

यामलेन विभागेन षट्कृत्या यामलानि तु ।

यथा सप्तसु तद्वच्च वाराह्यन्तमनुक्रमात् ॥ २४ ॥

पञ्चस्वपि महादेवि पञ्चधा मातृयामलम् ।

दाम्पत्ययोगतः ऊजायामलेति निगद्यते ॥ २५ ॥

अनेन क्रमयोगेन यामलानि दशाष्ट च ।

ग्रन्थान्तरगतान्यत्र सूत्रमध्यगतानि तु ॥ २६ ॥

सुविस्तरमिदं देवि विद्यापीठं स्वभावतः ।

विद्यानां योगिनीनाञ्च मनानन्द्यात् सुरार्चिते ॥ २७ ॥

विद्यापीठं स्मृतं देवि मुद्रापीठमतः परम् ।

मुद्रापीठं त्रिधा भिन्नं सहस्राष्टादशान्वितम् ॥ २८ ॥

मन्त्राणां संख्यया देवि शताष्टोत्तरकल्पगम् ।

हृद्भेदो मातृभेदश्च तथान्यं कुब्जिकामतम्॥ २९॥

मुद्रापीठन्तु सूत्राणि त्रीणि भिन्नान्यनेकधा।

मण्डलानां शतेनैव मुद्रितं मण्डलात्मकम्॥ ३०॥

पीठभेदविभिन्नन्तु मूलसूत्रं प्रतिष्ठितम्।

न च त्रिकंटकाये तु मण्डलाख्ये व्यवस्थिताः॥ ३१॥

तेषां दशसहस्राणि तदूर्ध्वन्तु न विद्यते।

एवमेतानि तन्त्राणि पीठतुर्यगतानि तु॥ ३२॥

एतेष्वन्तर्गतं सम्यक् ते च देवि निगद्यते।

अष्टाष्टकविभागेन यद्यस्मिन् संस्थितं प्रिये॥ ३३॥

मन्त्रपीठं द्विधारूपं भैरवैरष्टभिः कृतम्।

तेषां नामानि वक्ष्यामि सदेशोत्सङ्गवर्त्तिनाम्॥ ३४॥

स्वचन्दोन्मत्तनामा च असिताङ्गोरुरुस्तथा।

चण्डक्रोधोऽथ झङ्कार कपालीशोऽष्टमो मतः॥ ३५॥

स्वच्चन्दभैरवं सूत्रं द्विस्कन्धमिव आगतम्।

असिताङ्गेन भेदेन स्वच्चन्देन च भैरवि॥ ३६॥

स्वच्चन्दो यः स्मृतो भेदः सविभेदोष्टकं गतः।

स्वच्चन्दभैरवाज्ञातः कङ्कालदिशितान्तिकैः ॥ ३७॥

अष्टभिर्भैरवैस्तेभ्यस्ततोऽनन्तेन वेदितम्।

शुद्धाद्ध्वततस्ततस्तस्माद् तस्ततस्तस्माद् योगशक्तिसमीरणात्॥

३८ ॥

श्रीकण्ठलकुलीशाभ्यां धृतं योगसमीक्षया ।

सिननिर्जलसन्दीशमहाकालीविकादिभिः ॥ ३९ ॥

नीलरुद्रमुखोद्गारविज्ञातं विप्लुषोमतम् ।

गौतमादिमुनीन्द्रेभ्यो वेदविद्भ्यो यथास्थितम् ॥ ४० ॥

विस्तृतं ज्ञानमेतद्धि प्रोक्तं लकुलपाणिना ।

तन्मध्येऽपि स्वशिष्याय मुसलीन्द्राय धीमते ॥ ४१ ॥

संहृत्य सारभूतं तु निजगाद स एव तु ।

यद्येवं संश्रुतं तन्त्रं यच्च येनावधारितम् ॥ ४२ ॥

तस्य तस्य हि नाम्ना तत् तत् तन्त्रं परिगीयते ।

असिताङ्गात्मको भेदो यो द्वितीयोदितः ॥ ४३ ॥

असितादिकपालान्तवरेभ्यस्तेन सम्स्मृतः ।

तैरप्यनन्तवीर्येभ्यः स्वाभासिभ्यः प्रकाशितम् ॥ ४४ ॥

विभोरधस्तात् सप्तेभ्य इन्दुभृद्भ्यो मदन्तिकाम् ।

कल्पानुकल्पलक्षैश्च प्रवाह प्रविसर्पितः ॥ ४५ ॥

द्विर्बर्द्धशतिकाद्यस्तु द्विसाहस्रायुतान्तिकः ।

असिताङ्गमहानादमेकपादं महोदयम् ॥ ४६ ॥

तथा बिन्दुकपालञ्च नादेन्दुमपि च शेखरम् ।

चर्यामृतं कलाजालं कालकूटं महामृतम् ॥ ४७ ॥

महाघङ्घलसंज्ञञ्च तथा भैरवघङ्घलम् ।

महानिर्वाणयोगञ्च योगनिर्वाणदं परम् ॥ ४८ ॥

विचित्रभैरवं भीमं महावीजं परं पदम् ।

एवं विचित्रशाखाभिर्भिन्नं तन्त्रान्तरैः प्रिये ॥ ४९ ॥

असिताङ्गोन्मत्तकं सूत्रं किञ्चिन्मात्रं तवोदितम् ।

साक्षात्सिताङ्गसूत्रस्य बन्धभेदादमी स्मृताः ॥ ५० ॥

नकङ्कालादिवीराणां तेषां ख्याता यतः स्थिताः ।

स्वच्चन्दाद्यष्टकं ह्येतत् कथितं तव सुव्रते ॥ ५१ ॥

लेशालाचण्डसंज्ञं तु वच्मि वीरेश्वरार्चिते ।

इति भैरवश्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां स्वच्चन्दसूत्रविनिर्णयः षट्त्रि

ंशतिः पटलः ॥ ३६ ॥

सप्ततृंशतिः  पटलः ॥

श्रीभैरव उवाच ।

अथातश्च सूत्रन्तु द्विस्कन्धं तदपि स्मृतम् ।

चण्डेन रुरुणा चापि द्वाभ्यां तदवधारितम् ॥ १ ॥

विकरालसिंहकेशश्च पूर्वं तेभ्यः प्रकाशितम् ।

अष्टभ्यश्चण्डनाथेन वीरेभ्यश्चण्डविक्रम् ॥ २ ॥

तैरप्यतेकभेदैश्च सारुप्यस्थानवासिनाम् ।

प्रकाशितं महाज्ञानमिच्चया यमनन्तकम् ॥ ३ ॥

सिंहकेसरसटादिमनोहरविरोमिनाम् ।

करिणा कीर्तितं तद्धि तन्मध्येन मनोहरम् ॥ ४ ॥

विष्णवे सारवत् तन्त्रं निजगाद गणाम्बिके ।

विष्णुना कौसिकस्योक्ते श्रीवत्सस्याह कौशिकः ॥ ५ ॥

श्रीवत्सः श्रीविनाशाय श्रीगर्भाय स चोक्तवान् ।

विष्णोराश्रववासोश्च श्रीगर्भोऽवददात्मगम् ॥ ६ ॥

शौरेश्चपि सुविस्तीर्णमवदद् विष्णवे श्रवाः ।

शौरेर्विवाददण्डोक्तं निध्वास्वामिनि विस्तरात् ॥ ७ ॥

निध्वास्वामी सुभद्राय सुभद्रो मुञ्चकेशिने ।

अधोक्षजाय मुञ्जाख्यो मेधसे चाप्यधोक्षजः ॥ ८ ॥

चण्डभैरवसूत्रस्य कल्पद्वादशकं प्रिये ।

एतेषामभिधातैस्तु जगत्यत्र विसर्पिते ॥ ९ ॥

अधस्त्यः शुद्धमार्गे तु विग्रहेशेन धीमता ।

अधस्त्यगुरुर्वृडाय प्रदत्तं भूरिभोगदम् ॥ १० ॥

तेभ्यस्तुषुः शिवो ज्ञानं तेभ्यः श्रीकण्ठसूरिण ।

इच्चया तेन देवेन मयि संक्रामितं प्रिये व प्रि ॥ ११ ॥

मयापि हि त्वदादिभ्यःसुरेभ्यः प्रतिपादितम् ।

तेषां मध्ये महेन्द्राणां योजितं शाकटायिने । १२ ॥

पिप्पलादाय सोऽप्यहसङ्कीर्णः शाकटायनः।

ब्रूयादुद्दालकेशाय पिप्पलादो महामुनिः॥ १३॥

उद्दालकोऽवदच्चैतन्नाचिकेताय सूनवे।

नाचिकेतेन मर्त्येऽस्मिञ्चण्डं समवतारिकम् ॥ १४॥

विचित्राभिः सशाखाभिर्व्याकीर्णममलायतम्।

दण्डाख्यं प्रथमं तन्त्रं द्वितीयं वीरसंज्ञकम्॥ १५॥

महापीठं सुपीठञ्च चण्डपीठमथापरम् ।

सुश्रावणं पुराकल्पं चण्डोग्रं चण्डमण्दलम्॥ १६॥

चण्डासिधारं भूतोग्रं भूतोग्रं भूतनिग्रहम्।

विजयञ्च त्रिपादञ्च कर्णामोघार्द्धलोचनम् ॥ १७॥

पातालविजयं चैव त्रैलोक्यविजयं परम् ।

महाडामरसंज्ञश्च तथान्यं घोरडामरम्॥ १८॥

एकविंशतितन्त्राणि निजस्थाश्चण्डभैरवात्।

निर्गतानि वरारोहे कथितानि समासतः॥ १९॥

एतेष्वन्तर्गताः कल्पा मुनिमन्त्रविधानगाः।

श्रोतृवक्तृविभेदेन तेषां संख्या न विद्यते॥ २०॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां भैरवसूत्रनिर्णय

सप्तत्रिंशतिः पटलः॥ ३७॥

अष्टत्रिंशतिः पटलः।

श्रीभैरव उवाच।

अथातः क्रोधसूत्रस्य विकासं वच्मि तत्वतः।

परापरेण भेदेन महीतलमुपागतम्॥ १॥

स्कन्दद्वयगतं तद्धि क्रोधशङ्कारभेदतः।

क्रोधाख्यः प्रथमो भेदः सभेदैरष्टभिर्गतः॥ २॥

कान्ति भैरवपूर्वस्तु शिखाशेहेखररोधितः।

सङ्घातभैरवाख्यो यः सोऽपि भिन्नोऽष्टभेदतः॥ ३॥

शशाङ्कशेखराद्यैस्तु विरूपाक्षावसानिकैः।

धारकाः क्रोधतन्त्रस्य शतशाखो विसर्पितः॥ ४॥

स कान्तभैरवः प्राह रुद्रोङ्कारमहेशयोः।

संहितान्तु महाक्रोधान्निर्गतं क्रोधभैरवात्॥ ५॥

अनिलज्ञानिनो दद्यात् क्रोधात् स्वां कमलेश्वरः।

भीमो ज्ञानभृते दद्यात् तथा चांशुमते प्रिये॥ ६॥

क्रोधोग्रां संहितामुर्वी शतकोटिप्रविस्तराम्।

चन्द्रापीडाय विमलां दद्याद् विमलभैरवः॥ ७॥

सुरापीडाय क्रोधेशो वेदिताख्यो ययच्च च।

दृष्टे निर्मलदेवोऽपि दद्यात् क्रोधमहोदयात्॥ ८॥

तारापीडाय तन्वङ्गि वितानां भिन्नतारकाम्।

भैरवः शेखरो नाम प्रदद्यात् क्रोधमालिनीम् ॥ ९ ॥

मुद्रागणसमाकीर्णाममलेशाय संहिताम् ।

ससङ्ग्राम महावीरशिखरास्या स्वभूषणे ॥ १०

तेऽप्यधोमार्गसंस्थेभ्यः स्वशिष्येभ्यो मितात्मनः ।

प्रायच्चन्त महाज्ञानं सदेशाज्ञां जिताज्ञया ॥ ११ ॥

असितेर्ध्वनिगैस्तेभ्यो  नानाभुवनवासिभिः ।

अवतार्यमिदं तन्त्रं कल्पकोटिशताकुलम् ॥ १२ ॥

मायापिण्डमलेशानज्ञानाक्रोधानलः  प्रिये ।

संहितालक्षयुग्मन्तु पादोनं परमेश्वरि ॥ १३ ॥

मत्तः सा लक्षमेकन्तु संभिन्नायागजोढया ।

नन्दिना च महावीरो द्विसहस्रायुतेन च ॥ १४ ॥

अमरेभ्यो  मया दत्ता त्वया मत्तोऽपि सुव्रते ।

नन्दिना च महादेवि दत्तात्रेयाय धीमते ॥ १५ ॥

तदा वै बालखिल्येभ्यः सरहस्यमुदाहृता ।

यत्रोक्ता नन्दिनाथेन सा त्वष्टादशभिः शतैः ॥ १६ ॥

सप्तादशभिरुदिष्टा दत्तात्रेयेण धीमता ।

तृतीयेऽप्यष्टके वीरो दद्याच्चीतांशुशेखरः  ॥ १७ ॥

विशालाजाय झङ्कारं  नानाझङ्कारमालिनीम् ।

क्रूराभिरवभेदाश्च कन्दर्पेणावधारिताः  ॥ १८ ॥

संहिताकल्पसंकीर्णे नाम्ना क्रोधकरंकिणी ।

शशिभूषणाय वै बिन्दुविजयामदत् स्फुटम् ॥ १९ ॥

कलिकाह्लाददेवेन बिम्बकोटीरसंज्ञिने ।

सामन्तः क्रकचात् प्रापत् संहितां योगमालिनीम् ॥ २० ॥

क्रोधसंवर्त्तकामाच्च् शशिकान्तिर्महेश्वरः ।

महासामन्तदेवाय पुरं मन्त्रसमाकुलाम् ॥ २१ ॥

यथेच्चितो महानादां ताराय च गुणालयाम्

विषमाक्षो धाम नीलां महातारापतेः स्फुटम् ॥ २२ ॥

तारापतिः सुताराय पवनाय महात्मने ।

तामेव धामलीलाय अयुतैः पञ्चभिः प्रिये ॥ २३ ॥

लक्षेण च मनोजन्म जितलावण्यकेऽवदत् ।

विशुद्धैर्योगिभिर्वृत्तास्तेभ्यः शुद्धैर्महात्मभिः ॥ २४ ॥

यावद्धाटकनाथन्तु तस्मात् कालानलेन तु ।

क्रोधतन्त्रामृतं देवि ज्ञानवीचीं यथावहा ॥ २५ ॥

रक्षोसुरभुजङ्गानां त्रिषष्ट्या वा दधामसुम् ।

विसर्पितमिदं तन्त्रं प्रदीप्तं भैरवेच्चया ॥ २६ ॥

पाशबन्धनजालन्तु यद् विनाश्यं विवर्तते ।

ततः क्रुद्धमिवाहन्ति क्रोधतन्त्रमतं स्मृतम् ॥ २७ ॥

मोक्षावरोधकं यद्यत् तस्य तस्य हि वस्तुतः ।

निग्रहैकपरं येन तेन क्रोधमुदाहृतम् ॥ २८ ॥

क्रोधतन्त्रमिह संहिताशतैरागमं जगति शङ्करेच्चया ।

वस्तुसारमलिखं तवोदितं वेत्तिकोह्यवनताङ्कित तत्त्वः ॥ २९ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्चेदेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्त्रे प्रथमषट्के श्रीकालसंकंर्षण्यां  क्रोधभैरवसूत्रम्

अष्टात्रिंशति पटलः ॥ ३८ ॥

उनचत्वारिंशतिः  पटलः ।

श्रीभैरव उवाच ।

अथातोन्मत्तसूत्रस्य ये भेदा भेदलक्षणाः ।

वक्ष्याम्यध्यासतस्तांस्तु निर्णीतो भैरवेच्चया ॥ १ ॥

सदाशिवमगाम्भोधादुन्मत्ते जलबिन्दुवत् ।

महाज्ञानामृतो योऽसौ विश्रमित्वा विसर्पितः ॥ २ ॥

कपालीशान्तिके तद्धि द्विरूपोन्मत्तपद्धतिः  ।

आदिभेदोऽष्टधाभिन्नो विषमाक्षादिभिः प्रिये ॥ ३ ॥

महाफेत्कारनिधनैस्तेभ्यः स्वानन्ततां गतः ।

द्वितीयोऽप्यष्टधा भिन्नोऽनन्तभिरिव पूजकः  ॥ ४ ॥

चण्डोग्रभैरवान्तैस्तु नानाकल्पगणाकुलः ।

येऽमी सञ्चोदिता ः भेदादशेषा भूधरात्मजे ॥ ५ ॥

तेषां नामानि वक्ष्यामि तन्त्रसिद्धानि सुन्दरि ।

अनन्तानन्तविजया भैरवाख्या च या परा ॥ ६ ॥

वीणा शिखाचलोद्दीशा मार्तण्डा संहिता परा ।

चण्डोग्रा च कपालीशात् संहिताष्टौ विनिर्गताः ॥ ७ ॥

विशाललोचनाद्यैस्तु तारापतिपुरस्सरैः ।

अवतारिता महादेवि अनन्ताद्या यथाक्रमम् ॥ ८ ॥

मार्तण्डापि सुतारेण चण्डोग्रापवने तव ।

अमृता विनिर्याता अनन्ता ः यत् सुरेश्वरि ॥ ९ ॥

प्रमोदानन्दविजया शिखाटोपि विसर्पिता ः ।

संहितानन्दगम्भीरा जीवानन्दा शिखोत्तरा ॥ १० ॥

सुनन्दा नाचला तच्चामृतानन्दा तदन्ततः ।

मन्थरा विजयानन्दा सुरानन्दा तृतीयका ॥ ११ ॥

मार्तण्डतो विनिर्यातास्तिस्रो विस्तीर्णसंहिताः ।

सदानन्ताश्रितानन्दा मङ्गलानन्दमङ्गला ॥ १२ ॥

चतस्रः संहिता ह्येताश्चण्डोग्रातो विनिर्गताः ।

लेलिहाना महाज्वाला संहिता चाण्डमालिनी ॥ १३ ॥

करङ्किणी कराला च कर्णमूला कलेवरा ।

महाफेत्कारबीजा च चोदितात्राष्टमी मता ॥ १४ ॥

असमाक्षाद्युदासीना भैरवाभ्यो विनिर्गताः ।

अमृतामृतपूर्वैस्तु वृत्ता योगेश्वरैवरैः ॥ १५ ॥

एभ्योऽप्यत्रावनिर्याता नित्यानित्यादिनामभिः ।

गायन्ति शुद्धमार्गस्थैःस्वेभ्योऽप्यन्या विनिर्गताः ॥ १६ ॥

विघ्नभैरवपूर्वैस्तु भैरवैर्या श्रुता प्रिये ।

शिवपञ्चकेन तेभ्यस्तु तन्त्रमुन्मत्तकं श्रुतम् ॥ १७ ॥

नित्यानित्या ह्यनित्या च नित्या चैव तृतीयका ।

गुणक्रियासमाकीर्णा निर्याता लेलिहानतः ॥ १८ ॥

उमादेहा नीलकण्ठा योगनिद्रालुका परा ।

महाज्वालाविनिर्याता मन्त्रादाकल्पसङ्कुलान् ॥ १९ ॥

पूजोदया कुरङ्गाक्षी पद्माक्षी चित्रकन्धरा ।

तिस्रोऽत्र मालिनीतन्त्रान्निर्गताः संहिताः प्रिये ॥ २० ॥

द्वे च तेऽत्र करङ्किण्या संहितेऽत्र प्रविस्तरे ।

विघ्नच्युतस्य निर्विघ्ने कथिते तव सुव्रते ॥ २१ ॥

विघ्नहा ध्वस्तविघ्ना च करालातो विनिर्गते ।

विघ्ना सुदीप्तभावा च निष्क्रान्ता कर्णमूलतः ॥ २२ ॥

कडेचरा तत् समया क्षुद्रा चापि विनिर्गता ः ।

विमला च शिवा चैव फेत्कारातः परिच्युते ॥ २३ ॥

उन्मत्तभैरवे तन्त्रे विंशदेकोणसंहिताः ।

कथिताः कल्पमाहात्म्यकल्पसारसमाकुलाः ॥ २४ ॥

शिवपञ्चकादिदेवेभ्यः शास्त्रविद्भ्यो यथास्थितम् ।

नायातं शुद्धविद्यातस्तन्त्रमुत्तरभैरवम्॥ २५॥

शतत्रयं सपञ्चाशदुक्तं सूक्ष्मेण धीमता।

ध्यानाहाराय सोऽप्याह प्रपञ्चाय महात्मने॥ २६॥

प्रपञ्चः ख प्रपञ्च कुण्डसंज्ञाय कुण्डो भद्रशिखेशयोः।

भीरुभ्यो न मया प्राप्तं पञ्चश्लोकमिदं प्रिये॥ २७॥

ततो दाक्षायणी काली यदा दृष्टासि त्वन्मयी।

मन्मथोन्मादवातेन तदोन्मत्तोस्मि शैलजे॥ २८॥

उन्मत्तभैरवं  बीजं संसृज्योन्मत्तभैरवः।

जातोऽहं घोररूपस्तु दृष्टश्चापि तदा त्वया॥ २९॥

ततो वृत्ते विवाहे तु जायया पृच्चितं प्रिये।

किं तज्ज्ञानं महादेवि यत्प्रभावं प्रभीषणम्॥ ३०॥

वृत्तं मे तत्महाघोरं रूपमुन्मत्तभैरवम्।

ततो मया सुतुष्टेन त्वत्प्रियस्य मम प्रिये॥ ३१॥

प्रोक्तं द्वादशसाहस्रं जायायाः सुरसुन्दरि।

ततस्तत्पञ्चभिः कल्पैर्भूर्यण्डान्तःप्रसर्पितम्॥ ३२॥

षट्साहस्रं तदर्धञ्च सहस्राष्टं शतं परम्।

अद्धयुष्टकशतं चान्यं पञ्चश्लोकं तथा परम्॥ ३३॥

इत्येतानि च तन्त्राणि भैरवाष्टाधिकानि तु।

प्राप्तानि मानुषैर्येभ्यस्तान् वक्ष्याम्यवतारकान्॥ ३४॥

दुर्व्यासाः सनको जिष्णुः कपिलः काश्यपः  कुरुः ।

संवर्तः शङ्खपालश्च भैरवाष्टावतारकाः  ॥ ३५ ॥

अतिमहति विशाले मन्त्रपीठे च रौद्रे ।

शिवविभवनितान्ते कः सहस्रांशुमात्रम्  ॥ ३६ ॥

तनुकरणकृता वै ज्ञानभाङ्गांगा च वक्तुम् ।

सुमतिरपि सुसूरिं शक्त्यास्मद् विधोऽपि ॥ ३७ ॥

इति भैरवस्रोतसि विद्यापीठे शिरेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां मन्त्रपीठविनिर्णयो

एकोनचत्वारिंशतिः पटलः ॥ ३९ ॥

चत्वारिंशतिः पटलः ॥

श्रीभैरव उवाच ।

अथातो मन्त्रविद्यानां पीठसूत्रप्रभेदतः ।

वच्मि संक्षेपतो देवि श्रोतृवक्तृक्रमेण तु ॥ १ ॥

सर्ववीरं त्रिशूलञ्च श्रीचक्रं विश्वपूर्वकम् ।

योगिनीजालसंज्ञञ्च विद्याभेदं शिरोहृतम् ॥ २ ॥

एतानि शक्तितन्त्राणि संन्ति शूलालयानि तु ।

सव्यस्रोतसि सिद्धानि शिरश्छिद्रं भयात्मकम् ॥ ३ ॥

नयोत्तरं महारौद्रं महासम्मोहनं तथा ।

त्रिकमेतन्महादेवि वामस्रोतसि निर्गतम् ॥ ४ ॥

विभिन्नं कोटिभेदेन शाखाकलिलविस्तरम् ।

याम्ये स्रोतसि सूत्राणि पञ्चकं वैमलानि तु ॥ ५ ॥

सन्ति विस्तीर्णशाखाभिः कथ्यन्ते तानि नामभिः ।

रौद्रोमं वैष्णवं चापि चतुर्थं स्कन्दयामलम् ॥ ६ ॥

अक्रव्याचारमेतद्धि चतुष्कमपि तत् स्मृतम् ।

ब्रह्मयामलसंज्ञञ्च पञ्चमं तत् पितुर्मतम् ॥ ७ ॥

द्व्यक्षरं मत्तसंज्ञञ्च  क्रव्यादोच्चुष्मनिश्चयम् ।

निराचारं  महाचारं सर्वतोभद्रसंज्ञकम् ॥ ८ ॥

द्विकं सर्वात्मकं चैव महादक्षिणमेव च ।

ब्रह्मयामलमेतद्धि सूत्रैर्भिन्नं तु सप्तभिः  ॥ ९ ॥

सप्तमं च द्विधा भिन्नमतो ज्ञेयं मताष्टकम् ।

तेषां नामानि वक्ष्यामि पुरतः पर्वतात्मजे ॥ १० ॥

एवमेतानि सूत्राणि विद्यापीठे महेश्वरि ।

दशपञ्च च  सिद्धानि मूलसूत्राणि सर्वतः  ॥ ११ ॥

तेजोनिधेरनुध्यातान्महादेवेन  धीमता ।

सर्ववीरं महातन्त्रमवतारितमद्भुतम् ॥ १२ ॥

ततो दक्षिणतस्माच्च महावीरेण कीर्तितम् ।

महावीरात् प्रचण्डेन कङ्कालेन ततः प्रिये ॥ १३ ॥

तस्माच्च नीलकण्ठेन मया तुभ्यं प्रकाशितम् ।

मत्तस्त्वया प्रतिज्ञातं त्वत्तो ज्ञातं गरुत्मता ॥ १४ ॥

दशकन्धरेण गरुडाद् रावणश्च बिभीषणः ।

बिभीषणात् पतङ्गेन पतंगाद् भवतापिता ॥ १५ ॥

तस्मात् प्राप्य नृभिर्देवि  सर्ववीरं प्रकाशितम् ।

शतत्रयं सपञ्चाशतं मूलसूत्रमुदाहृतम् ॥ १६ ॥

सङ्ग्रहस्तु सहस्राख्यः कल्पो द्व्यष्टसहस्रकः  ।

स्मृतं द्वादशसाहस्रं कल्पस्कन्धे महामते ॥ १७ ॥

चतुर्विंशसहस्रैस्तु संहिता तुर्यपारगा ।

द्वित्रिश्चतुर्गणा वाथ संहितातन्त्र इष्यते ॥ १८ ॥

लक्षोत्तरं स्मृतं शास्त्रं कोटयन्तममरार्चिते ।

वक्तृश्रोत्राभिधानश्च संहिताश्चाप्यनेकधा ॥ १९ ॥

शास्त्रव्यासभयाच्चक्रे तन्नामकथनं मया ।

अथोच्यते सुविस्तीर्णं सिद्धयोगेश्वरीमतम् ॥ २० ॥

नानाकल्पगणाकीर्णं योगिनीसिद्धसेवितम् ।

पराख्यममरेन्द्रेण भीष्मेण च परापरम् ॥ २१ ॥

अवतारितं तथा तन्त्रमपरं सिद्धयोगिना ।

मालाधरेण मालिन्यमघोर्यं करालिना ॥ २२ ॥

खेचरीविजयं चापि गजकर्णेन कीर्तितम् ।

महाशंखं महातन्त्रं कथितं शंखधारिणा ॥ २३ ॥

फेत्कारैकाक्षरीगर्भं फेत्कारेणावतारितम् ।

विद्याधिपतिनाम्ना च विद्यालक्षमुदाहृतम् ॥ २४ ॥

विद्याप्रसूतिसंज्ञञ्च विद्योल्केन प्रकाशितम् ।

सिताघोरमघोरेण रक्ता घोरेश्वरी भवेत् ॥ २५ ॥

घोरेश्वरेण विद्युत्तं कृष्णकं कीटचक्षुषा ।

कृष्णघोरेश्वरी प्रोक्ता विदिता भैरवेच्चया ॥ २६ ॥

पीता घोरी महामाया पद्मरुद्रेण कीर्तिता ।

संहितात्रयमन्यच्च भद्रकाली करङ्किणी ॥ २७ ॥

निरञ्जनेचाज्जाता् वै स्त्रिभीरुद्रैः प्रकाशिता ।

दि्वर्धशतसूत्राणि सर्वाण्येतानि सुन्दरि ॥ २८

प्राक्क्रमेण तु विस्तारः स्मृतः शास्त्रावसानकः ।

सिद्धयोगेश्वरीतन्त्रं श्रीकण्ठेनावतारितम् ॥ २९ ॥

तस्मात् क्षुद्रेण संप्राप्तं क्षुद्राच्चामृतबिन्दुना ।

बिन्दुः परापितेनैव ततो विप्रेण धारितम् ॥ ३० ॥

विप्राच्चापि मया ज्ञातं मया तुभ्यं प्रकाशितम् ।

कृष्णाय च त्वया दत्तं तेन दत्तमुमापतेः ॥ ३१ ॥

तेनापि वेदशिरसे सवाह्यङ्गिरसे क्रमात् ।

उतथ्यायाब्रवीत् सोऽपि प्रददादूर्ध्वरेतसे ॥ ३२ ॥

ऊर्ध्वरेतोमुखं बीजं मधुबिन्दु पिपासिते ।

मनुष्यालिकुलैः प्रीतैर्विस्तीर्णे पृथिवीतले ॥ ३३ ॥

अथातो मद्वते शृण्वं श्रीचक्रस्य विनिर्णयम् ।

पञ्चामृताभिधानस्य परामृतविधायिनः ॥ ३४ ॥

अष्टौ  विनिर्गतास्तमात् संहिताश्चक्रसंज्ञिताः ।

शिवेच्चयेश्वरात्तासां विद्या साधारिका मताः ॥ ३५ ॥

स्थाण्वन्तानन्तपूर्वास्तु स्वाद्यो वीरावबोधकाः ।

स्वरचक्रं वर्णचक्रं नाडीचक्रं तृतीयकम् ॥ ३६ ॥

गुह्यचक्रं कालचक्रं सौरं वाह्नेयसोमजम् ।

स्वरचक्रस्वरन्यासौ  वर्णाख्यो मन्त्रनिर्णयः ॥ ३७ ॥

नाडीचक्रे सुताराख्ये गुह्याख्ये शक्तिनिर्णयः ।

आयुःप्रमाणं कालाख्ये सौरे  बौद्धे शुभाशुभम् ॥ ३८ ॥

वाह्नेये मन्त्रदीप्तं च चण्डाख्ये मृत्युनाशनम् ।

आकर्षादर्षपञ्चार्थलक्षणा व्यूहगुह्यकाः ॥ ३९ ॥

हृदयाङ्कुशावसानास्तु क्रमशो धारका मताः ।

तेभ्यो विधानका वीरा वीरभद्रादयो मताः ॥ ४० ॥

तन्मध्ये भूतिकण्ठान्तमयज्ञानं महीव्रजे ।

भो   संख्यं ततो ज्ञानं तन्त्रं पञ्चामृतं त्वया ॥ ४१ ॥

योगिनीभिरनन्ताभिर्गणैर्देवैर्महोरगैः ।

प्रह्लादमुख्यैर्दनुभिस्तस्मादौशनसेन  तु ॥ ४२ ॥

भार्गवाद् देवलः प्रापदेवलाद् वेदपारगः ।

कृष्णात्रेयस्तु वेदज्ञो कृष्णात्रेयात् कुशध्वजः ॥ ४३ ॥

कुशध्वजात् सितोदेन सितोदात्तु वसद्गुणः व ख पतद्गुणाः ।

पतद्गोर्दन्त्यमायातं मन्त्रं पञ्चामृतं प्रिये ॥ ४४ ॥

सूत्रक्रमेण विज्ञेयः सूत्राद्यस्तन्त्रविक्रमः ।

अतः शृणु महादेवि विश्वाद्यं तन्त्रमुत्तमम् ॥ ४५ ॥

विश्वादियोगिनीजालस्वरूपप्रतिपादकम् ।

योऽसौ विश्वेशान नमस्कृतः ॥ ४६ ॥

विश्वमूर्त्तिरनन्तात्मा विश्वचक्रप्रवर्तकः ।

गुणैश्वर्यप्रपूर्णाङ्गो नानागुणगणालयः ॥ ४७ ॥

त्रिस्थानस्थं यदा यस्य शिवत्वं हि न हीयते ।

अनन्तत्वादजत्वाच्च स तेनोक्तः सदाशिवः ॥ ४८ ॥

विश्वाद्यमजगादासौ कल्पसूत्रमनाकुलम् ।

विश्वात्मानं विधेयात्मा सोऽप्याह विमले दृशे ॥ ४९ ॥

शुद्धदृक् कान्तिचन्द्राय कान्तिचन्द्रोऽपि शौण्डिने ।

तदाननं महाम्भोधेर्विशुद्धामलरत्नवान् ॥ ५० ॥

तन्त्रसारं विनिर्यातं धृतं तच्च मया प्रिये ।

मया तत् कथितं तुभ्यं तया तद् गोपितं पुनः ॥ ५१ ॥

किञ्चिन्मात्रं तु विज्ञातं त्वत्तस्तत्किल हेलिना ।

तस्मात् तदास्यते सत्यमल्पकं सर्पिते भुवि ॥ ५२ ॥

प्रमाणं प्रोदितं पूर्वं सूत्राद्यमिति कथ्यते ।

सहस्रं तन्त्रमर्धञ्च तत्र बुध्वावधारितम् ॥ ५३ ॥

कल्पान्ते विमलाणूनां मलं प्रक्षालयिष्यति ।

सारार्थाः सर्वतन्त्रेषु येनोक्ताः शूलपाणिना ॥ ५४ ॥

विश्वाद्यैः कीर्तितास्ते तु विश्वेश्वरनमस्कृते ।

अथातः संप्रवक्ष्यामि योगिनीजालशम्बरम् ॥ ५५ ॥

द्वादशैव स्वतन्त्राणि निर्गतानि स्फुटानि च ।

महासंवर्त्तकं भीमं तिलकं नखसंज्ञकम् ॥ ५६ ॥

बिम्बञ्च चन्द्रलेखाख्यं तथा तिण्डामिलातकम् ।

शिलादं भगमालाख्यं भगिनीदशमं मतम् ॥ ५७ ॥

सुकेशिनं सुधामञ्च द्वादशं परिकीर्तितम् ।

एतेभ्यो निर्गताश्चान्या सन्ति देव्युपसंहिताः ॥ ५८ ॥

तासां नामानि वक्ष्यामि सन्देहविनिवृत्तये ।

तारकाक्षी च पाशघ्नी नन्दिनी चाभिगामिनी ॥ ५९ ॥

भृगुणी चैव सत्या च तथा दाक्षायणी सती ।

उमा माया महाकाली चण्डाली अचलश्रिया ॥ ६० ॥

भद्रकाली सुमेधा च तारार्कमणिनामनी ।

तारकाभरणा रौद्री ज्वालामालान्तिका : प्रिये ॥ ६१ ॥

विंशत्युक्ता महादेवि संहिताः सुरसुन्दरि ।

महासंवर्तनाथेन भीमाय परिकीर्तितम् ॥ ६२ ॥

शम्बरं भीमनाथेन तिलकाय प्रकाशितम् ।

तिलको दीर्घनखिने नखी बिम्बाय सुव्रते ॥ ६३ ॥

विम्बोऽभिहितसुवृत्ते चण्डो वृद्धेन्दुसंज्ञके ।

चण्डाशिलातको देवो शिलादाय जगाद च ॥ ६४ ॥

निजगाद महावीरः शिलादो भगमालिने ।

भगमाली भगिन्याख्यवीराय निजगाद च ॥ ६५ ॥

सुकेशिने भगिन्याख्यः सुधाम्ने केशिसंज्ञकः ।

ज्वालामुखान्तिकानान्तु सुधामा कीर्तितो गुरुः ॥ ६६ ॥

ज्वालास्योऽपि महेशानि तवाहं सुरसुन्दरि ।

त्वमूर्ध्वरेतसो देवि सोऽप्यनन्तात् तपोधनात् ॥ ६७ ॥

बोधयामास महिमां तेभ्यो भुवि विसर्पितम् ।

अनन्तस्रोतोविभवं योगिनीजालशम्बरम् ॥ ६८ ॥

विद्या बेदेषु विस्तीर्णाः कीर्तिताः सप्त संहिताः ।

तासां नामानि वक्ष्यामि गुरवो ये च संस्थिताः ॥ ६९ ॥

विद्येशानेन सिद्धार्था पतिता सिद्धसङ्कुला ।

विद्यालया प्रलम्बेन विद्या राज्ञीपदद्रुणा ॥ ७० ॥

विद्यामणिः  करालेन विद्याराशिरजात्मना ।

विद्या प्रसूतिसंज्ञा च विद्येशानेन कीर्तिताः ॥ ७१ ॥

यावदेषा च का पङ्क्तिर्गुरुणां परिकीर्तिता ।

तया ज्ञानप्रसूतिश्च विद्येशानां महातपे ॥ ७२ ॥

ततोऽपि हि मया ज्ञाता स्वल्पसूत्रा सुराम्बिके ।

मत्तोऽप्यसफला देवि तस्माद् वा पितृदण्डिना ॥ ७३ ॥

मातृदण्डितो तृणःप्रायसंहितां सप्तमां प्रिये ।

षट्संहितां न भूर्लोकमागता वीरवन्दिते ॥ ७४ ॥

अन्तिमे तु युगे तासां प्राप्तिर्मत्तो भविष्यति ।

सदाशिवेशयोर्व्योम्नि योऽसौ देवो निरञ्जनः ॥ ७५ ॥

स शान्तः केवलो ब्रह्म संपर्कामिश्रवोधगः ।

वामदक्षिणभेदस्थं शिरश्चेदं सुविस्तरम् ॥ ७६ ॥

वज्रकायाथ प्रोवाच संहितां वज्रमालिनीम् ।

घोरविद्यायुतप्राप्तां तापन्मुद्रागणाङ्कितान् ॥ ७७ ॥

नियुतेन च मुद्राणां मण्डलानां शतेन तु ।

सप्तमस्तां विभेद्यासौ वीरेभ्यो दत्तवान् क्रमात् ॥ ७८ ॥

ज्वलन्ताक्षस्य ज्वालाख्यां यमान्तां च यमान्तिके ।

कालान्तकाय कालान्तां प्लवनां प्लवनाय च ॥ ७९ ॥

संहितां चण्डवेगाञ्च चण्डवेगाय धीमते ।

तारानिधिं निधीशाय शत्रुघ्ने शत्रुमर्दनात् ॥ ८० ॥

एकाक्षाय च यस्यासौ शत्रुघ्नां शत्रुमर्दनः ।

एकनेत्रोऽपि कालाय मीनाय च यशस्विनि ॥ ८१ ॥

द्विस्कन्धां कृत्यतां प्राह घोरविद्यां ममालयाम् ।

कालभेदो मया प्राप्तः कालसंकर्षणात्मकः ॥ ८२ ॥

मयापि कथितस्तुभ्यं यातुधानाधिपाय च ।

वृन्दारकमुनिस्कन्धैस्त्वत्तोऽनन्तैर्विसर्पिताः ॥ ८३ ॥

प्रारब्धो योऽप्ययं भेदः सोऽपि यामलसंज्ञया ।

जयद्रथं तु भूर्लोके षट्साहस्रोऽभिधास्यते ॥ ८४ ॥

मीनभेदोऽपि यस्योक्तो ज्ञानस्यैकाग्रचक्षुषः ।

समीने नामसदृशे नरसिंहाय चैव तु ॥ ८५ ॥

योगिने दिव्यतपसे दैववत्स्यैकचक्षुषे

प्रकाशितं ततः शुक्रान्मयाद्यं शिष्यसन्ततिः ॥ ८६

संस्थिता धारकाद् यस्य शिरश्छेदस्य सुव्रते ।

सांग्रामिकमिदं तन्त्रं राजानास्याति दुर्लभम् ॥ ८७ ॥

तस्यावबोधमाविष्ट न सं यः  स्ववशीयते ।

अथ स्वगुणमाहात्म्यसंज्ञयाद्धतगैः शिवैः ॥ ८८ ॥

सम्मोहमिति यद्गीतं भेदस्तस्योपवर्ण्यते ।

दैत्येन्द्रसंप्लने वृत्ते रणरागाहितात्मना ॥ ८९ ॥

मातृमण्डलयुक्तेन वीरेण प्रविजृम्भता ।

महामृतप्रमत्तेन प्रारब्धं दिव्यताण्डवम् ॥ ९० ॥

एतस्मिन्नन्तरे दिव्ये यास्ता : लोकेशमातरः ।

तासां मार्गान् महादेवि या सा चक्रकरालिनी ॥ ९१ ॥

तया भक्षितुमारब्धं देवचक्रं सभैरवम् ।

ततस्तदाशयं बुध्वा देवदेवेन शूलिना ॥ ९२ ॥

विसृष्टो मदिराम्बोधिश्चलद्वीचीचयाकुलः ।

शक्तिपद्मे चतुष्पत्रे चतुष्के योगलीलया ॥ ९३ ॥

जयाद्यं भ्रातृयुक्तश्च सवीणमसृजत् प्रभुः ।

ततस्तन्त्रीरवाध्वानमधुरस्वरमोहितम् ॥ ९४ ॥

परां प्रीतिमुपायातं अह्लायैवोग्रमण्डलम् ।

तुम्वं बिम्बं चलं कान्तं पीठं ब्रह्मकुलं चलम् ॥ ९५ ॥

योगो वीर्यं कला धर्मो दर्पो गर्वात् समादृतः ।

तेजःसंपत्प्रभावश्च स यत् श्रीर्लक्ष्मीर्ज्योतिषामथ ॥ ९६ ॥

मान्त्रैश्वर्य विभूतिश्च विभवाद्यो अनन्तकाः ।

पर्यायाः शक्तिमच्चक्तेर्गीतास्तन्त्रविशारदैः ॥ ९७ ॥

शाम्भवं हि चलं तुम्बं तद्दूरं जगति स्थितम् ।

सेव्यस्तु वाञ्छितार्थाय क्रियया शान्तरूपया ॥ ९८ ॥

चतुष्कादिविभागैस्तु गर्भे तुम्बुरुसंज्ञया ।

महासंमोहनं नाम तत्तन्त्रमवतारितम् ॥ ९९ ॥

तस्य धाता महेशानस्तस्मात् संमोहनं परम् ।

सम्मोहताडनं तत्तु त्रिमूर्त्तिश्चाप्यनंततः ॥ १०० ॥

त्रिमूर्त्तिर्दुन्दुभिस्तस्मान्नीलकण्ठोऽवतारकः

नील रुद्रोद्भवाद्यन्या शिष्यास्तेष्टाष्टकाश्रिताः ॥ १०१ ॥

भार्गवोमाख्यभेदेन तद्विरूपेण सर्पितम् ।

महासिंहासनं कल्पं कल्पानेकसमाकुलम् ॥ १०२ ॥

तं वक्ष्यामि समासेन यथावच्छृणु मोदित ।

भूरितन्त्रान्तरैर्व्याप्तं सूत्रानेकसमाकुलम् ॥ १०३ ॥

मायाबीजोत्तरं पूर्वं तथा संमोहनामृतम् ।

जयामृतं विचित्रञ्च तारामृतमहामृतम् ॥ १०४ ॥

गुणामृतं कलासारं कालसारं परामृतम् ।

त्रोटलं बिन्दुसारञ्च मायासारं महोदयम् ॥ १०५ ॥

विद्याजालं महाजालं मदनं मदनोदयम् ।

मन्त्रोदयं प्रमोदञ्च विधिविद्याक्रियोदितम् ॥ १०६ ॥

रक्षो रक्षं सुरक्षञ्च त्रैगुणं भूतडामरम् ।

त्रैलोक्यविजयं चैव भवते विजयं परम् ॥ १०७ ॥

नीलकेतुं वसोर्धारमङ्कप्रश्नप्रियोदयम् ।

महाबलं विप्रघ्नञ्च जम्भनं मोहनप्रभम् ॥ १०८ ॥

शिखाचूडामणिं कान्तं कर्कोटं करपूजितम् ।

संमोहतिलकं कृत्वा विद्यातिलकमेव च ॥ १०९ ॥

तिलकं प्रयोजनानाञ्च दुर्वासामृतसुन्दरम् ।

कन्दर्पविजयालीलं ललितं रतिवर्द्धनम् ॥ ११० ॥

भोगिनेयं विशालञ्च भ्रातृतन्त्रादिकानि तु ।

महासंमोहजलधेस्तन्त्ररत्नानि कोटिशः ॥ १११ ॥

निर्गतानि महादेवि भुक्तिमुक्तिकराणि च ।

सुरैरपि दुराप्यानि किं पुनर्मनुजन्मभिः ॥ ११२ ॥

देवदानवगन्धर्वाः किन्नरोरगनायकाः ।

मुनयश्च तपोनिष्ठा एतेषां धारकाः स्मृताः ॥ ११३ ॥

मुनिभ्यो पुद्गलादिभ्यः शकुनिर्नरसत्तमैः ।

तन्त्राण्येतानि देवेशी शृण्वंश्च तनयोत्तरात् ॥ ११४ ॥

नयोत्तरं महातन्त्रमष्टभेदविसर्पितम् ।

ते प्रवक्ष्यामि प्रोत्फुल्लविषजन्मानने शृणु ॥ ११५ ॥

त्रैलोक्यमोहनं बिम्बं दानवारिविमोहनम् ।

तारकाभ्युदयं चैव संग्राम विजयं परम् ॥ ११६ ॥

नयसारं च मणिनां नयानां तिलकं तथा ।

कोलाहलाम्बुराशिश्च चापमाली मृगध्वजः ॥ ११७ ॥

नारायणो वषट्कारो वौषट्कारो  समो गिराः ।

क्रमशो धारका ह्येते त्रिपदेष्ववतारकाः ॥ ११८ ॥

शुक्रश्चाङ्गिरसः प्राप तन्त्रमेतत् सुविस्तरम् ।

विस्तारितं जगत्यत्र नानाकल्पसमाकुलम् ॥ ११९ ॥

प्रस्फुरद् बलभूयिष्ठं विद्यामण्डलमालितम् ।

मन्त्रास्त्रवीर्यदीप्तांशुप्राकारोद्धतदानवम् ॥ १२० ॥

अमोघबलवाहुल्यं तारकोर्जाविवर्धनम् ।

दुर्द्धर्षं शांर्ङ्गिणा ज्ञात्वा विज्ञप्तश्चन्द्रशेखरः ॥ १२१ ॥

स्तुतिपूर्वं मुनीन्द्रैश्च सनातनपुरःसरैः ।

विदिताशेषसद्भावभव्याभव्यहिते रतः ॥ १२२ ॥

भावनाभाव्यभूतेशभूरिभूरिभरावहः ।

भद्रपीठकभद्राङ्कभद्रचन्द्रार्धशेखरः ॥ १२३ ॥

सुभद्रभद्रया भद्रिभद्रिताभद्रविग्रहः ।

भृकुटीभङ्गभीमास्यभीमनादभयङ्करः ॥ १२४ ॥

भानुभाभास्पदीभूतभक्तानामभयङ्करः ।

बुधान्तकतमोभानो दुष्टद्विरदकेसरे ॥ १२५ ॥

विश्वहर्म्यमहास्तम्भविश्वग्योन्येकबीजगाः ।

कलाकलापसन्तान पूरिताधोऽनुगोचरः ॥ १२६ ॥

नभोधुनीजलोल्लोलप्लाचितेन्दुकपालकः ।

चन्द्रस्यामृतसंकल्पः संजीवास्थिविभूषणः ॥ १२७ ॥

मुहुश्च सद्वन्द्वशुकमुखमारुतवीजितः ।

पिङ्गमूलजटाबन्धनभश्चन्द्रविराजितः ॥ १२८ ॥

योगियोगजयादेश्च योगियोग्यक्रियाश्रयः ।

योगयोने जगत्यत्र पञ्चक्रमविधायकम् ॥ १२९ ॥

भयहर्त्ते जगत्कर्त्ते विश्वयोने नमोऽस्तुते ।

दैत्येन्द्रविमलद्वेष्ट्रे नमस्ते द्विजचक्षुषे ॥ १३० ॥

भस्मिने धन्विने शूलिनेऽङ्गिने गुहधन्विने ।

असंप्रचायुषेरण्ये लिङ्गिने स्वर्णरेतसे ॥ १३१ ॥

त्रिचक्षुषे विधुधृते मृगेन्द्राजिनवाससे ।

पीतदेवान्नसे भद्रे भद्राया रुद्रवक्षसे ॥ १३२ ॥

मनोभवातिरम्याङ्ग दग्धदीप्ताग्निसदृशे ।

प्रेयोवरोधनस्पर्शसम्प्रीणीततनूरसे ॥ १३३ ॥

फलयोत्क्षिप्तशैलेन्द्र रक्षोधिप कृताधिपे ।

विद्यामन्त्रांशुसंप्राप्तविविधस्तोत्रसंपदे ॥ १३४ ॥

मनोभिलषितानन्तसन्तताशेषशर्मणे ।

नमस्ते लेलिहानेति प्रशान्तायास्यलिङ्गिने ॥ १३५ ॥

शक्तिरूपाय भगिने शक्त्यतीताय योगिने ।

नयोत्तराय त्रिगुणे तिस्रो गौर्यो महेश्वरः ॥ १३६ ॥

ज्वालिनी सपताका च तन्त्राण्येतानि शङ्कर ।

मन्त्रविद्यापरन्तान्तत्याजेन् अव्याजेन बलेन तु ॥ १३७ ॥

स्फुरन्त्यप्यसुरास्तेषु तेषु साधका विहितास्त्वया ।
धनुर्धरागमावाप्तसंप्रदायाश्च दुर्धराः ॥ १३८ ॥
निघ्नस्तेन सुरानीकोववलीयाम्सोबलोत्कटः ।
अतिसन्धयितुं शक्तो नयनेन  नयान्तरम् ॥ १३९ ॥
सुरनैगमोतिदक्षः श्रुतनानाशयोऽपि हि ।
अतिसौभाग्ययोगेन नित्या मन्त्रनि   विभिः ॥ १४० ॥
मोहिता विश्वकामिन्यस्तापिता मन्मथाग्निना ।
प्राणात्ययादिभिः क्रूरैः कर्मभिस्त्रासितं  जगत् ॥ १४१ ॥
ज्वालिन्याचक्रवर्त्तित्वं हृदये च विभोर्बलात्  ।
विद्याधराणां महतां तपस्तोपितवेधसाम्  ॥ १४२ ॥
श्रुत्वा शौरिमुखोद्गीर्णं वचः पन्नगभूषणः  ।
स्तोत्रं सुप्रीतया वाचा प्राहैवं गरुडध्वजम् ॥ १४३ ॥
गच्च भौमगणं गृह्य स्वां स्वां अवसतिं सुखम् ।
योग्यमन्त्र करिष्यामि यद्धितं च विधासिनम् ॥ १४४ ॥
पक्षिपत्रादिदेवेषु  गतेषु प्रभुणा ततः ।
नयोतरं महातन्त्रं श्रुतं देवेन शम्भुना ॥ १४५ ॥
चिन्ना च ज्वालिनी विद्या नित्या घोर्यश्च कीलिताः ।
उत्कीलनादिकाम् भेदान्  सप्ततन्त्रेषु ये विदुः ॥ १४६ ॥
तत्र तेषु फलं लेभुरितरेऽपि परिश्रमम् ।

अन्तेऽवतारं  वक्ष्यामि महारौद्रस्य तन्त्रजम् ॥ १४७ ॥

भैरवं ब्रह्मरुद्रं च षडङ्गायतमेव च ।

महारौद्रेण रुरुणा शर्वाय परिकीर्तितम् ॥ १४८ ॥

अथ रुद्राय संवर्त्तः सम्वर्त्ताच्चण्डशौण्डिनौ ।

शौण्डिनश्चार्द्धनारीशो ह्यवैशीन् तन्त्रसंग्रहम् ॥ १४९ ॥

संगृहितं ततः प्राह सभृङ्गे स्वल्पसूत्रकम् ।

भृङ्गिनो दिव्यसंबन्धः सोऽस्य तन्त्रस्य स्वल्पकः ॥ १५० ॥

अर्थसारा सुराधर्मा दैत्यघ्नीवीरवन्दिता ।

विरार्थिना वीरसारा रौद्री रुद्रान्तमालिनी ॥ १५१ ॥

कालोत्तरा च कालघ्नी महामृत्युञ्जयापरा ।

प्रचण्डभैरवश्चैव चण्डश्चण्डेश्वरोऽपरः ॥ १५२ ॥

तस्माच्चालातपाणिस्तु लोकेशः पञ्चसप्ततः  ।

ईशानश्चावदत् पूर्णो रुद्रैकादशकोऽनु च ॥ १५३ ॥

दशैका संहिता ह्येताः क्रमशो रुद्रयामले ।

अथातः शिववक्त्रेन्दु  मण्डलानां परिश्रुतम् ॥ १५४ ॥

परामृतबलोद्भासि श्रूयतां ब्रह्मयामले ।

नानाभेदसमाकीर्णं पञ्चस्त्रोतोविमुद्रितम् ॥ १५५ ॥

सर्वस्य जगतो ह्यस्य यदुपादानलक्षणम् ।

कीर्तितं प्राङ् महादेव सदाशिवशिखालयम् ॥ १५६ ॥

योनिरुपोऽपि शब्देन प्रोद्गीतं सर्वसूरिभिः।

नानाविद् विन्दुनाषीजासंज्ञाभिस्तद् व्यवस्थितम्॥ १५७॥

विद्युक्तं स च सर्वज्ञ आत्मत्वं तच्च दुर्मतम्।

तद्बीजमपरं प्रोक्तं परं सर्वज्ञतान्वितम्॥ १५८॥

पिकारः पिण्डरूपस्तु वुकारो बीज इष्यते।

उभयोर्योग कर्ता यश्चुङ्कारः परमो हि सः॥ १५९॥

पिकारस्य तु ये भेदा वुकारस्योभयस्य च।

व्याकरोति यतस्तान्स्तु पिचुतंत्र मतः स्मृतम्॥ १६०॥

पिकारं कामिनीपुष्पं रेतो नारं चुरुच्यते।

तेन मन्त्रक्रियाव्याजाद् यस्मात् फलकृते मतः॥ १६१॥

भूयसी देवदेवेन तस्मादेतत् पिचुं मतम्।

तदेकं सप्तधा भिन्नं ब्रह्माख्यं श्रावकेच्चया॥ १६२॥

रक्ताद्यं पेचिकाद्यञ्च मृगालीमतमेव च।

शाम्वरं नीलकेशाख्यं भारुण्डाख्यं च पिङ्गलम्॥ १६३॥

शम्वरन्तु द्विधा भिन्नं भेदेनोत्फुल्लकेन तु।

एवमेतानि चाष्टौ च मतानि कथितानि तु॥ १६४॥

विस्तीर्णानि कुरङ्गाक्षि तन्त्रेऽस्मिन् ब्रह्मयामले।

अन्यभेदाश्च ये तेषां ते शृणुष्वावधुना प्रिये॥ १६५॥

रक्ताख्यं बिन्दुसारेण पेचिकाख्यं कपालिना।

हेतुयानं शिवाख्यन्तु शम्बरं शम्बराख्ययोः ॥ १६६ ॥

नीलकेशीमतं देवि नीलकेश्यावतारितम् ।

भारुडया भारुडीसंज्ञं कौशिक्या पिङ्गलामतम् ॥ १६७ ॥

मूलावतारका ह्येते तेभ्यो भिन्नाश्च कोटिशः ।

नन्ताद्यादुत्पलं मैत्रं येविकाद्याच्च निर्गतम् ॥ १६८ ॥

हेडामताच्च निर्यातं करालीमतमेव च ।

लम्पटं नीलकेशाख्यात् कालाख्यं भारुडीमतम् ॥ १६९ ॥

सारस्वतविनिर्यातं विस्तीर्णाच्चम्बरामतात् ।

उत्फुल्लकात् कलासारं माकोटं च विनिर्गतम् ॥ १७० ॥

निर्गते पिङ्गलाख्याच्च पिचुसारनयोदये ।

एतेभ्यस्त्वनुतन्त्रेभ्यः पविशिष्टाष्टकं स्थितम् ॥ १७१ ॥

प्रोच्यते नामभेदेन यद्यस्मिन् संस्थितं प्रिये ।

पाञ्चालिकोत्पलाज्जातं मन्थानं वाग्वतीभवात् ॥ १७२ ॥

करालीमततत स्पष्टं तत्सूत्रं सारसंग्रहम् ।

कालाख्या निर्गता लक्ष्मी विमलं लंपटाद्यतः ॥ १७३ ॥

कच्चपिः कम्पकुट्टाच्च स्यात् सण्डपिकं मतम् ।

गर्भाप्रकरणं जातं परिशिष्टं नयोदयात् ॥ १७४ ॥

उपसूत्राण्यतः सन्ति परिशिष्टोद्भवानि तु ।

अश्वप्लुतं तु सारङ्गं गोजिकं भेदविप्लुतम् ॥ १७५ ॥

वैभङ्गं चैव मातङ्गं कुसुमालीसवित्रकम् ।

एवमादिरनन्तैस्तु स्रोतोभिः प्रविसर्पितम् ॥ १७६ ॥

जगत्यत्र वरारोहे विस्तीर्णं ब्रह्मयामलम् ।

मूलावतारकेभ्यस्तुरुद्रैर्वसुदिवाकरैः ॥ १७७ ॥

योगिनीनां गणैश्चाथ विद्याधरमहोरगैः ।

मुनिभिश्चोर्ध्वरेतोभिर्मतश्च परिविदितुम् ॥ १७८ ॥

मूलानुपरिशिष्टोऽयं सूत्रेभ्यः सप्तसुंदरि ।

मिश्रसूत्राण्युत्तराणि निर्गतानि शृणु प्रिये ॥ १७९ ॥

मुष्टिकौ लवकौमारौ कालसाराम्बुका तथा ।

तिलकं चावधूनं च सप्तमं कीर्तितानि तु ॥ १८० ॥

कथितानि महेशानि पञ्चस्रोतोमयानि तु ।

मूलं गुह्यं नयं चैव उत्तरं चोत्तरोत्तरम् ॥ १८१ ॥

अर्थाविर्भावभेदेन पञ्चसूत्रोज्ज्वलं मतम् ।

अथातः शब्दमूलं तु सर्वतन्त्रार्थसूचकम् ॥ १८२ ॥

तन्मूलं स्वल्पसूत्रं च गुह्यं गुह्यविवेचकम् ।

निराचारावधूतार्थं नाडी नाडीगतिक्रमात् ॥ १८३ ॥

बिन्दुबीजकलायोगवर्णयागविवेचकम् ।

मन्त्रजीवामृताकर्ष योगिनीकुलकीर्तितम् ॥ १८४ ॥

गुह्यसूत्रं तदुद्दिष्टं बाह्याध्यात्मार्थवाचकम् ।

सिद्धासिद्धेषु सञ्चारक्रमव्याकरणे रतम् ॥ १८५ ॥

सिद्धहानिविचाराढ्यं प्रत्यानयनकीर्तितम् ।

गमागमविचाराढ्यंनयसूत्रविनिस्सृतम् ॥ १८६ ॥

सूचितं यत् त्रिभिः सूत्रैरनिर्णीतं च तत्त्वतः ।

स्फुटार्थमवदत् तत्र सूत्रमुत्तरमुच्यते ॥ १८७ ॥

उत्तरेऽभिहितो योऽर्थः प्रमादादस्फुटीकृतः ।

तत् स्फुटार्थविकल्पार्थं निर्विकल्पार्थवादि च ॥ १८८ ॥

सर्ववस्तुसुसंपूर्णमुत्तरोत्तरमुच्यते ।

सूचकं चाभिधानाद्यं गमकं च प्रकाशकम् ॥ १८९ ॥

सङ्कीर्णं पञ्चकं सूत्रं सूत्रजातिविदो विदुः ।

असूचितं लेशयापकृष्यार्थं कुरुते स्फुटम् ॥ १९० ॥

तच्चतुर्ष्वपि संमिश्रं मिश्रसूत्रमुदाहृतम् ।

भूतस्य संग्रहं कुर्याद् भावि यत् तस्य सूचनम् ॥ १९१ ॥

पटले पटले यच्च तत् सङ्कीर्णमुदाहृतम् ।

सूत्रवाक्यमतश्चैव परिच्चेदो ह्यनन्तरः ॥ १९२ ॥

पञ्चधा नित्यसम्बन्धः प्रोक्तो वक्रा विचारिणा ।

सूत्रतः सूत्रसम्बन्धो वाचोक्तो वाच्यग स्मृतः ॥ १९३ ॥

सूचनाद् वाक्यहीनोऽपि योऽर्थंनिगदते प्रियम् ।

मनोऽभिलषितं श्रोतुं वक्तृत्वात्मानसो हि सः ॥ १९४ ॥

सूचितार्थसमाप्तिस्तु परिच्चेद इति स्मृतः ।

तदनन्तरोक्तियुक्तिर्या सा वाचान्तविधायिनी ॥ १९५ ॥

एकार्थगमकं सूत्रमाहृत्योन्मीलयेद् बुधः ।

वृद्धिमानकृतेर्थस्य नीचस्थामपि यद् भवेत् ॥ १९६ ॥

अर्थविस्पष्टतां कर्त्तुं सर्वज्ञैरभिभाषितम् ।

दृष्टान्तत्वे विरुद्धं हि शिष्यसम्बोधनाय तु ॥ १९७ ॥

स्वसिद्धान्ताविरोधेन गमकेऽर्थे कृतेऽपि हि ।

अन्वीक्ष्यादूषणरतो यः सत्यागारसंमतः ॥ १९८ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां ब्रह्मयामलनिर्णयश्चत्वारिंशति पटलः ॥ ४० ॥

एकचत्वारिंशतिः पटलः ।

श्रीभैरव उवाच ।

अथ कोटयष्टकोपेतमाहुर्देवं सदाशिवम् ।

कपालीशाय महते वितानं विष्णुयामलम् ॥ १ ॥

कपालीशाच्च स्वच्चन्दःस्वच्चन्दात् क्रोधभैरवः ।

क्रोधाद् उच्चुष्मकः रुरुगुच्चुष्माच्चण्डभैरवः ॥ २ ॥

चण्डादुन्मत्तकः प्रापदुन्मत्ताद् वीरभैरवः ।

वीरेशाच्चाप्यनन्तस्तुमन्थानो भास्करादपि ॥ ३ ॥

मन्थानान्नीलकण्ठाख्यस्तस्माद् भीमोऽथ वामकः।
महाकालो गृध्रपादो विष्णुश्च समितिञ्जयः॥ ४॥
शाण्डिल्यादिमुनीन्द्रा स विष्णुर्बोधितवान् पुनः।
त्रिमुण्डीन्यष्टकोटिः स्याद् बहुरूपाच्च सप्ततिः॥ ५॥
क्रोधनी ब्षड्भिरुद्दिष्टा सोच्चुष्मा पञ्चकोटिगा।
चण्डा चतुर्भिरुद्दिष्टा प्रोन्मत्ता च तथैव हि॥ ६॥
कोटिभिस्तिसृभिः प्रोक्ताः संहितावीरभैरवाः।
अनन्तमतसंकीर्णाद्वाभ्यां चानन्तभास्करः ॥ ७॥
तृणकोऽनन्तविजयारभूतादिपारगाः।
भीमा वामा महाकाली गृध्रपादी च संहिता॥ ८॥
अनन्तविजयातस्तु निर्गता रूपसंज्ञया।
एकविंशत्सहस्राणि तथा कालवधात् पुरा॥ ९॥
द्वासप्ततिसहस्राणि श्रुता कृष्णेन धीमता।
विष्णूपसंहिताषड्भिः सहस्रैर्यापरा प्रिये॥ १०॥
दुर्दर्शना तु नाम्नासौ शाण्डिल्येनावधारिता ।
त्रिसहस्रेण सार्द्धेन शाण्डिल्यो मुनिसत्तमः॥ ११॥
जगदेतां मुनीन्द्राणां संहितांस्तु सुदर्शनाः।
भृगुश्वेतादिकानान्तु कपिलानां महात्मनाम्॥ १२॥
भैरवानलनिर्दग्धं दुष्कृतानन्तकर्मणाम्।

शुद्धं शक्त्यर्कसम्पर्कं शुद्धध्वान्तोरुजन्मनाम् ॥ १३ ॥

तपोभासा प्रदीप्तार्चिराविर्भावितसद्मनाम् ।

योगचन्द्रामृतोद्दाम धरानिर्वापितात्मनाम् ॥ १४ ॥

इति विद्यायामले सूत्रस्थानानि ।

श्रीभैरव उवाच ।

मम वदतः शृणु पार्वति विपुलगुणाकीर्णमण्डलामेयम् ।

विद्यासुगणाकीर्णं सेनापतियामलं महागहनम् ॥ १५ ॥

तेजोधाम्नाभिहितं प्रचण्डवीरायतेन पृथुशिरसि ।

स्थूलशिरसा समदृशे समनयनेनापि विश्वभुजे ॥ १६ ॥

विश्वभुजः प्रतिपन्नो विषबलयुगलेन तत् मयाः ।

देविमतस्त्वया विशाखेन नन्दिना कुञ्जरमुखेन ॥ १७ ॥

सौभद्रवीरभद्रोग्रचण्डनाथादिकैरथ ।

तेभ्यो महेन्द्रचन्द्रार्कवायुमुनिमरुद्गणैरान्तम्- ॥ १८ ॥

गौहारस्पन्दानलकण्ठविषच्चदा शैशवं मयूरशिखां

रमणोद्भवाथ वरदा लीलोत्पलमालिकाबहुलाम् ।

स्कन्दानन्द विशाखा चालनतास्कन्दविजयिनी

विजयाख्याशेषतस्तव विपुलाः कथितास्तव संहिता देवि ॥ १९ ॥

इति स्कन्दयामलसूत्राणि ।

अथ पादाधिको लक्षो यः प्राप्तो भैरवोदयात् ।

मृत्युञ्जयात् स तेनान्तः पिङ्गान्मृत्युजितापि हि ॥ २० ॥

पिङ्गलः शङ्ककर्णाच्च हुंकारात् सोऽप्यवाप्तवान् ।

हुंकारः पिङ्गलेशश्च पिङ्गलेशो यमान्तकात् ॥ २१ ॥

यमान्तको सितद्दशः कृष्णाक्षो भगभैरवात् ।

भगरुद्राः सुरानन्दस्तस्माद्‌ देवो महोदधिः ॥ २२

संस्थितोऽन्यप्रदेशस्थो भैरवाणुप्रबोधकः ।

उमायामलनाम्नोऽस्य तन्त्रस्योत्पललोचने ॥ २३ ॥

संहिताष्टकभिन्नस्य चतुष्पीठस्य भैरवि ।

प्रागुमारौरवी ं गम्भीरा ं लंघता परा ॥ २४ ॥

मात्र्यानन्दसुरानन्द भैरवानन्दसंज्ञकाः ।

भैरवाद्या मया प्राप्ता भैरवानन्दसंहिता ॥ २५ ॥

द्वात्रिंशद्भिः सहस्रैस्तु संहृत्योन्मीलिता तव ।

त्वत्तोद्युष्टसहस्राणि भैरवानन्दसुन्दराःः ॥ २६ ॥

विसर्पिता जगत्यत्र सुरसानङ्गबोधनी ।

भव्या तु जनितानन्दा सिद्धसन्दोहलक्षणा ॥ २७

तव सुतनु विशालशालिशाख उदितो यः विषदोरगोरुवैद्यः ।

प्रतिविजितविशेषवस्तुयुक्तो गुरुसहितोऽखिलवीरतन्त्रभेदः ॥ २८ ॥

इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रेचतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकाल सङ्कर्षण्यां विष्णुसूत्रनिर्णय

एकचत्वारिंशतिः पटलः ॥ ४१ ॥

द्विचत्वारिंशतिः पटलः ।

श्रीभैरव उवाच ।

उमायामलकाः पञ्च पञ्चभ्यो निर्गतानि तु ।

यामलेभ्यः करालाब्जलोचने तानि वच्मि ते ॥ १ ॥

वेतालयामलं देवि निर्गतं ब्रह्मयामलम् ।

ईशानयामलं तन्त्रमुद्भूतं विष्णुयामलात् ॥ २ ॥

अथर्वयामलं घोरं प्रसृतं रुद्रयामलात् ।

सरस्वतीयामलं तु च्युतं तत्स्कन्दयामलम् ॥ ३ ॥

उमायामलतः सृष्टं वितानं सोमयामलात् ।

प्रतियामलानि पञ्चाशदुक्तेभ्यो निर्गतानि तु ॥ ४ ॥

यामलेभ्यस्ततस्तेभ्यः प्रच्युतान्यमितानि तु ।

देवताख्यानि चत्वारि तथा दूतीभवानि तु ॥ ५ ॥

किङ्किणीयानि चत्वारि चत्वार्यनुचरीषु च ।

षट्संख्यावस्थितान्यत्र योगिनीयामलानि तु ॥ ६ ॥

अष्टादशैव भीमानि डाकिनीयामलानि तु ।

वीरादिदश चोक्तानि मातृणां यामलानि तु ॥ ७ ॥

यामलं युगलं नाम मन्त्रविद्यैकगोचरम् ।

ज्ञानक्रियात्मकं तच्च अन्योन्यापेक्षया स्थितम् ॥ ८ ॥

मन्त्रज्ञानक्रियाविद्यासंयोगादर्थसाधनम् ।

करोति विश्वगर्थानामयुतं निष्फलं यतः ॥ ९ ॥

अतोऽर्थयामलं सेव्यमेकचित्फलकारणात् ।

वदतोऽर्थं शृणु मम क्रियासूत्रविनिर्णयम् ॥ १० ॥

बालेन्दुनयने पूर्णचन्द्रमण्डलजल्पने ।

अष्टानामष्टकानान्तु योऽसावुद्भवकारकः ॥ ११ ॥

महोनिधिः स सर्वज्ञो मुद्रापीठावतारकः ।

तेन व्योममयी मुद्रा स्वस्वभावैकलक्षणाः ॥ १२ ॥

स्वप्रतिष्ठा स्वधर्मिष्ठा नित्यानन्दातिलालसा ः ।

मुद्रिता शेषसम्बन्धाद् राविता तनुबन्धना ॥ १३ ॥

मनःस्थूलामृता मुद्रा हृद्रूपानेकवर्जिता ।

सा प्रपञ्चत्वमापन्ना ध्येयध्यानगलिङ्गता ः ॥ १४ ॥

विचारिता चित्रभेदैरेकानेकस्वरूपतः ।

यस्मिन् तन्त्रे कुरङ्गाक्षि हृद्भेदं तत् स्मृतं प्रिये ॥ १५ ॥

तस्यावतारको देवो नाम्ना फेत्कारभैरवः ।

फेत्कारात् कान्तिचत्रं तु कान्ति चात्रादिविग्रहः ॥ १६ ॥

हेरस्तात् प्रपलम्भस्तु प्रपलम्भान्निरञ्जनः ।

निरञ्जनात् ततो व्यापी व्यापिनो विग्रहेश्वरः ॥ १७ ॥

विग्रहेषान्मया प्राप्तं मया चैव समीरितम् ।

स्वल्पात् स्वल्पतरं चैव त्वत्तो देवि समर्पितम् ॥ १८ ॥

देवादिमनुजान्तानां हृद्भेदं भेदवर्जितम् ।

देहिनां ये विकारास्तु चित्रा- देहविकारजाः ॥ १९ ॥

शान्तघोराविमूढैस्तु भावैः पृक्ताः प्रयत्नगाः ।

भिषिक्तचित्तदारूढहृष्टबन्धस्वरूपगाः ॥ २० ॥

तेषां वैचारिकं तन्त्रं मातृभेदं हि तन्मतम् ।

मायितं तु जगत्कृत्स्नं त्रायितं च विशेषतः ॥ २१ ॥

यस्यां मया च सा चक्रे मातृशब्देन गीयते ।

तस्या विचित्रभेदो यो मातृभेदः स उच्यते ॥ २२ ॥

हृद्भेदे गुरुमाला या सैवाद्या विधिधारकाः ।

मातृभेदाद् विनिर्याता विस्तीर्णा पञ्च संहिताः ॥ २३ ॥

अपराजिता वास्तुविद्या सर्वविम्बा करोटिनी ।

सिद्धसारार्थचित्रार्था नित्यमार्गविधायिनी ॥ २४

बीजं बिन्दुं तथा बिन्दुं नादश्च स निरोधिकम् ।

संहृत्य कुरुते कुब्जं स्वाङ्गं या सम्प्लवे सदा ॥ २५ ॥

कुब्जिका सा समाख्याता शक्तिगम्या मनोन्मनी ।

श्रूतो व सूतं ख श्रुतं हि तदभिप्रायः पञ्चाशद्वर्णलक्षणः ॥ २६ ॥

सो ह्यनन्तपदार्थानां वागुक्त्यार्थाभिधायकः ।

सदा ध्यानविहीनेऽपि ह्यस्वरूपेऽपि वस्तुनि ॥ २७ ॥

वागुक्त्या प्रतिपत्तिः स्यात् तद्रूपाव्यभिचारिणी ।

या यस्या वाचिका मुद्रानन्तभेदप्रतिष्ठिता ॥ २८ ॥

तत्तात्पर्यतरं तन्त्रं विज्ञेयं कुब्जिकामतम् ।

गुरवोऽस्य पुरोक्ता ये संहितानिर्णयं शृणु ॥ २९ ॥

एकाक्षरा द्व्यक्षरा च पदमाला तृतीयका ः ।

शब्दार्थमाला  चमाला चतुर्थी शब्दमालार्थमालिनी ॥ ३० ॥

सप्तमी वाक्यमाला तु विद्यामालाष्टमी मता ।

कुब्जिकामतविस्तीर्णा पर्वतानिर्गतास्त्विमाः ॥ ३१ ॥

संहिता संहिता ह्यष्टौ गम्भीरा या प्रकाशिता ।

त्रिविध विधां मनोऽभिलषितार्थविधानताम् ॥ ३२ ॥

विशदभेदसंयुतमालाकुलमातृसंभवाम् ।

गदितमनङ्गशत्रुदयिते प्रतिपीठगतम् ॥ ३३ ॥

वृत्तिमधिगच्च पीठमवगत्य सुरेन्द्रनुते ।

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे तुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यामुमायामलादिसूत्रनिर्णयो

द्विचत्वारिंशतिः  पटलः ॥ ४२ ॥

त्रयश्चत्वारिंशतिः  पटलः ।

श्रीभैरव उवाच ।

अथातो भिन्नरूपन्तु पीठं मण्डलसंज्ञकम् ।

शतेन कथितं तत्वं व रु तत्व संहिताभेदरूपिणे ॥ १ ॥

संहिताभेदहीनं तन्मूलसूत्रैकगोचरम् ।

वीथिकाद्वारपद्मानां नानाकारविचारकम् ॥ २ ॥

तत् त्रिपीठे तु सामान्यं स्वपीठाभ्यधिकार्थदम् ।

तस्यावतारको देवः स साक्षात् पञ्चशेखरः ॥ ३ ॥

रतिशेखरतस्मात् तु तस्मात् संहारभैरवः ।

भैरवाद् डिण्डिनामा च ढण्ढो दण्डेश्वरः स्थितः ॥ ४ ॥

दण्डेश्वराच्च धौरेयो धौरेयाद् गोमतिर्महान् ।

गोमतेस्त्रिकलस्त्रीकः कलाश्रीकण्ठमूर्ध्वगः ॥ ५ ॥

श्रीकण्ठाच्च मया प्राप्तं निधिपीठं सविस्तरम् ।

मत्सकाशाच्च ब्रह्माद्यैः प्रतिपीठं श्रुतं प्रिये ॥ ६ ॥

मूलपीठं सुसंक्षिप्तमत्यन्तं विरलं गतम् ।

यतो ब्रह्मादिभिर्ज्ञानं ततद्व्यासविभेदतः ॥ ७ ॥

ताण्डवं तु यदा मर्त्यो मातृमण्डलभैरवः ।

करिष्यति श्मशानेषु कल्पान्ते घोरनायकः ॥ ८ ॥

मण्डलेशः कुलावस्थस्तदा पीठं तु मण्डलम् ।

अवतारयतेऽसौ वै नानाकल्पविभेदतः ॥ ९ ॥

चतुर्विधकुलावाप्त्यै पुंसां कुशलकर्मिणाम् ।

पारंपर्यक्रमेण । प्रविततमखिलं संहिताभेदभिन्नम् ।

तन्त्रं वीरेन्द्रमातर्गुरुगुणसहितं सूत्रसूत्रान्तरस्थम्॥ १० ॥

पीठेष्वष्टाष्टकेष्वप्युपरचितं निर्गमं भैरवं भ्रान्तिहीनम्।

बुध्वामन्तो दृष्टतो मुहुरपि हृदये केतुतत्पृच्चसे यम्॥ ११ ॥

इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं शतिसाहस्त्रे प्रथमषट्के श्रीकालसंकर्षण्यां त्रिचत्वारिंशतिः पटलः॥ ४३॥

चतुश्चत्वारिंशतिः पटलः।

श्रीदेव्युवाच ।

ज्ञातः सर्वो महादेव मन्त्रतन्त्रान्तरक्रमः। गुरुक्रमो विशेषेण चतुष्पीठे तु भैरवे॥ १॥

अष्टाष्टकं न विज्ञातं येन युक्तः सदाशिवः।

अष्टाष्टकाधिपो देवः प्रोच्यते तन्त्रवेदिभिः॥ २॥

श्रीभैरव उवाच।

भैरवं यामलं चैव मताख्यं मङ्गलं तथा।

चक्रं शिष्यबहुरूपं वागीशान्यष्टसंहितम्॥ ३॥

स्वच्चन्दश्चण्डक्रोधाख्यावुन्मत्तोऽसितविग्रहः।

रुरुर्झङ्कः कपालीशः प्रोच्यते भैरवाष्टकम्॥ ४॥

ब्रह्मयामलमेकन्तु द्वितीयं रुद्रयामलम्।

विष्णुयामलमन्यच्च चतुर्थं स्कन्दयामलम्॥ ५॥

गौतमीयामलाथर्ववेतालं  चाष्टमाङ्ककम् ।

यामलाष्टकमेतद्धि दम्पत्यं चाविशेषगम् ॥ ६ ॥

मताष्टकं शृणु अतः सदाशिवपरिग्रहम् ।

रक्ताद्यं पेटिकाद्यञ्च भारुण्डीमतमेव च ॥ ७ ॥

हह्लामतं चतुर्थन्तु पञ्चमं पिङ्गलामतम् ।

नीलकेशीमतं षष्ठं सप्तमं शम्बरामतम् ॥ ८ ॥

उत्फुल्लमष्टमं प्रोक्तं सप्तस्रोतोविलक्षितम् ।

शताष्टकं ह्युपमतं परिशिष्टैश्च संयुतम् ॥ ९ ॥

श्रीदेव्युवाच ।

कथं तं देव देवेश यत्त्वया यामलाष्टकम् ।

तत् स्वतन्त्रन्तु किं नाथ तत्त्वेकस्माद् विभेदगम् ॥ १० ॥

एतद्धि मम निर्भ्रान्तं कुरु संसारपूजितम् ।

श्रीभैरव उवाच ।

यामलानान्तु सर्वेषामामूलं ब्रह्मयामलम् ॥ ११ ॥

कनकान्धकरुरूणां च वधादिति बलीयसम् ।

तत्त्रिभेदमनुप्राप्तं शृणुष्व ह्यबलात्मजे व वलात्मजे ॥ १२ ॥

रौरवोऽन्धकभेदश्च कनकाख्यस्तृतीयकः ।

यामले वैष्णवेयाख्ये निर्गते रुरुभेदतः ॥ १३ ॥

स्कन्धमन्धकभेदाश्च कनकाद् रुद्रयामलम् ।

यामलेभ्य उमायाश्चाथर्वादीनि  श्रुतानि तु ॥ १४ ॥

तद्भेदो गदितः पूर्वं श्रूयतां मङ्गलाष्टकम् ।

मङ्गलानान्तु देवेशी पूर्वं भैरवमङ्गला ॥ १५ ॥

चन्द्रगर्भा द्वितीया तु तृतीया शान्तिमङ्गला ।

सुमङ्गला चतुर्थी च ब्रह्मी  रौद्री च सा स्मृता ॥ १६ ॥

षडङ्गायतनीयाञ्च ज्ञेया सा सर्वमङ्गला ।

षष्ठी तु विजया नाम प्रोक्ता विजयमङ्गला ॥ १७ ॥

विश्वाद्या सप्तमी देवी प्रोक्ता सा चोग्रमङ्गला ।

वर्माहा चाष्टमी ज्ञेया नाम्ना सद्भावमङ्गला ॥ १८ ॥

मङ्गलाष्टकमेतद्धि शृणु चक्राष्टकं प्रिये ।

स्वरचक्रं वर्णचक्रं  नाडीचक्रं तृतीयकम् ॥ १९ ॥

गुह्याख्यं कालचक्रञ्च सौरवाह्नेयसोमजम् ।

शिखाष्टकं शृणु अतो महोविधिपदस्थितम् ॥ २० ॥

शौक्री मन्दा महोच्चुष्मा भैरवी शम्बरी तथा ।

प्रपञ्चकी मातृभेदी रुद्रकाली तथाष्टमी ॥ २१ ॥

शिखाष्टकमिदं प्रोक्तं बहुरूपमतः शृणु ।

अन्धकी रुरुभेदा च शङ्खा वै शूलिनी तथा ॥ २२ ॥

कर्णामोटी च टाङ्की च ज्वालिनी मातृरोदनी ।

वागीशान्योऽथ तन्वङ्गि वक्ष्याम्यष्टौ यथा स्थिताः ॥ २३ ॥

सिद्धा चित्रा च हृल्लेखा भैरवी च कदम्बिका ।
हंसिनी हंसमाला च चन्द्रकोटिस्तथाष्टमी ॥ २४ ॥
एतत् सदाशिवं चक्रमष्टाष्टकविभेदितम् ।
कथितं तत्र देवेशी मन्त्रतन्त्रप्रकाशकम् ॥ २५ ॥
भूरितन्त्रोदयात् तस्य नोच्यन्ते नियता स्थितिः ।
प्रोच्यते वाथ विस्तीर्णं स्याच्चास्त्रं शृणुतो गुरुम् ॥ २६ ॥
दुर्वासाः सनको विष्णुः कपिलः काश्यपः कुरुः ।
संवर्त्तः शङ्खपालश्च भैरवाख्यावतारकाः ॥ २७ ॥
भृग्वश्वेतोनिधीशश्च विश्वामित्रोऽथ गौतमः ।
गालवो यज्ञवल्कश्च विभाण्डो यामलस्य तु ॥ २८ ॥
कूर्चालः क्रन्दनः कङ्कः केकरः  काननक्षमी ।
कोटराक्षश्च संवर्त्तो मताख्यस्यावतारकाः ॥ २९ ॥
बिन्दुश्चैव सबिन्दुश्च शातातपपराशरौ ।
आपस्तम्बोऽम्बुभुग् व्यासः कात्यायन विनामगः ॥ ३० ॥
तन्त्रावतारकाये तु कथिता मङ्गलाष्टके ।
उलूकः  स्थूलनाडी च हंसो हंसरवः शुकः ॥ ३१ ॥
मनुः पीतोक्षकश्चैव चक्राष्टकविभाषकाः ।
वशिष्ठो दक्ष शुक्रश्च कनकः कोकिलः शुकः ॥ ३२ ॥
विश्वभुक् कश्यपः श्वेतः शिवाख्यस्य तु भाषकाः ।

बृहस्पतिर्यमो घण्टः कङ्करः श्यामकः शिखी ॥ ३३ ॥

तथा कर्णजटाधीशो बहुरूपावतारकाः ।

हंसः सोमो लुलोमश्च विलोमो लोमकः शतः ॥ ३४ ॥

तथैव जडवाल्मीको वाग्वतीनां विभाषकाः ।

एतेऽवतारकाः प्रोक्ता दुर्वासाद्या महर्षयः ॥ ३५ ॥

एतेभ्यो नक्तरूपाणि पृच्चाष्टकविचारकाः ।

फलेष्वभिष्टुते सर्वे भाव्या भैरवमूर्तयः ॥ ३६ ॥

अन्यथा न भवेत् सिद्धिरेवमाहुर्महेश्वरः ।

कथितं तव पद्मलोचने स्फुटमष्टाष्टकलक्षणं परं ।

गुरुयुक्तमनङ्गसुन्दरि शृणु यत् प्रस्तुतमग्रतोऽधुना ॥ ३७ ॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां सदाशिवाष्टाष्टकनिर्णयश्चतुश्चत्वारिंशति पटलः ॥ ४४ ॥

पञ्चचत्वारिंशतिः पटलः ।

श्रीभैरव उवाच ।

गुर्वाश्रितमिदं सर्वं संसारोद्धरणादिकम् ।

शास्त्रसन्दोहमखिलमनन्तं षट्प्रकारतः ॥ १ ॥

ज्ञेयं स्रोतोविभेदेन तन्त्रेऽस्मिन् पारमेश्वरे ।

अष्टधा क्रमभेदेन तच्च चारुक्रमेण हि ॥ २ ॥

तस्यानुगतमेवात्र तदष्टकमुदाहृतम्।

गुरुक्रमं स्यात् प्रथमं पिण्डाख्यं स्याद् द्वितीयकम्॥ ३॥

मन्त्रक्रमं तृतीयं स्याच्चतुर्थं देवताक्रमम्।

ज्ञानक्रमं पञ्चमं स्यात् षष्ठं चर्याक्रमं विदुः॥ ४॥

भावनाक्रममात्रान्यं सप्तमं समुदाहृतम्।

विज्ञानक्रममेवान्यदष्टमं परिकीर्तितम्॥ ५॥

एतत् क्रमाष्टकं सुभ्रु गुरुः स क्रमशोऽखिलम्।

षट्स्रोतसि नियुक्तास्ते गुरवो ह्यधिकारिणः॥ ६॥

तारणेन कुलस्यैते नियुक्ताः सर्वतः क्रमात्।

तथापि तेषां यद्रूपं क्रियया तत् स्वरूपकम् ॥ ७॥

वक्तव्यं तच्छृणुष्वाद्य येन भ्रान्तिर्विनश्यति।

षड्स्रोतसि महाशैव पृथग्वस्तुविनिर्णयम्॥ ८॥

बोद्धव्यं गुरुभेदेन सन्तानक्रमसंस्थितम् ।

ऊर्ध्ववक्त्रः शान्तगोत्रः सृष्टिगोचरवर्जितः॥ ९॥

निराचारः परः शान्तो निरपेक्षो निराकुलः।

वस्तुविज्ञानविदितो विज्ञानाचारगोचरः॥ १०॥

समयाचारनिर्मुक्तः परमार्थावबोधकः।

जातिवर्णपदैर्हीनो अकुलः शिव उत्तमः॥ ११॥

स्वभावस्थः परः शुद्धः परमानंदभैरवः।

तत्राचारक्रमायाता गुरवो ये महेश्वराः ॥ १२ ॥

भैरवास्ते समाख्याताः क्रमविज्ञानपारगाः ।

सर्ववर्णाः सर्वभक्षः सर्वाहाराः सदोदिताः ॥ १३ ॥

एवं मूर्त्तिस्थिता ज्ञेया गुरवः पन्निलात्मज ।

पूर्ववक्रस्य वक्ष्यामि यथा सन्तानसंस्थितिः ॥ १४ ॥

पुरुषश्वेश्वरः व ख पुरुषश्वेश्वरः शक्तिरूपः श्रीसन्ततिस्तथा ।

चतुर्धा भेदभिन्नस्तु ं तु संज्ञाभेदः पृथक् पृथक् ॥ १५ ॥

प्राजापत्या महीपाला ग्रन्थः कायोन वृत्तिकः ।

चतुर्धा सन्ततिर्ज्ञेया तन्त्रेऽस्मिन् भैरवात्मके ॥ १६ ॥

गोत्रमन्त्रेश्वरे सम्यक् शोधिकाश्च चतुर्विधाः ।

चामुण्डा मुण्डमालान्या घण्टारावा चतुर्थिका ॥ १७ ॥

शुद्धं संशुद्धं बुद्धञ्च तथा पाशुपतव्रतम् ।

नग्नव्रतं मुण्डधरं परिव्राड्व्रतमुत्तमम् ॥ १८ ॥

अत्र चर्यादिकं मौद्रं प्रवक्ष्याम्यनुपूर्वशः ।

शुद्धव्रते त्रिमुण्डं स्याद् ब्रह्मविष्णुहरात्मकम् ॥ १९ ॥

पञ्च ब्रह्माद्यनुष्ठानं गायत्र्याद्यभिमन्त्रणम् ।

त्रिसन्ध्यं भस्मना स्नानं समन्त्रं चाश्रमं स्थितम् ॥ २० ॥

गुरुदेवव्रती नित्यं त्रयं नित्यं समर्चयेत् ।

भिक्षान्नमाहरित्वा तु त्रिधा संविभजेत् ततः ॥ २१ ॥

निवेद्य दिव्यं यद्भागं न भक्षेत् किन्तु चोत्सृजेत् ।

जयाश्रयेऽथ लोकेश ग्रहणांशश्रियोगणात् ॥ २२ ॥

प्रविभागव्रतासक्तो लूनकेशोऽङ्गनाम्वरः ।

लोकधर्मी शिवायत्तः सर्वदा चास्थिधारकः ॥ २३ ॥

रक्ताम्बरधरः सम्यग् व्रतयोगाश्रमे रतः ।

स आचार्यः पूर्वभेदे दीक्षाव्याख्यानतत्परः ॥ २४ ॥

न सङ्करं भजेत् तत्र कृत्वाचारक्रियागमम् ।

स्रोतसो दक्षिणस्याथ चर्यासन्ताननिर्णयम् ॥ २५ ॥

प्रवक्ष्यामि समासेन तत्र यत्परिकीर्तितम् ।

रौद्रगोत्रं तदाचार व्रतमार्गविनिर्णयम् ॥ २६ ॥

सन्तानमठिकाभेदं चर्यामन्त्रजपादिकम् ।

मुद्रामन्त्रार्चनं होमं चाराचारविनिर्णयम् ॥ २७ ॥

नैराचारं महाचारं सर्वाचारविवर्जितम् ।

गोचरं व्योमममृतं सर्वगं सर्वभक्षगम् ॥ २८ ॥

सर्वेश्वरं विभुं रौद्रं सर्वागमनिषेवितम् ।

सर्वोत्तमं सर्वगतं सर्वाभाससमन्वितम् ॥ २९ ॥

सर्वागमविधेर्हीनं दक्षिणं व्योमगोचरम् ।

स्वयंभुभैरवं साक्षात् सर्वभक्षं हुताशनम् ॥ ३० ॥

सन्तानमन्त्रं  विज्ञेयं चतुर्धा शृणु तं महत् ।

हंसकामलवेतालं टीटिभान्तं स्थितं पृथक् ॥ ३१ ॥

कङ्कालं  नग्नमुन्मत्तभैरवान्तं घृणीशकम् ।

महावीरव्रतं घोरमन्यत्पाशुपतं च यत् ॥ ३२ ॥

असिधाराव्रतं चात्र विज्ञेयं चाष्टमं नृप ।

मठिका चात्र तै रम्भा महातैरम्बिका परा ॥ ३३ ॥

सारस्वती गह्वरा च तथा वीरवतीति च ।

किराती झर्झरी  नागी दक्षिणे मठिकाष्टकम्  ॥ ३४ ॥

मुद्राष्टकमतो ज्ञेयं देवाभरणकण्ठिका ।

अट्टहासा द्वितीया स्याद् घण्टिरावा तथा स्मृता  ॥ ३५ ॥

खट्वाङ्गिनी तथा मुद्रा भस्मा धारा तथाष्टमी ।

ब्रह्माण्डवक्त्रकुहरब्रह्मपात्ररसामृतम्  ॥ ३ ॥

कपाली चाथ कंकालं कन्दलं चोत्तमोत्तमम् ।

कपालमतिदीप्तोग्रशिरश्चन्द्रकरार्चितम्  ॥ ३७ ॥

तस्य चांतर्गता  गौर्री या जगद्वीजगह्वरा ।

अमा लक्ष्मी प्रमेया च अमाकान्ता सरस्वती ॥ ३८ ॥

सर्वामृतकलाधारं कपालं ब्रह्मतोषकम् ।

पञ्चरत्नविचित्राङ्गं  पञ्चब्रह्मकलेवरम् ॥ ३९ ॥

पञ्चतत्वकलाधारं षडध्वासन सुंदरम् ।

वीरेन्द्र भैरवाधार भव संहारकारक  ॥ ४० ॥

सर्वभूतगणैर्युक्तं महापातकनाशनम् ।

कपालं चार्धकङ्कालं मुद्राराज्ञी जगत्त्रये ॥ ४१ ॥

कपालधारी तद्धक्षी यो वातद्वारकः स्मृतः ।

योऽर्चयेद् बन्द्येद्वाथ् स भवेद् भैरवेश्वरः ॥ ४२ ॥

खट्वाङ्गमुद्रा वक्ष्यामि यथावन्नृपसत्तम ।

खट्वाङ्गं देहकंकालं पुंप्रकृत्यावमर्दनम् ॥ ४३ ॥

सर्वदेवकलाधारं शब्दाधारं कलानगम् ।

व्योमसञ्चारविज्ञानं शशिसूर्यपरिग्रहम् ॥ ४४ ॥

कलाकलङ्ककलिलं कलायौवनभूषितम् ।

भोगापदानसंरूढं बहुभोगिगणावृतम् ॥ ४५ ॥

विश्वकर्त्तारघटितं विश्वकर्मकरं विभुम् ।

विश्वरम्भादिजननी या माया तदधिष्ठितम् ॥ ४६ ॥

मायामयं हि खट्वाङ्गं धारयाम्यहमेव हि ।

खस्थमेव खमध्यस्थं खमध्यं खगतिः खलम् ॥ ४७ ॥

खट्वाङ्गमीदृशं प्रोक्तं भुक्तिमुक्तिप्रदायकम् ।

विकटा नाम या मुद्रा तस्या निर्णयं उच्यते ॥ ४८ ॥

विमर्दितं यया विश्वं जगद् ब्रह्माण्डमण्डलम् ।

भोगैरभोगैर्विविधैः सुखदुःखैः पृथग्विधैः ॥ ४९ ॥

लाभालाभैश्च संत्रासैः पशुपाशैः पुरोदितैः ।

विकारावयवैः सर्वैः स्थिता मुद्रा करालिनी ॥ ५०

कङ्कालभैरवच्सृष्टी  ब्रह्माण्डाशेषमर्दकी ।

कङ्कालिनी महाकाली विकटा वामलोचना ॥ ५१ ॥

करालाबद्धसम्बद्धा श्वासने सा विदुर्धराम् ।

घोरा तु निसृतं घोरं तेजोराशिं ं महाबलम् ॥ ५२ ॥

संक्षोभ्य जगदेतत्तु मुद्रां बद्ध्वा तु संहरेत् ।

बन्धमात्रा ग्रहाः सर्वे पलायन्ति दिशो दश ॥ ५३ ॥

विश्वयोनिमतो वक्ष्ये ययेदं मुद्रितं जगत् ।

विश्वाय जननी योनिः स्वयं देवी सरस्वती ॥ ५४ ॥

गर्भिणी  गर्भदरणी  वामा  वागीश्वरी शिवा ।

नित्योत्सवा निष्प्रपञ्चा सर्वप्राणिष्ववस्थिता ॥ ५५ ॥

आनन्दामृतसंपूर्णा सर्वार्त्तिहरणी शुभा ।

अलक्ष्मी पापदलनी भोगसम्जननी स्मृता ॥ ५६ ॥

अथ पञ्चमुखी संहरेत्  पाशा  तस्या वक्ष्यामि निर्णयम् ।

ऊर्ध्वप्राग्दक्षवामाख्यपश्चिमाननसंस्थितैः ॥ ५७ ॥

भैरवस्याथ भैरव्या लोलीभूतास्थितैवसा ।

मुद्रा पञ्चमुखी नाम साक्षान् मायातनुत्रकम् ॥ ५८ ॥

पुष्टिसौभाग्यजननी मेधास्मृतिविवर्धनी ।

दुर्गसंतारणी दुर्गा दारिद्र्यदमनी शिवा ॥ ५९ ॥

अमृतेति समाख्याता जगदाप्यायनोद्यता ।
सुधाकामदुघा  ज्ञेया यया मक्षादिकं सदा ॥ ६० ॥
 सर्वं सुधारसापूर्णं स्यान्मण्डलगतं प्रिये ।
यया प्रवृद्धया सम्यक् त्रैलोक्यं तृप्यति क्षणात् ॥ ६१ ॥
यस्मान्मन्त्रगणाःसर्वे ध्वांक्षरूपाः सदैव हि ।
स्रग्गन्धधूपाभरणपानाहारादिलंपटा ः ॥ ६२ ॥
तस्मादियं सदा बद्धा तृप्यते मन्त्रवर्गकम् ।
सर्वसंभारभरणाद् भैरवो विगतामयः ॥ ६३ ॥
महायागप्रियो नित्यं पूजनीयः सदा बुधैः ।
भुक्तिमुक्तिप्रदं दिव्यं कथं भक्त्या न सेव्यते ॥ ६४ ॥
यस्य देवातिदेवस्य जगत् सर्वं वशे स्थितम् ।
तमघोरं भैरवाख्यं भरणाद् भैरवं स्मृतम् ॥ ६५ ॥
तत्स्रोतसि यदा सक्तस्तदासौदक्षिणः सदा ।
सगुरुर्देवि सुमहान् प्रायश्चित्तादिकं न हि ॥ ६६ ॥
तस्यास्ति तन्त्रमर्यादा मनुजन्म यदा स्थितम् ।
अयोग्यस्य यदा ज्ञानं मन्त्रदीक्षाप्रकाशनम् ॥ ६७ ॥
मुद्रामण्डलचर्यादिक्रियाकालगुणागुणम् ।
प्रदर्शयत्यसौयस्माद् व्रतविज्ञानसन्ततिम् ॥ ६८ ॥
गृहीत्वा तत् पुनः पश्चात् वप्रभिन्नं प्रवर्तते ।

तदा तमाहरेत् तस्य प्रायश्चित्तं स्वयं स्मृतम् ॥ ६९ ॥

अस्या परार्द्धकुपितः शापयेद् वाथ शिष्यकम् ।

शासनीयं तदा शिष्यमशिष्यं नैव शासयेत् ॥ ७० ॥

अशुचिर्भिन्नमर्यादः सर्वावस्थो गुरुर्यदि ।

नावमान्यस्तु स यतो दैशिको वीरराड् स्वयम् ॥ ७१ ॥

स्वयम्भुर्भगवान् रुद्रः साक्षात् श्रीकण्ठनायकः ।

लोकानुग्रहकृद् वीरो मानवीं तनुमास्थितः ॥ ७२ ॥

रत्नादिकं तेन दत्तं तदा ग्राह्यं सदानघैः ।

तदवज्ञा च वादश्च गुर्वन्तरपरिग्रहम् ॥ ७३ ॥

आज्ञां न लङ्घयेत् तस्य चायां वा न कदाचन ।

न प्रतिज्ञा गुरोरग्रे वाग्दण्डं वर्जयेत् सदा ॥ ७४ ॥

गुरोश्चालीकनिर्बन्धं  रक्षणीयं प्रयत्नतः ।

मुद्राष्टकसमाचारं गुर्वाम्नायं गुरुक्रमम् ॥ ७५ ॥

दक्षिणस्त्रोतसो भिन्नं क्रियायोगमुदाहृतम् ।

मुद्रादिचर्याभेदश्च स्त्रोतस्यस्मिन् सुविस्तरः ॥ ७६ ॥

बहुत्वान्न प्रतन्येत ग्रन्थगौरवभीरुतः  ।

पञ्चस्त्रोतसि शैवेऽत्र विस्तारः प्राक्प्राचोदेतः  ॥ ७७ ॥

वामपश्चिमवक्त्राभ्यां विस्तारः प्रोच्यतेऽधुना ।

हम्समन्त्रादितुर्यञ्च शिवोऽयमजमव्ययम् ॥ ७८ ॥

वैकुण्ठगोत्रचरणमपरस्य गणेश्वरम्।

पञ्चसन्तानभेदानि ज्ञानान्यत्र क्रमेण हि॥ ७९॥

वामे शाखाः परिज्ञेयाश्चत्वारिंशद्भूतैर्युताः ।

मठिका दश विज्ञेयाश्चतुर्धा सन्ततिक्रमः॥ ८०॥

धृतराष्ट्रा ः बकाः हंसाः गोपालान्ताः प्रकीर्तिताः।

गौरीव्रतं चण्डशुद्धिर्बैडालं नग्नपूजितम्॥ ८१॥

कुचैलं मलिनं नाम बीभत्सं चापरं स्मृतम्।

किङ्किणीचीरवसनं साधकाख्यं महाव्रतम्॥ ८२॥

डामरं सोमसिद्धान्तं तथा कालमुखं व्रतम्।

डम्बरं शृंखलावद्धं केशश्मश्रुविलुञ्चनम्॥ ८३॥

एकदण्डैकपादाख्यं मौसलं मौसलीव्रतम्।

देव्या व्रतञ्च कङ्कालं मन्त्रिमन्त्रं व्रतोत्तमम्॥ ८४॥

भीमं गुह्यं तथा मौनं करालं भीषणव्रतम्।

वेलाव्रतं तथा चर्या व्रताचारमथापरम्॥ ८५॥

सुरावञ्च शिखारावं वेतालं तालकव्रतम्।

उन्मत्तमसिधाराख्यं महाकङ्कालझर्झरम् ॥ ८६॥

नृत्तं गीतं तथा तालं वीणाव्रतमनुत्तमम्।

हिंसाव्रतमक्षमालां पीतवासव्रतं जपम्॥ ८७॥

वेलाहारं वानप्रस्थं तीक्ष्णं स्नानाग्निपूजनम्।

सत्यव्रतं तथा देव गुरुभक्तिदृढव्रतम् ॥ ८८ ॥

अस्तेयत्वमदम्भित्वमहिंसाव्रतमुत्तमम ।

अकार्यण्यमहिंसाख्यं चत्वारिंशद्व्रतोत्तमम् ॥ ८९ ॥

गम्भीरमठिका गौरी बगला त्रायणी मता ।

वामावर्ता शिखावर्ता जटिला त्र्यन्तराष्टमी ॥ ९० ॥

तते चोत्तरतौ रंभा शाल्मली दशमी स्मृता ।

महामुण्डकपालाख्या खट्वाङ्गं विकटाकटा ॥ ९१ ॥

विश्वयोनिः पञ्चमुखी ह्यमृता च करङ्किणी ।

रावा सुरावा वेताली घण्टा डामरिका जटा ॥ ९२ ॥

मुण्डी दण्डी कबन्धी च पाशिनी गदिनी ध्वजी ।

खड्गपट्टिशशूलाङ्कविस्मया चामराधरा ः ॥ ९३ ॥

प्रसादाभयवृत्ताख्यानङ्गमुद्रा वराङ्गना ।

सदाचारप्रयोगेण मध्यमाधमचुष्मका ॥ ९४ ॥

गुरवो गूढसर्वस्वा देवीमेलापकारिणः ।

पश्चिमे ज्योतिगम्भीरं सन्तानचरणं मठम् ॥ ९५ ॥

मठिका माठरी रौद्री व रौद्रा शबरी सुमुखीगणाः ।

गणेश्वरी वरारम्भा गम्भीरा गह्वरी नगा ॥ ९६ ॥

हरहासा विलासा च गाङ्गेया मातृनन्दनी ।

त्रिपञ्चमठिका गुप्ता सुगुप्ता प्रकटोत्कटा ॥ ९७ ॥

चरणाश्च चतुःषष्टिः प्रतिपत्त्येकगोचराः ।

आचारानन्तर्यन्तं तेभ्यो भेदं दशोत्तरम् ॥ ९८ ॥

तदुत्तरैः समाचारमनङ्वान्न विकथ्यते ।

शैवमत्यन्तगहनं भेदैर्भिन्नं पृथक् पृथक् ॥ ९९ ॥

अष्टाविंशति ये तन्त्रास्तेषां भेदमनन्तकम् ।

विशेषश्चविशेषश्च द्वैताद्वैतविमिश्रितः ॥ १०० ॥

सक्रियं निष्क्रियं चान्यद् द्वयोर्हीनमहीनकम् ।

श्रुतं दैत्येन्द्रमरुतैःसिद्धगन्धर्वकिन्नरैः ॥ १०१ ॥

ऋषिभिर्मुनिभिर्नागैर्गुह्यकैरपि तत् स्वधा ।

ब्रह्मविष्णवीन्द्रवसुभिर्येन येनावधारितम् ॥ १०२ ॥

पञ्चस्त्रोतात्मकं शैवं तेन तेनावतारितम् ।

बहुभेदमतो ज्ञेयं शृणु षष्ठं यथास्थितम् ॥ १०३ ॥

यदा चारान्तरे लीनं कालानलपदान्तरे ।

प्रसरं शाम्भवं सम्यग् दारयित्वा तु षोडश ॥ १०४ ॥

हठाद् देव तदा ज्ञेयो हठकेशो महाबलः ।

प्रभुः सर्वस्य देवोऽसौ कुलकौलविशारदः ॥ १०५ ॥

रहस्यग्राममखिलं तस्मात् सर्वमिहोदितम् ।

मन्त्रादिमार्गभेदेन यत्किञ्चित् समुदाहृतम् ॥ १०६ ॥

तदस्मात् प्रभवेद् देवि वक्रात् पातालनायकः ।

अस्मिन् स्त्रोतसि चण्डोग्रसन्तानः समवस्थितः ॥ १०७ ॥

मठिका षोडश ज्ञेया नामं तासां शृणु पृथक् ।

कलाख्या चाथ वैरिञ्ची सर्वाधारा भवांतिका ॥ १०८ ॥

संकोचा तुर्यसंज्ञान्या षडश्रा वह्निकुण्डला ।

नाभी संजीवनी चान्या वज्राख्या च घटोदरी ॥ १०९ ॥

लोकाख्या लम्बिका चान्या तथा विद्या कुलेशया ।

विन्दुचित्रा शक्तिगर्भा मठिकाःषोडश स्मृताः ॥ ११० ॥

आसां वीर्यानुवादेन ये पृथक् सूरयः स्थिताः ।

तन्मुद्राधारिणः सर्वे तद्भूतास्ते सदामृताः ॥ १११ ॥

कङ्काली घर्घरा चण्डारावा संकोचमन्थरी ।

बिडाली लाकिनी कूर्मा वक्रावर्ता शिवानना ॥ ११२ ॥

पञ्चाद्या वृत्तिदलनी पातालविजया परा ।

करङ्किणी खेचरी च मुद्रा ह्येतास्तु षोडश ॥ ११३ ॥

सर्वसिद्धिप्रदा मुख्या सन्तानेऽस्मिन् महाबले ।

व्रताः षोडश एवोक्ताः शृणु तेषां विनिर्णयम् ॥ ११४ ॥

नित्यानन्दो योगवज्रो शिरश्छेदो भयानकः ।

निराचारोऽसिधारश्च चण्डाख्यो द्वयनायकः ॥ ११५ ॥

उन्मत्तश्च कुचैलश्च मिथ्यालापी च गह्वरः ।

महाहास्यो महागेयो महागौरीव्रतः परः ॥ ११६ ॥

प्रशान्तचण्डौ विज्ञेयौ व्रताः षोडश नामतः ।

एवं प्रभेदतो ज्ञेयाः सन्तानेऽस्मिन् सुरार्चिते ॥ ११७ ॥

तन्नाम्नाङ्कितसन्ताने मन्त्रो ज्ञेयः सदैव हि ।

सदा महामन्त्ररतैरत्र व्यक्तिः प्रकीर्तिताः ॥ ११८ ॥

योगभूत्यो महाकान्ता विज्ञानज्ञानशासनाः ।

नित्यमन्त्रवरारोहे कृतादिप्रविचारितैः ॥ ११९ ॥

स्रोतसो भेदभिन्नस्य सन्तानानेकसंख्यया ।

षट्कस्य सम्यग्विज्ञेया बह्वागमविभेदतः ॥ १२० ॥

एकः शिवो महामूलं निरुपाधिरनन्तकः ।

विज्ञानज्ञानसंपूर्णः सर्वाकारस्तु मन्थरः ॥ १२१ ॥

निस्तरङ्गार्णवाकारः परितृप्तः परापरः ।

सुशान्तमूर्त्तिः सर्वात्मा निर्वाणेशोऽतिनिर्मलः ॥ १२२ ॥

तस्य शक्तिः स्वकं वीर्यं चिद्धामानंदगोचरम् ।

व्यक्तं व्यक्तिविभेदेन स्पन्दनानन्दसुन्दरम् ॥ १२३ ॥

तद्धर्मधर्मिणी ज्ञेया शक्तिराद्या शिवस्य सा ।

निर्मला विरजा शुद्धा सर्वप्रचुरभास्वरा ॥ १२४ ॥

खड्गस्य धारा वह्नेर्वा दाहतापौ यथा स्थितौ ।

तथा सा तस्य देवस्य वर्णव्यक्त्युन्मुखी स्थितिः ॥ १२५ ॥

वाक्चतुष्टयसङ्क्रान्ता परमा बिन्दुभैरवी ।

षोढा प्रसरते व्यक्तं विगलद्वाहवाहनी ॥ १२६ ॥

व्यक्ताव्यक्तविभेदेन शुद्धसन्ताननिर्मला ।

ततः स्रोतांसि षड् सम्यग् व्यक्तानि स्थूलभेदतः ॥ १२७ ॥

परः सूक्ष्मदृशा भाति विचारद्वारभेदतः ।

मन्त्रमुद्रा तथा वर्णो वीर्यमण्डलचक्रके ॥ १२८ ॥

परदेहमहाराशिशक्तिविश्वस्वरूपतः ।

व्यक्तान्याधारभेदेन विधानानि जयद्रथ ॥ १२९ ॥

तत्र ये संस्थिताः सम्यग् गुरुपूर्वक्रमेण तु ।

आयातायामयोगेन सन्तानक्रमयोगतः ॥ १३० ॥

अभेदमन्त्रविज्ञेया प्रतिस्रोतोविभेदगम् ।

सम्यगाचारभेदेन एकमूलत्वयोगतः ॥ १३१ ॥

वस्तुतो भेदमात्रैव नास्ति पन्निलनन्दन ।

एकत्वाद् देहमूलत्वात् प्रसरैकप्रयोगतः ॥ १३२ ॥

व्यक्तत्वाद् भेदजाद् तस्य न भेदो विद्यते क्वचित् ।

क्रियानन्तर्ययोगोऽत्र विज्ञेयः पारमार्थिकः ॥ १३३ ॥

अथवानुक्रमेणैव गुरुणां सन्ततिक्रमः ।

सदाचारगतिस्तत्र संस्थिता ते वनगात्मजे ॥ १३४ ॥

तदा ते गुरवो लोके व्यक्तास्वक्रमभेदतः ।

एषां मूलः शिवश्चैव शक्तिरेकैव सर्वदा ॥ १३५ ॥

द्वयोरभेद विज्ञानादद्वयोः भेदनित्यगः व ख –शः।

नास्ति भेदविचारोऽत्र यदा सिद्धतमः स्थितः॥ १३६॥

प्रसराणामनन्तत्वात् परिसंख्या न विद्यते।

शाखारूपास्तु विज्ञेया व्यक्तिहेतुविचित्रता ॥ १३७॥

अत्र षड्स्रोतसो भिन्ना या शक्तिः पीठसूत्रगा ः।

सा पूर्वं विस्तरेणात्र वर्णिता नाधुनोच्यते॥ १३८॥

इदानीं भेदजा तस्य स्रोतोभिन्नस्य साम्प्रतम्।

रहस्ययुक्त्या वक्ष्यामि भेदसन्ततिमेति हि॥ १३९॥

पूर्वापरं समाचारं बहु भेदगतं हि यत् ।

ऊर्ध्वे व ऊर्ध्वि व्योमाभिधानं स्याद् आचार ं व्यक्तिमागतम्॥ १४०॥

नवात्मभेदं तत्संख्या तत्त्वं मन्त्रस्थितं महत्।

तदध्वरं तदाचारं द्वैताद्वैतविमिश्रितम्॥ १४१॥

पञ्चस्रोतक्रियामार्गे निष्कुरुस्व व्यवस्थया।

बोद्धव्यं क्रूरवस्थं तद् सर्वद्वैतक्रियास्पदम्॥ १४२॥

सर्वदक्षिणमद्वैतं द्वैताद्वैतं च वामकम्।

सत्त्वं रजस्तमश्चैव गुणसृष्टेर्व्यवस्थया ॥ १४३॥

पश्चिमं गुणपूर्वं स्यात् तत्र यत् सर्वमाश्रितम्।

कैवल्यज्ञानसंमोहमूर्ध्ववक्त्रे व्यवस्थितम्॥ १४४॥

अतिमार्गमनन्तत्वं हाटकेशव्यवस्थितम् ।

व्रतानुष्ठाननित्याद्यैः क्रियाचारक्रमेण तु ॥ १४५ ॥

तेन मुक्तिप्रदं ज्ञेयं सर्वस्य जगतः सदा ।

पापपाशविशां वाद्यं वीराचारमदान्तिकम् ॥ १४६ ॥

दक्षिणं भुक्तिमुक्तीनां पदमेव सदाद्वयम् ।

अणिमा महिमा चान्या लघिमा प्राप्तिरेव च ॥ १४७ ॥

प्राकाम्यमीशिता ज्ञेया वशित्वं चापरं स्मृतम् ।

यत्र कामावशायित्वं वामवक्रव्यवस्थितम् ॥ १४८ ॥

विषभूतग्रहोन्मादमातृगुह्यकरक्षसाम् ।

नाशयत्यपि वादस्तु सिद्धिर्यच्चति चाद्वयम् ॥ १४९ ॥

सक्षेत्रौषधिबलखन्यधा तु समूलिकम् ।

मन्त्रवादाप्तपर्यन्तमष्टधा वादसिद्धिकृत् ॥ १५० ॥

पश्चिमं वक्रमतुलं गुरुपर्वक्रमेण हि ।

सर्वसिद्धिप्रदं चोर्ध्वं क्रियाचारसमाकुलम् ॥ १५१ ॥

पातालखड्गगुटिका रोचनाञ्जनपादुका ।

वेतालमेलकान्ताश्च सिद्धयोर्हाटकेश्वरे ॥ १५२ ॥

शक्तेरूर्ध्वं समाख्यातं परधामीश्वरम् ।

सा शिखा परमा प्रोक्ता सन्तानव्यक्तिसाधनी ॥ १५३ ॥

पूर्वे सदाशिवं ज्ञेयं शिवशास्त्रविचक्षणैः ।

दक्षिणे घोरसंज्ञञ्च रुद्रत्वममलं विदुः ॥ १५४ ॥

गणं वामे विजानीयान्नियतं पन्निलात्मज ।

ततः परतरं ज्ञेयं पश्चिमे निर्मलं मणिम् ॥ १५५ ॥

श्रीपादं प्रभुमानन्दं योगशक्तिक्रमेण तु ।

हाटकाख्यं सदा ज्ञेयं मिश्रं वामेऽपि दक्षिणे ॥ १५६ ॥

क्वचिदन्येष्वविज्ञेयं कुलशासनतत्परैः ।

घरपल्लिक्रमं तत्र समासादुपवर्णितम् ॥ १५७ ॥

चतुर्धा शक्तिपूर्वं स्यादादितो गुरुपर्वगम् ।

शिवसंज्ञं तथा ज्ञेयं तुर्यधा पारमेश्वरम् ॥ १५८ ॥

भैरवे तु यथा ज्ञेयं रुद्रान्तं सर्वदा प्रिये ।

चतुर्धा वामगा ज्ञेया गणसंज्ञा विशेषतः ॥ १५९ ॥

षोढा तु षष्ठैः पूर्वोक्ता : एवं विंशति कीर्तिता : ।

अत्र प्रक्रमभेदेन विचार्याचारभेदतः ॥ १६० ॥

अव्यक्तक्रमभेदोऽत्र विज्ञेयः पारमेश्वरे ।

प्रक्रमेण क्वचिज्ज्ञेयं सिद्धान्तादिषु सर्वदा ॥ १६१ ॥

तन्त्रेषु सर्वदा सिद्धिं विशेषे ज्ञातिकीर्तितः ।

विद्यापीठेऽपि विज्ञेयो विधिमेतन्महार्थद ॥ १६२ ॥

एवं भेदप्रभेदोऽपि येन ज्ञातं समन्वयम् ।

सगुरुः पाशहा ज्ञेयो मायामायाविवर्जितः ॥ १६३ ॥

ऊर्ध्ववक्त्रे षोडशधा मन्त्रोच्चारक्रमः स्मृतः ।

मध्यनाडीक्रमेणैव  प्रविभज्य शृणुष्व तत् ॥ १६४ ॥

अकारश्च उकारश्च मकारश्चापि बिन्दुकम् ।

चन्द्रचण्डनिरोधाख्यनादनादान्तशक्तिगा ॥ १६५ ॥

व्यापिनी समनाख्यश्च तथान्यश्चोन्मनः परः ।

गुरुवक्रं प्रशान्ताख्यं विषुवं स्पर्शसंज्ञकम् ॥ १६६ ॥

विसर्गं षोडशं ज्ञेयं शिखाभेदव्यवस्थया ।

एतद् रहस्यमन्त्रोक्तं क्रियाचारगुरोःस्थितः ॥ १६७ ॥

पूर्वे बिन्दुः समाख्यातश्चतुर्धा व्यक्तिभेदतः ।

निवृत्ताख्यः प्रतिष्ठाख्यो विद्याख्यः शान्तिगोऽपरः ॥ १६८ ॥

चन्द्रार्धमध्यगो ज्ञेयः प्रस्फुरत्किरणाकुलः ।

दशवर्णः समाख्यातः शुक्लादिक्रमभेदतः ॥ १६९ ॥

पञ्चधा पतिभेदेन ग्रन्थिभेदादपि स्थितः ।

ब्रह्मविष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः ॥ १७० ॥

पृथिव्यापस्तथा तेजो वायुराकाशमेव च ।

भूताश्च पतयः प्रोक्ता ग्रन्थयः शृणु सांप्रतम् ॥ १७१ ॥

हठब्रह्म तथा बिन्दुः कण्ठताल्वथ बिद्रुके ।

विद्यादावर्तघोरेण भेद्यं लभ्येत तत्पदम् ॥ १७२ ॥

अघोरे घोरसन्देहःषट्चक्रे क्रमपद्धतिः ।

क्रमव्युत्क्रमयोगोऽत्र त्रिनाडीपरिपेलवः ॥ १७३ ॥

करणावलिविश्रान्त्या विद्युदाघातयोगतः ।

तद्योगमाप्नुयाद् योगी तद्वत् सान्ते सदाद्वयी ॥ १७४ ॥

वामेऽपि पञ्चधा ज्ञेयं तस्य सम्यङ् निशामय ।

पटः प्रकाशपङ्क्तिश्च चतुरश्चात्र चतुर्थकः ॥ १७५ ॥

अलंग्रासः पञ्चमः स्याद् वृत्तिभेदोत्र कीर्त्यते ।

पटापत्रान्ययोगेन त्रिचतुर्दशधा स्मृतः ॥ १७६ ॥

तत् प्रवाहविकासाभ्यां स्थितिव्यक्तिप्रभेदतः ।

अन्तश्चक्रस्यसंयोगाच्चक्रैर्वैभिन्नसंशयः ॥ १७७ ॥

प्रकाशः पञ्चधा ज्ञेयस्तथान्यश्चाष्टधा स्मृतः ।

पश्चधा शिवशकत्याख्यभेदाद् भैरवभेदतः ॥ १७८ ॥

तद् ब्रूहिरूपाद् विज्ञेयो महाक्रमविचक्षणैः ।

वसुधा वसुयोगेन पररश्मिविराजितम् ॥ १७९ ॥

महाभैरवयोगेन व्यक्ततामेति सर्वदा ।

आनुलोम्याच्च पञ्चानां षण्णामथसमस्तके ॥ १८० ॥

व्यक्तिरुद्योगभेदेन हेलाप्रेंख्य विचारणे ।

पङ्क्तिरत्र समुद्दिष्टा भूमिकाक्रमणैव हि ॥ १८१ ॥

भूमेर्व्यक्तिस्त्रिधा प्रोक्ता कङ्कालाकारवेदनात् ।

विलापाद् व्यक्तियोगाच्च भैरवाकारवृत्तितः ॥ १८२ ॥

मायाङ्कुशप्रयोगेन सन्ताने व्यक्तिमेति हि ।

अलंग्रामे पुरोक्तं स्याद् अष्टधा पञ्चधा च यत्॥ १८३॥

षोढा चतुर्दशाख्येन तन्त्रसंहार वृत्तितः।

स्फुरच्च भैरवव्यक्ता तदवष्टम्भयोगतः॥ १८४॥

तद्व्यक्तिमेति सहसां कुञ्चिकोद्घाटमन्त्रितम् ।

पश्चिमे ज्ञत्वकर्तृत्वव्यक्तिचारविभेदतः॥ १८५॥

स्थितिप्रत्यासयोगेन षड्भूमिप्रविभागतः।

त्रिशून्यगतिसर्वस्य बाह्याभ्यन्तरविक्रमात्॥ १८६॥

तत्र व्यक्तिमुपायातं मध्योभयविचारतः।

यातायातौ महाघोरौ चन्द्रसूर्यविभेदतः ॥ १८७॥

तत्र ज्ञेयौ सदा सम्यग् विषुवत्क्रममत्र  च।

पातालवक्त्रे व्यस्तास्ते भूमिभेदात् पृथक् पृथक्॥ १८८॥

कालाग्निदंष्ट्राद् योगोऽत्र चन्द्रदंष्ट्राविलासकम्।

वज्रभेदक्रमं चात्र महार्गलविचारणम्॥ १८९॥

समङ्गमङ्गलं चात्र अवबोधो व्यवस्थितः।

मुण्डत्वं गण्डधानात् त्रिपञ्चप्रसवता तथा॥ १९०॥

क्रमभेदविचारेण तत् सर्वत्र व्यवस्थितम्।

गुरुपर्वक्रमायातं रहस्यं परमाद्भुतम्॥ १९१॥

स्रोतःसु षट् सुविज्ञेयं सन्तानक्रमभेदतः।

दुष्प्रापमेतद् विज्ञेयं सिद्धवीरगणस्य च॥ १९२॥

गुरुवक्त्राच्च लभ्येत गुरुरेवात्र कारणम् ।

सन्ताने चोपदेशे च सचराचरसंगतौ संगतौ ॥ १९३ ॥

गुरुरेव शिवः साक्षान् मानवी मूर्त्तिमास्थितः ।

उत्तारयत्यणुं सम्यगस्मात् संसारसागरात् ॥ १९४ ॥

निर्वाणविलसद्योगयोग्यत्वापादनक्षमः ।

तस्मात् स बन्धुः स पिता गतिः सा पारमेश्वरी ॥ १९५ ॥

कोऽन्योऽस्ति सदृशस्तेन जगत्यस्मिञ्चराचरे ।

तदुपायं न विद्येत येन तस्यानृणी भवेत् ॥ १९६ ॥

ब्रह्माण्डं हेमसंपूर्णं रसायनविपूरितम् ।

यद्यसौ गुरवे दद्यात् तदप्यनृणता न हि ॥ १९७ ॥

स शिवः सा भवेच्चक्तिर्देवो भैरवः स्मृतः ।

सा देवी परमा काली गुरुर्मन्त्रमहेश्वरः ॥ १९८ ॥

बिन्दुचक्रपथांतस्थो व्यक्तिचारप्रभेदतः ।

सर्वाचारी क्रमज्ञानी स गुरुर्भैरवागमे ॥ १९९ ॥

यस्य भावानभिव्यक्ता विचारगतिगोचरे ।

चण्डार्गलपदान्तस्थः स गुरुर्भैरवागमे ॥ २०० ॥

षट्स्रोतः स सदा ज्ञाता व्यक्तिचारक्रमागते ।

शास्त्राचारक्रमेणैव स गुरुर्भैरवागमे ॥ २०१ ॥

प्रतिस्रोतसि या व्यक्तिः सरहस्यार्थवेदकः ।

यस्तु मूर्त्यन्तरावासी स गुरुर्भैरवागमे ॥ २०२ ॥

यस्य तृणसमं वित्तं चित्तं शैलेन्द्रसन्निभम् ।

सर्वारम्भपरित्यागी स गुरुर्भैरवागमे ॥ २०३ ॥

यस्य वक्ता चले चित्ते चतुर्दन्ते भयावहे ।

सदा वसतिरेवान्तःस गुरुर्भैरवागमे ॥ २०४ ॥

यस्य भूतान्तरस्थायि ग्राह्यभावरतो मनः ।

ग्राहकस्थः सदा सम्यक् स गुरुर्भैरवागमे ॥ २०५ ॥

यस्यान्तरे सदा बाह्ये मध्ये वृतिषु भूमिषु ।

निश्चलत्वं स्थिरत्वं च स गुरुर्भैरवागमे ॥ २०६ ॥

यस्य सर्वविकल्पान्तं स्फुरत्समुद्भवः ।

निर्विकल्पतया सम्यक् स गुरुर्भैरवागमे ॥ २०७ ॥

यस्य चक्रस्थितिर्व्यक्ता लयालयविभेदतः ।

महालयव्यवस्थानात् स गुरुर्भैरवागमे ॥ २०८ ॥

पञ्चपञ्चार्थविद् वीरः पञ्चपञ्चार्थपारगः ।

पञ्चोदयी पञ्चरामी स गुरुर्भैरवागमे ॥ २०९ ॥

पञ्चान्तिमः पञ्चवपुः पञ्चाचारविराजितः ।

पञ्चार्थविद् गुहावासी स गुरुर्भैरवागमे ॥ २१० ॥

पञ्चधारी पञ्चहास्यः सदापञ्चोत्कटो हि यः ।

यं यं मुद्राधरो नित्यं स गुरुर्भैरवागमे ॥ २११ ॥

षट्चक्री सत्वरारुढः षट्स्रोतः षड् विलापकः ।

षड्गर्भः षड्वपुर्भोक्ता स गुरुर्भैरवागमे ॥ २१२ ॥

षट्चक्रवित्तदन्तस्थो षड्व्योमाचारसंस्थितः ।

षड्जलेशो कलाव्यापी स गुरुर्भैरवागमे ॥ २१३ ॥

षट्स्रोतविच्चषट्पादवित् षोढा पूरणात्मकः ।

षडाश्रमान्तरस्थो यः स गुरुर्भैरवागमे ॥ २१४ ॥

सप्तसप्तिलयान्तस्थः सप्तसप्तिविचारकः ।

सप्तरन्ध्रगतिव्यापी स गुरुर्भैरवागमे ॥ २१५ ॥

सप्तार्चिर्मध्यसंस्थायी सप्ताचिर्गतिरोधकः ।

सप्तवाहगमारूढः स गुरुर्भैरवागमे ॥ २१६ ॥

सप्तसिन्धुवहे मार्गे सप्तसङ्घट्टसुन्दरे ।

संस्थितिर्यस्य नियतं स गुरुर्भैरवागमे ॥ २१७ ॥

अष्टापदैर्वाष्टगमी सत्ता चाष्टसु सर्वदा ।

अष्टाष्टकगतिव्यापी स गुरुर्भैरवागमे ॥ २१८ ॥

अष्टानामष्टधा रूढाः पदव्यक्तिक्रमेण यः ।

अष्टधा स्फुरते साधु ः स गुरुर्भैरवागमे ॥ २१९ ॥

नवचक्रवरान्तस्थो नवनाभः सुनाभिगः ।

नवानवतिगर्भास्यः स गुरुर्भैरवागमे ॥ २२० ॥

नवद्वारां नवान्तस्थो नवसंचारनिर्भरः ।

नवतत्त्वेश्वरो यो वै स गुरुर्भैरवागमे ॥ २२१ ॥

नवान्तगो नवारूढो नवरत्नकृतश्रमी ।

नववीरकृताटोपो स गुरुर्भैरवागमे ॥ २२२ ॥

दशधा दशसन्धानविचित्ररचनोल्वणः ।

दशभूमिपदान्तस्थः स गुरुर्भैरवागमे ॥ २२३ ॥

दशकौलेश्वरो धीमान् दशवित्कुलभैरवः ।

दशाश्वमेधमध्यस्थ ः स गुरुर्भैरवागमे ॥ २२४ ॥

एकादशकुलेशानो रुद्रैकादशविग्रही ।

एकादशान्तविद् वीरः स गुरुर्भैरवागमे ॥ २२५ ॥

एकादशेन्द्रियजयी दशैकप्रसरस्थितः ।

एकादशाखण्डिताङ्गः स गुरुर्भैरवागमे ॥ २२६ ॥

द्वादशान्ते द्वादशधा प्रतिस्थानविभेदतः ।

द्वादशस्वरचक्रेशः स गुरुर्भैरवागमे ॥ २२७ ॥

द्वादशात्मा विचारेण द्वादशग्रन्थिगोचरे ।

द्वादशार्क क्रमान्तस्थः स गुरुर्भैरवागमे ॥ २२८ ॥

त्रयोदशगुहावासी त्रयोदशसु चर्चितः ।

त्रयोदशान्तरज्ञो यः स गुरुर्भैरवागमे ॥ २२९ ॥

त्रयोदशविधा यस्य द्विधा नास्ति त्रयोदश ।

तदतीतस्तदन्तस्थः गुरुर्भैरवागमे ॥ २३० ॥

चतुर्दशपदान्तस्थश्चतुर्दशविराजितः ।

चतुर्दशविहीनो यः स गुरुर्भैरवागमे ॥ २३१ ॥

यच्चतुर्दशभङ्गिस्थं तन्मध्यप्रविकासकः ।

चतुर्दशात्मविज्ञानी स गुरुर्भैरवागमे ॥ २३२ ॥

यः पञ्चदशसंस्थायी त्रिधा पञ्चदशात्मकः ।

दशपञ्चतिथिर्भोक्ता स गुरुर्भैरवागमे ॥ २३३ ॥

षोडशाधारचक्रेशः षोडशस्वरपालकः ।

षोडशान्तकलाधारी स गुरुर्भैरवागमे ॥ २३४ ॥

सप्तादशान्तरालीनः सप्तादशपदोज्झितः ।

सप्तादशान्तगो यस्तु स गुरुर्भैरवागमे ॥ २३५ ॥

एकाकी ह्येकविन्नित्यं यश्चैकपदनायकः ।

एकाक्षरैकचक्रस्थः स गुरुर्भैरवागमे ॥ २३६ ॥

द्वन्द्वयुद्धी द्वन्द्वचारी द्वयोरन्तर्गतः सदा ।

द्विपदोज्झितमार्गस्थः स गुरुर्भैरवागमे ॥ २३७ ॥

त्रिस्थानवित् त्रिलक्षस्थत्रिव्योमान्तरचारकः ।

त्रिनाडीचक्रकुण्डस्थः स गुरुर्भैरवागमे ॥ २३८ ॥

चतुर्धा क्रमविस्फारश्चतुर्धा सन्ततिः सदा ।

चतुर्धा क्रोधचण्डो यः स गुरुर्भैरवागमे ॥ २३९ ॥

अवधूतो निराचारः सर्वाचारान्तरस्थितः ।

आचारसन्ततेर्ज्ञानी स आचार्यः प्रकीर्तितः ॥ २४० ॥

षोढामार्गविभेदेन व्यवहारश्च शाङ्करः ।

तन्मार्गदैशिको यस्तु सनित्यं दैशिकः स्मृतः ॥ २४१ ॥

गुरुरेकस्त्रिधा पूज्यो यथादेवस्तु भैरवः ।

स बन्धुः स प्रभुः स्वामी स दाता स च पालकः ॥ २४२ ॥

स उद्धर्त्ता भवागाधादपाराच्चातिदुस्तरात् ।

स ब्रह्मा स च वै विष्णुः स रुद्रः स च ईश्वरः ॥ २४३ ॥

स देवदेवो विज्ञेयः सादाख्यः परमेश्वरः ।

स भैरवः सुषुम्नोऽसौ स शिवः परमाक्षरः ॥ २४४ ॥

सशक्तिः स भवेत् काली स च कङ्कालपालकः ।

एवं गुरुः सदाचारी दीक्षाव्याख्यानकृत् स्मृतः ॥ २४५ ॥

पुरोधोवत् सदा व्याख्याकर्तव्याचारसंयुतः ।

श्रीदेव्युवाच ।

आचारक्रमसंस्थानां यथासंस्थानभेदतः ॥ २४६ ॥

अवतारक्रमेणैव कथमाचारसंस्थितिः ।

ज्येष्ठानुक्रमयोगेन तथाख्याहि महेश्वर ॥ २४७ ॥

श्रीभैरव उवाच ।

कृतव्याकृतमेवं हि श्रोता यश्चुम्बकेश्वरः ।

गोत्रसंवाहनं कृत्वा प्रणिपत्य पुनः पुनः ॥ २४८ ॥

व्याख्यालेख्यं सकुसुमं माज्यान्तः स्थाणुमाचरात् ।

स्नानादिवह्निकर्मान्तः कर्मणा स च आददेत् ॥ २४९ ॥

भ्रातृभिः पुत्रकैः सार्द्धं स्वस्तिकानामिकैर्गुरुः ।

बुभोज सुप्रसन्नस्तु यथासंभवभोजनम् ॥ २५० ॥

ज्येष्ठानुक्रमतः स्वाप्य क्षयन्ती वैदिकादिका ।

अधिकारविभेदेन पङ्क्तिभेदोऽत्र कीर्तितः ॥ २५१ ॥

चतुर्वर्णविभेदेन वामतन्त्रमिदं यतः ।

चतुर्णां वर्णिनां देवि लिङ्गं साधारणं स्मृतम् ॥ २५२ ॥

द्विरूपमपि तन्त्रेऽस्मिल्लोकसंवृत्तिहेतवे ।

येनापवादमायान्ति गुरूणां गुरुगौरवम् ॥ २५३ ॥

तत्कर्मणा प्रकर्तव्यं प्राणैः कण्ठगतैरपि ।

गुरुप्राधानिकं शैवं सदाचारो यदा न सः ॥ २५४ ॥

तदा लाघवमायाति शिवस्तज्ज्ञानमेव च ।

तयोर्लाघवकर्ता यस्तन्निन्दाफलमाप्नुयात् ॥ २५५ ॥

तेन चापि निरुद्धस्य भोगमोक्षौ सुदुर्लभौ ।

नैकस्य चुम्बकस्योक्तं चतुर्णामपि सुन्दरि ॥ २५६ ॥

फलैषिणां हि सामान्यं शास्त्रोक्तप्रतिपालनम् ।

विद्याविनयसम्पन्ना लोकवृत्तान्तपालकाः ॥ २५७ ॥

शास्त्राभ्युन्नतिकर्तारो यान्ति परां गतिम् ।

गुप्तवृत्तास्तु योगिन्यो गुप्तरश्मिः सदाशिवः ॥ २५८ ॥

गुप्तवीर्यानुसङ्घातो गुप्तमौषधिजम्बलम् ।

गुप्तं तत् परमं तत्वं गुप्तास्ताः सर्वसिद्धयः ॥ २५९ ॥

यद्यदत्र प्रधानन्तु तत्सर्वं गुप्तगोचरम् ।

साप्यसाधनभावेन फलं यत्र प्रतिष्ठितम् ॥ २६० ॥

मुखाग्नौ तत्र ये प्रोक्ता क्रियाज्ञानञ्च चुम्बकैः ।

साधनं फलयुग्मस्य तन्त्रे भैरवभाषिते ॥ २६१ ॥

गुप्तवृत्तो गुरुर्गुप्तसंप्रदायश्च शम्बरः ।

गुप्ता क्रिया च निर्व्याजं साधनं साध्यवस्तुनः ॥ २६२ ॥

न क्रिया भावमायाति साध्येऽर्थे प्रकटा क्रिया ।

रजसेव वा त्रिकाणां रसवद् वा हितात्मनाम् ॥ २६३ ॥

अगुप्तसंप्रदायं यज्ज्ञानं लोके विजृम्भते ।

सामान्यविषयं तद्धि योगिनीनां विशेषगम् ॥ २६४ ॥

तच्चापि गुप्तसद्भावगुप्तवृत्तप्रभावतः ।

वैशेषिकेण रूपेन चरन्त्यत्र महाबलाः ॥ २६५ ॥

साधको गुप्तवृत्तस्तु न लोकेनाभिभूयते ।

तस्यानभिभवाच्चापि प्रपद्यंतीश्वराजनाः ॥ २६६ ॥

तेभ्योऽर्थसम्भवस्तस्माद् विमलायाति संभवः ।

तत्प्रीणितो गुणान्वीरश्चिनोति विविधैः सुखैः ॥ २६७ ॥

तस्माद्ध्वस्तदृष्टेषु संवृत्तं साधकात्मनाम् ।
लोके जुगुप्सितं साधु तद्वार्धान्निश्चितं फलम् ॥ २६८ ॥
सर्वगुप्तिः सनागानां व सनाग्रानां फलार्थमुपयुज्यते ।
ज्ञानगुप्तिविरक्तानां संप्रदायस्य च प्रिये ॥ २६९ ॥
स्वस्वार्थैकपरो लिङ्गी भोगतृष्णापरोऽच्युतः ।
इतरोऽभिलाषसंपर्कात् परार्थैकफलो मतः ॥ २७० ॥
भोगोपादानमुदिष्टं मलं मोक्षस्य तत्क्षयः ।
अभिलाषानुमानेन स च सिद्धोऽत्र शासने ॥ २७१ ॥
मायैषासन्न एवात्र भोगसम्पादिका मता ।
भोगिनां मुक्तरागाणां मुक्तरागाच्च मुक्तये ॥ २७२ ॥
न लिङ्गे रागयुक्तानां प्रशस्तं वामलिङ्गिनाम् ।
मयापि हि परित्यक्तं त्वल्लाभे वृत्तिशङ्कया ॥ २७३ ॥
तस्माद् व्रतं यथा वामात् प्राथ्यं यच्चति चुम्बकः ।
व्रतिने समर्पयेत् तद्वद् विभुर्योगे कृते सति ॥ २७४ ॥
पदार्णाणुकलातत्त्वशक्तिभिर्वा प्रतिष्ठयेत् ।
कृते तु भैरवे यागे चुम्बको जटिनां जटी ॥ २७५ ॥
शुद्धतत्त्वाश्रितो योगं योगान्ते निस्पृहो नरः ।
न स रागीति वक्तव्यो योग्यत्वादुत्तरे परे ॥ २७६ ॥
उद्भवाभिभवस्थानप्राप्त्यानंतरयोगतः ।

एतदेवान्तरं तत्र यत्क्रीडोपशमात्मकम् ॥ २७७ ॥

इत्येवं गुप्तवृत्तस्तु लोकशास्त्रार्थनिश्चयी ।

दैशिको भावनानन्दः  क्रियावाचोश्नुते फलम् ॥ २७८ ॥

परापरं महामार्गे परस्यापि प्रयच्चति ।

ततो भुक्तोऽन्तरे दिव्ये पर्यङ्के स्तरणान्विते ॥ २७९ ॥

सुप्रसारितदेहस्तु विनिद्रो दिवसे सदा ।

चक्रवर्त्तिविलासाढ्यः  कलाकौतुकदर्शनैः  ॥ २८० ॥

किञ्चित् कालं गमित्वा तु दानशीलः सदैव हि ।

दीनान्धकृपणेभ्यस्तु बन्दितेभ्यो विशेषतः ॥ २८१ ॥

येन येन हि सत्त्वानामुपकारः प्रजायते ।

तेन तेन हि कर्तव्यो दिव्यमानेन वस्तुना ॥ २८२ ॥

अन्वेष्यं  वित्तमेवैकं पात्राद्यं न महात्मना ।

न वर्षां वीक्षते  मेघो नापि तारापतिर्महीम् ॥ २८३ ॥

पुराणनाटकाख्यादिगोष्ठीमण्डलसंस्थितः ।

दिनशेषं क्षिपेन्मन्त्री शेषं च सदसि स्थितः ॥ २८४ ॥

स्थास्त्वागङ्नुकलोकस्य गन्तुकलोकस्य स ह्यथर्वकृतादरः  ।

स करोतु तमिश्रान्ते सन्ध्यावन्दनके कृते ॥ २८५ ॥

विक्षिप्तैकतमोऽह्नस्तु संपूज्य गुरुपादुके ।

लिङ्गविद्यारतस्तेन प्रणमेत् स्थाणुमादरात् ॥ २८६ ॥

पादाभ्यङ्गे कृते गन्धैर्लिप्ताङ्गश्चन्दनेन वा ।

मृदुनी लघुनी श्लक्ष्णे वाससी विनिवेश्य च ॥ २८७ ॥

कर्पूरपारिकामिश्रताम्बूलापूरितानन: ।

यामस्यार्द्धथयामे वा गते यायाद् रतिगृहम् ॥ २८८ ॥

चित्रवस्त्रवितानाढ्ये दिव्यधूप सुधूपिते ।

चन्द्रमण्डलसंकाशे तल्पे तत्र स्वपेद् गुरुः ॥ २८९ ॥

स्नेहसद्भावविनयैः कुलेन च विशुद्धया ।

जायया तु सुरूपिण्या समेतः सगृही यदि ॥ २९० ॥

सामान्यविषयाः सर्वे संभोगे गृहलिङ्गिनोः ।

वर्जयित्वा तु संपातं हरिद्रामिषयोषिताम् ॥ २९१ ॥

मधुगृञ्जनपूर्णानि शिष्टसिद्धानि यानि च ।

सेव्यान्या यत् सुसर्वाणी वर्ज्या यत् स्वपिकामिनी ॥ २९२ ॥

ब्रह्मचर्यप्रधानस्तु लिङ्गी सर्वत्र कीर्तितः ।

तत्प्रवीणोऽन्यविषयान् सेवन्नपि न बाध्यते ॥ २९३ ॥

कामतन्त्रप्रविष्टेन क्रमेणावर्जितः प्रियः ।

कामक्रीडाविधानज्ञः कामिनीकामलालसः ॥ २९४ ॥

कामयेद् दत्तशर्मा तु चुम्बनालिङ्गनादिभिः ।

नाचित्तां नामुखग्रस्तां संनिद्रां दापिनां शुकाम् ॥ २९५ ॥

कामयेज्ज्ञातकामोऽपि कामिनीं काम्यकामुकः ।

न चाप्राप्यरता त्याज्या  कामयेन्नरताप्तये  ॥ २९६ ॥

न चाक्लिन्नभगा नारी भजनीया विपश्चिता ।

यथा यथा प्रक्षरते नितम्बमालिङ्गनालेखनचुम्बनाद्यैः ॥ २९७ ॥

तथा तथा तृप्यति काम्यमाना कान्तारतेर्बन्धविशारदैव  ।

अङ्गेषु अङ्गान्यपि नक्षिपन्ती वक्रे च वक्रं सुतरां स्थपन्ती ॥ २९८ ॥

प्रस्फालयन्ती व नितम्बमुच्चैरनेन कान्ता दयितं विनोति ।

रतेन यस्या मुकुलन्ति नेत्रे न स्पन्दते हृन्न च गात्रकम्पः ॥ २९९ ॥

निष्वेदिनौ चेन्दुरूची कपोलावनिच्चकामारहितां भजेत ।

आस्वादते या रतनिर्वृतापि स्वादुप्रियस्याधरपल्लवेन्दुम्  ॥ ३०० ॥

प्रोच्चुम्बनालिङ्गनराशिभूया  सानुरागा रतमार्गयोग्या ः ।

श्वासशीला  सततं विचिन्ता निद्रालसाह्वैव च कोपयुक्ता ः ॥ ३०१ ॥

स्वार्थैकनिष्ठानुगता तु नित्यं कान्ता रते दुःखकरी नराणाम् ।

दृशि स्थिते प्रेयसि व प्रेषसि चित्तजन्मा प्रवर्द्धमानो हृदि कम्पपूर्वा ॥

३०२ ॥

नाविष्करोद्य  च गता विलासान्यस्याः प्रिया सा न हि सानुरागा ।

सर्वार्थसिद्धिर्भवति प्रभुत्वादेकां रतिं वर्ज्य रते बलानाम् ॥ ३०३ ॥

तस्मान्महत्वं स्वभुतां विहाय निर्वाणलाभाय कुरुष्व सर्वम् ।

सततमनङ्गमनङ्गे सेवन्नपि निर्वृतिं कुरुते ॥ ३०४ ॥

गौरि समोऽपि नरो यो निष्क्रमति हृदः स वनितानाम् ।

निर्वाणैकपराणां मृदुगुणहृतचेतसां सदा पुंसाम् ॥ ३०५ ॥

न चलन्ति च क वत सीत्काराद् दयितागुप्तात्मरागाणाम् ।

रागिण्यनुरागपराः नु सन्ति विरागाय विरागिण्ययास्तरागा ये ॥

३०६ ॥

प्रेयसि मदनपराभवरहितास्ते कालोके ।

न वदन्ति च तदा दोषं पुरतो येऽन्यस्य सदपि गुणविभवम् ॥ ३०७ ॥

असदपि ये चाप्यूचुस्तेषां रतिनिश्चलं प्रेम ।

भूर्यपि समक्षविभवं मन्यन्ते योषितो न सदुपकारम् ॥ ३०८ ॥

तृणतनुतनोः परोक्षे यथा हि अकृतकदृढस्नेहम् ।

अनुरज्यति गुणयोगाद् दोषवियोगाच्च सोत्तमा नारी ॥ ३०९ ॥

इतरा समञ्जसगतिर्दोषगुणाभ्यां वशं याति ।

ईर्ष्यान्तः खलु कोपो ह्यन्तर्गमनाच्च ह्रीपरित्यागः ॥ ३१० ॥

दानातिशयाल्लोभः परिभवनं चातिसंपर्कात् ।

उदयत्यकामुकानां प्रसङ्गतो योषितामवश्यं भवश्ये हि न ॥ ३११ ॥

तदुदयभयतस्तस्माद् ईर्ष्याद्यं खलु परित्याज्यम् ।

सकलकलागुणनिलयो दयितां यो रमति विदितविटवृत्तः ॥ ३१२ ॥

भावितविनोदभावः स कामसुखमश्नुते ।

कामी एवं निषेवितरतिः स्वयं स्वपेत् सुखनिद्रया ॥ ३१३ ॥

प्रातरुत्थाय वीरेन्द्रः प्रागुक्तन्तु समाचरेत् ।

सर्वं व्याख्यावसानन्तु यदि स्वाध्यायनोदितम् ॥ ३१४ ॥

अनध्यायेषु देवेशि देशनाग्रन्थवाचनम् ।

द्विगुणं वाह्निकं कार्यं स्नाप्यो लिङ्गीऽथ वा हरः ॥ ३१५ ॥

देवमुद्दिश्य वा कार्यो विहारः श्रमहेतवे ।

क्रिया वा देशिकेन्द्रेण व्याख्येया पञ्जिका गता ॥ ३१६ ॥

प्रक्रियाभावनां वाथ योगं वाथ समभ्यसेत् ।

त्रयाणां संमतादीनां ब्रूयाद् यः पञ्जिकाक्रमम् ॥ ३१७ ॥

स तद्व्याप्तिमवाप्नोति यद्वा व्युत्क्रमकारकः ।

स्वकार्यभयलोभेन स्नेहाच्चैवोपरोततः ॥ ३१८ ॥

निषिद्धिमाचरेद्यस्तु प्रायश्चित्ती भवत्यसौ ।

उक्तं वृत्तं गुरुजनगतादेशमालेख्यतन्त्रम् ॥ ३१९ ॥

तन्त्रे तन्त्रे सुवचनवशात् कीर्तितं यन्मयासीत् ।

तत् संक्षिप्तं विशदमखिलं प्रोदितं ते च राजन् ।

भूयो भ्रान्तं यदिह भवतः प्रश्नतो वच्मि तद्धि ॥ ३२० ॥

इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसंकर्षण्यां चुम्बकचर्या पञ्चचत्वारि

ंशतिः पटलः ॥ ४५ ॥

षड्चत्वारिंशतिः पटलः ।

श्रीदेव्युवाच ।

मूर्द्धव्यालशिरोरत्नदीप्तध्वस्तशिरस्तमः ।

वालेन्दुरश्मिसंस्पर्शप्रवृद्धध्वनिधारकः ॥ १ ॥

केषु देव न सीदन्ति धीपानाः समवस्थिताः ।

दोषाञ्जिताः सुसिध्यन्ते कथमेतद् ब्रवीहि मे ॥ २ ॥

श्रीभैरव उवाच ।

अष्टमी कौमुदीभूता षोडश्येका च या तिथिः ।

तां स्वधीय ं क्षयं यान्ति कृष्णनाभ्यब्जजोऽपि हि ॥ ३ ॥

विधिग्रहाम्बिकां भोज्य शब्दयोरप्यथैव च ।

मध्याष्टकाक्षयतिथावापत्सु रविचन्द्रयोः ॥ ४ ॥

नित्यानां ध्यानसंस्थानमेतत् ते समुदाहृतम् ।

नैमित्तिकादिका ह्यन्ये प्रोच्यन्ते तेऽवधारय ॥ ५ ॥

मण्डलीकमहीपाल गुरुसाधकसंप्लवे ।

दशपञ्च तदर्धञ्च नाध्येयं दिनसंख्यया ॥ ६ ॥

स्वगुरोरव्यये जाते सांवत्सरे क्रतौ ।

व्याख्यादिकं प्रशस्तं तु न व ना त्याज्यो गौरवोदितः ॥ ७ ॥

स्नानदानतपःप्राप्तावुक्तं पञ्चत्वसंश्रुतौ ।

प्रजातपूजके स्नात्वा पृष्ठशोच्या किरेद् गुरुः ॥ ८ ॥

प्रदीपनदितोल्काया दर्शने सन्मते मृते ।

सरत्केकलहे शान्ते गर्जिते कालवर्षिते ॥ ९ ॥

प्लवङ्गप्लवहे  व्याख्या तत्कालान्ते प्रशंसिता ।

तत्कालिका स्मृता ह्येता तावत्कालमतः  शृणु ॥ १० ॥

गोदिकाश्यादिभिश्छिन्ने व्याख्यामध्ये तु पुस्तकम् ।

संपूज्याप्याकृतिः कार्या स्नात्वा चान्त्यादिकेऽपि च ॥ ११ ॥

अनाध्यायास्तथान्ये च तावत्कालाः् काला स्मृताः प्रिये ।

तद्विज्ञाय प्रकर्तव्यं शास्त्रोक्तं न विलङ्घयेत् ॥ १२ ॥

तत्र तल्लङ्घनाल्लोके नाभीष्टं प्राप्यते क्वचित् ।

अशिष्टकर्मणोन्मत्ते प्रायश्चित्तिः प्रशस्यते ॥ १३ ॥

विमलीकरणापात्र विशेषात् क्रूरयामले ।

अनिरोधाद् विमुच्यन्ते प्रायश्चित्तेन दीक्षिताः ॥ १४ ॥

ज्ञानयोगरतानान्तु प्रायश्चित्तन्तु तात्विकम् ।

तेन तन्निर्मलाविष्टौ प्रायश्चित्तं विरुद्ध्यते ॥ १५ ॥

विश्वभावविमुक्तानां वस्तुभेदावकल्पिनाम् ।

प्रकृतिर्व्यज्यते स्वस्था सुस्थातानामयोगिनाम् ॥ १६ ॥

सप्रपञ्चाशया येऽत्र ये द्विरूपक्रियामताः ।

ते मलालेपमायान्ति प्रायश्चित्तं हि तत्क्षयः ॥ १७ ॥

अभिधानविमुक्तं यद्यत् संकल्पविवर्जितम् ।

कर्मभिस्तत्क्षतं कर्म व कर्मं वन्ध्याकुसुमवद् भवेत् ॥ १८ ॥

तस्माद् गुप्तमगुप्तं वा यत् कृतं कर्म दीक्षितैः ।

तदुद्दिश्य प्रकर्तव्यं प्रायश्चित्तमथेतरम् ॥ १९ ॥

यियासवः परां काष्ठां संवृत्ता  ये न संस्थिताः ।

तेषां पर्यनियोगोऽयं प्रायश्चित्तात्मकं नहि ॥ २० ॥

बुभुक्षवो भुजागारान् मुक्ता युक्ता विवेकिनः ।

लुप्ताचारानुरुध्यन्ते प्रायश्चित्तविवर्जिताः ॥ २१ ॥

प्राप्तैषिणामुद्भवं  तु पदमुक्तं हितैषिणा ।

प्रायश्चित्तं यथा देवि भैरवेन तथा शृणु ॥ २२ ॥

गुरुनिन्दादिकास्त्रीणि सोपवासायुतेन तु ।

अकामादर्जिता दोषाः शुद्ध्यन्ते मूलविद्यया ॥ २३ ॥

कामतो दशधा   शुद्ध्यते योगदर्शनात् ।

जयार्थं प्राणहर्ता यो गुरोर्मर्मप्रकाशकः ॥ २४ ॥

त्याज्योऽसौ वीरतन्त्रेषु तस्य शुद्धिर्न कीर्तिता ः ।

अकामतः कृते नग्नो शेषवस्तुविवर्जितः ॥ २५ ॥

अपापस्थानगं देवी प्राणत्यागैकलालसः ।

यावज्जीवमनुष्ठानाज्जन्मषोडशकेन  तु ॥ २६ ॥

योगिनीकुलसामान्यः स भविष्यति पापकृत् ।

निन्दको वीरभोग्यानामयुतेन विशुद्ध्यति ॥ २७ ॥

संयमात् सप्तजप्तेन विद्याप्ति हृदयेन वा ।

विवेच्य सर्वतस्तज्ज्ञैर्मुख्यमध्यमकन्यसैः ॥ २८ ॥

दोषस्तेन विनाशाय लक्षायुतशतं समम् ।

वर्णजातितपोज्ञानवृत्तान्यालोच्य यत्नतः ॥ २९ ॥

सममुख्यकनीयोऽसौ दोषाः कल्प्या विपश्चिता ।

कन्यास्त्रीसमयस्थानां पत्युर्गंतुर्वधत्रयं ॥ ३० ॥

तेनन् यः कल्मषीभूतस्तद्विशुद्धिं शृणु प्रिये ।

प्रसादात् सम्मतं हत्वा प्रयुक्ता शुद्धिमिच्चति ॥ ३१ ॥

सकामः कोटिजापेन कृच्छ्रादिकृतनिश्चयान् ।

कामतोऽकामतो वापि द्विगुणं पुत्रकात्यये ॥ ३२ ॥

पुत्रकाद् द्विगुणो दण्डः साधके कामतो हते ।

प्रागुक्तो देशिकेन्द्रस्य कामतो नानयोर्मतः ॥ ३३ ॥

कन्याहाकोटिजापेन स्त्रीहन्ता च न शुद्ध्यति ।

यावज्जीवं महाकल्पः कपालोदरभोजनः ॥ ३४ ॥

चान्द्रायणाष्टकं कृत्वा कृच्छ्राणां यत्कृतं शतम् ।

सर्वे तस्य परित्यागाद् दूषायी सर्वदैव हि ॥ ३५ ॥

यः कामान् कन्यकां हन्यात् स्त्रियं वानपराधिनीम् ।

प्रायश्चित्तं न तस्योक्तं तन्त्रं योगेशिपूजितम् ॥ ३६ ॥

शक्तितन्त्राणि सर्वाणि शक्त्यङ्गानि यशस्विनि ।

निष्फलानि च तानि स्युः शक्तिरूपविघातिनाम् ॥ ३७ ॥

मूलोन्मूलितसमा यो दोषाः कन्यावधादिकाः ।

भूयः श्रेयसि संयुक्ते प्राचीप्रोदितसंस्थया ॥ ३८ ॥

हत्वा च लिङ्गिनं शैवं पञ्चमन्त्रमहातनुम् ।

लक्षायुतेन शुद्ध्यन्ते कामतोऽकामतोऽपि हि ॥ ३९ ॥

अलातिकरशिष्यन्तु हत्वा शङ्खविभूषितम् ।

हत्वा येन विशुद्धिः स्याद् विमलेऽपि तदर्धतः ॥ ४० ॥

निपात्य दण्डधर्तारं सौख्ययोगरतं मुनिः ।

अयुतेन विशुद्धिस्तुं प्रमाणार्द्धेन तस्य तु ॥ ४१ ॥

विप्रवच्चाक्यसंशुद्धिः शाक्यवज्जैनयोर्द्वयोः ।

अमरस्वर्गुरुः स्वात्यामकामात् कलुषीकृतः ॥ ४२ ॥

शुद्ध्यत्ययुतजापेन मूलोर्घार्यागमस्थितः ।

कामतो द्विगुणाच्चुद्धिर्गुरुदोषं विहाय तु ॥ ४३ ॥

वीरकान्तारतिर्द्वन्द्वी शुद्ध्यन्त्ययुतखण्डतः ।

जटाभस्माङ्गिनी क्षौमी तदर्धेन विशुद्ध्यति ॥ ४४ ॥

महद् ब्रतधरापाश्व लिङ्गान्या अपि विप्लुति ।

वन्दिते साध्यमार्गस्थे सहस्राद् विमलीभवेत् ॥ ४५ ॥

अकृताधिहारकेयः सोऽधिकाराद् विशुद्ध्यति ।

साधको विकृतित्यक्तः पुनर्योगेन शुध्यति ॥ ४६ ॥

अह्नच्चेदे सहस्रेण चिन्नसूत्रे शतेन तु ।

नष्टदग्धेऽयुते जप्ते पटे तूरे युतायुतम् ॥ ४७ ॥

नित्याग्निहोमे शतको नैमित्ते च सहस्रकः ।

काम्येप्ययुतहोमस्तु साधकानामदोषकृत् ॥ ४८ ॥

गुप्ताङ्गदर्शनाच्चुद्धिः हृदयस्य शतं भवेत् ।

आचाराणां च सर्वेषां त्रिस्वरूपं विभाव्य तु ॥ ४९ ॥

एकद्वित्रिगुणं शुद्ध्यै हृदयस्य शतं जपेत् ।

पातकं च विदित्वा तु तथा चैवोपपातकम् ॥ ५० ॥

महापातकसंज्ञञ्च त्रिविधं चेन्निरोधकम् ।

अयुतार्धात् तदर्धाच्च तस्यार्द्धाच्च विशुद्ध्यति ॥ ५१ ॥

एवं हि सर्वदोषाणां विदित्वा गुरुलाघवम् ।

सामान्यार्द्धं विशेषाणां शतमुक्तं सहस्रकम् ॥ ५२ ॥

गुरुदत्तं प्रकर्तव्यमथवा तु गरीयसा ।

तयोरदर्शने स्वल्पमात्मानो दैशिको यदि ॥ ५३ ॥

गुरुवृन्देन दातव्यं यन्महत् प्रविचार्यते ।

प्रायश्चित्तं ततः कार्यं निरोधस्यापनुत्तये ॥ ५४ ॥

गुरुवाचो यदा यातं दोषादोषा विकल्पतः ।

तत् तथैव प्रकर्तव्यं तद्वाक्यं न विलङ्घयेत् ॥ ५५ ॥

गुरुवाचादितुष्टोऽपि शुद्ध्यते मन्त्रसंस्कृतः ।

वाचैव विमलस्या तु जातरूपमिवाग्निना ॥ ५६ ॥

प्रायश्चित्तानि सर्वाणि कार्या कर्माणि यानि च ।

गुरुदत्तानि तानीह दीक्षितानां फलैषिणाम्॥ ५७॥

समस्तसमयक्षतिप्रबलदोषनिर्णाशकः ।

शशाङ्क शकलार्चितप्रवरवीरसन्दर्शकः ॥ ५८॥

विशुद्धविधिरुत्तमप्रकटितोरुसञ्जल्पकः।

शृणुष्वनुगतां प्रिये गुरुजनस्य चर्यामलाम्॥ ५९॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्याम् अनध्यायप्रायश्चित्तादिनि

र्णयः षट्चत्वारिंशतिः पटलः॥ ४६॥

सप्तचत्वारिंशतिः पटलः।

श्रीभैरव उवाच।

चुम्बकोक्ताशेषगुणसंपन्नः संपन्नः साधको भवेत्।

स मन्त्राराधकः प्रोक्तः काम्यकर्माणि निश्चितः॥ १॥

तेनावश्यं जपः काम्यः कर्तव्यो नित्यकर्मणः।

जपस्यानन्तरं देवि शतकस्याह्वसंस्थया ॥ २॥

गुरुमन्त्रान्तरं यायान्नासूनां संशयेऽपि हि।

नान्यमन्त्रपदोच्चारी नान्यानुचरभोजकः॥ ३॥

नान्यसंपर्ककृन्मौनी पौरश्चरणके विधौ।

नान्यङ्गनाभिगामी च स्वशक्तिन्तु विहाय वै॥ ४॥

रक्षा रक्षितुकामस्तु शक्तिरक्षैकनिश्चितः।

प्रियंवदा सुशीला च भक्तियुक्ताभिगामिनी ॥ ५ ॥

निरुग् यो निर्विलासाढ्या वामाचारानुभाविता ।

शान्तचित्ता निरुद्विग्ना सुप्रसन्ना सुरूपिणी ॥ ६ ॥

सुविनीता गुरोर्भक्ता भर्त्तुः शुश्रूषणे रता ।

न कामलोलुपात्यन्तनात्रपा नातिनिर्घृणा ॥ ७ ॥

सोत्साहा सुप्रतिष्ठा च स्वल्पजल्प्याप्यभीतका ।

चातुर्वर्णभवादीनां साधकेच्चाविधायिनी ॥ ८ ॥

दूतीसफलसंप्राप्त्यै प्रशस्ता मन्त्रवादिनाम् ।

उक्तलक्षणसंयुक्ता सहयाज्ञानुमोदिता ॥ ९ ॥

सिद्धये साधकेन्द्राणां सहायपदकाङ्क्षिणाम् ।

देवीव्रतधरो मन्त्री नित्यनेपथ्यकादिषु ॥ १० ॥

उन्मत्तकोऽथशृङ्गारी चापव्रतधरोऽथवा ।

गीतालापविलासाढ्यो नानावर्णोपरञ्जितः ॥ ११ ॥

विचित्राम्बरमालाढ्यो मालाहस्ताद्यनेकधृक् ।

ग्रामचत्वररथ्यासु प्रभ्रमेत् त्वरितः सदा ॥ १२ ॥

गायन् हसन् पठन् रोदन् नृत्तन् वाथ स्वहर्षितः ।

विण्मूत्रारोपितकरस्तदिष्टककरः सदा ॥ १३ ॥

समारञ्जितवक्रश्च रक्तसूत्राङ्गनाशधृक् ।

विषाणावषवच्चन्नप्रकोष्ठो दन्तकर्णिकः ॥ १४ ॥

स्वभावस्थश्चरन्मौनी क्वचिद्भावं समाश्रयेत्।

भाव्यभावमनोदीप्तो लक्षलीनः क्वचित् स्थिरः॥ १५॥

क्वचिद् विद्याधरोच्चारी क्वचिच्छून्यं समाश्रितः।

क्वचित् प्रशान्तगो योगी क्वचित् संध्याचले स्थितः॥ १६॥

क्वचिन्नादे क्वचिद् व्योम्नि क्वचिच्चापि निरोधिनि।

क्वचिद् बिन्दौ क्वचित् खड्गे क्वचिद् बीजे व्यवस्थितः॥ १७॥

अनुलोमविलोमेन चारमार्गे प्रतिष्ठितः।

साधयेदचिरात् सिद्धिं ज्ञानव्रतधरो मुनिः॥ १८

क्रियाव्रतानि तन्त्रेऽस्मिन् स्वरुच्या मन्त्रवादिभिः।

सेवावसानचीर्णानि समासन्नफलानि तु॥ १९॥

व्रतद्वये स्थिता : येऽत्र ते सिद्ध्यन्त्यविचारतः ।

निर्वाणामलभोगाभ्यामध्यानध्यानलक्षणे॥ २०॥

स्थितस्त्वेकतमे यागे नवानां प्राग् विचारिते।

सोत्साहः सन् सहायस्तु एकोवाषोऽम्बिकाव्रती ॥ २१॥

प्रतिष्ठ्य भैरवं लिङ्गं मन्त्रैर्भैरवभाषितैः।

ज्येष्ठं वा मध्यमं वापि कन्यसं वा त्रिरूपिकम्॥ २२॥

प्रासादेष्वमना स्थाने क्रियया भैरवोक्तया।

इष्टान्नं तत्र विन्यस्य गुप्तं कृत्वा तु तत् प्रिये॥ २३॥

प्राची प्रोक्तं विधानेन कृत्वा क्षेत्रपरिग्रहम्।

तस्मिन् कृतोदक्रियया शीघ्रं सिद्ध्यति साधकः ॥ २४ ॥

श्रीजयद्रथ उवाच ।

कालकन्धरकामाङ्गफल्गुस्तृप्ताक्षिपावकः ।

विलोलवलयव्यालशिरोमणिविभासितः ॥ २५ ॥

कान्ताकपोललावण्यप्रतिबिम्बितविग्रहः ।

दंष्ट्रेन्दुचन्द्रिकाजालजितमूर्द्धेन्दुपावक ॥ २६ ॥

आकल्पव्यालनेत्राग्निशिखास्फुरितदृग्घवे ।

उमाभूषणमाणिक्यकरसंपर्कपाटल ॥ २७ ॥

स्थाने कपर्दिन्सर्वेश शितिकण्ठबलाबल ।

नीलकण्ठविशालाक्ष वह्निदृङ् नीललोहित ः ॥ २८ ॥

उमापते पशुपते शिपिविष्ट वृषध्वज ।

दीप्तवासा ः विरूपाक्ष शूलपाणे पिनाकधृक् ॥ २९ ॥

उग्रपिङ्ग भवानन्तगिरिजन्मा हृदि प्रिये ।

बहुरूप महारूप नन्दिमित्रगणाधिप ॥ ३० ॥

पाण्डुराङ्ग भजव्याजिन् खट्वाङ्गिन् प्रमथेश्वर ।

दुर्वासा मृष्टदोर्दण्ड गिरिशामितविक्रम ॥ ३१ ॥

अजैकपादहिर्बुध्न गूढधन्वन् दिगायुध ।

क्षपिताशेषसन्तापशुचिरत्नमहोदधे ॥ ३२ ॥

ममानुकम्पया नाथ दीनानाथाय भीरवे ।

प्रासादलिङ्गवेदीनां लक्षणं संप्रकाशय ॥ ३३ ॥

श्रीभैरव उवाच ।

एकादिनवहस्तान्तलिङ्गमिष्टं नरात्मनाम् ।

परतः स्वप्रचाराणां तद् विषाश्च प्रशस्यते ॥ ३४ ॥

शेषन्तु दैशिकेन्द्राणां लोकानुग्रहहेतवे ।

लिङ्गमानेन प्रासादस्तन्मानाल्लिङ्गमेव च ॥ ३५ ॥

शास्त्रोक्तलक्षणेनैव तन्नियोगं समाचरेत् ।

लिङ्गतो द्विगुणो गर्भो गर्भाच्च द्विगुणं बहिः ॥ ३६ ॥

बहिस्तो द्विगुणोत्सेधः शस्तः प्रासादलक्षणे ।

पूर्वापूर्वविभागेन विषुवस्य प्रशस्यते ॥ ३७ ॥

द्वारगृहस्य तु देवानां प्राक्पश्चिमसमाश्रये ।

विषुवस्थस्य कर्तव्यं द्वारं वै दक्षिणोत्तरम् ॥ ३८ ॥

प्रासादो भैरवीयोयः शस्तोऽसौ दक्षिणामुखः

मातृमण्डलगेहानि सव्यासव्यमुखानि तु ॥ ३९ ॥

प्रासादस्योभयस्थानि प्रशस्तानि विपर्ययात् ।

त्रिस्वरूपाणि त्रीण्यत्र लिङ्गान्युक्तानि सूरिभिः ॥ ४० ॥

स च ज्येष्ठकनिष्ठाभ्यां तेषां लक्षणमुच्यते ।

त्रिविधं तस्य विज्ञेयं वत्स भागविशेषतः ॥ ४१

उत्सेधो यत्प्रमाणस्तु तत् त्रिभागेन विस्तरः ।

सर्वत्र समलिङ्गस्य चतुरस्रः प्रशस्यते ॥ ४२ ॥

चतुरस्रमीश्वरं स्थानमष्टास्रं गुह्यकापते ।

वृत्तन्तु भैरवस्थानं तत्र चत्रं निवर्तयेत् ॥ ४३ ॥

वृत्तस्याष्टमभागन्तु दक्षिभ्योर्ध्वोर्ध्वतः क्षिपेत् ।

भागत्रयेऽपि लिङ्गस्त तत्र सूत्राणि पातयेत् ॥ ४४ ॥

दत्तांशमूर्ध्वकर्णे तु दत्वाधोगतलीलया ।

मस्तकाङ्गं समं कृत्वा कर्णाङ्कान् कामयेद् वुधः ॥ ४५ ॥

सूत्रं द्वितीयकर्णाङ्कं कर्णाङ्क दिव्यचत्रप्रसिद्धये ।

वेदभूतषडंशैर्वा चत्राकृत्तिविधायिनी ॥ ४६ ॥

सर्वेषामेव लिङ्गानां क्रियोक्ता पूर्वसूरिभिः ।

एतत् सर्वसमं लिङ्गं भागायतमथोच्यते ॥ ४७ ॥

आयामं चाष्टभागान्तं त्यक्त्वा भागत्रयं बुधः ।

पञ्चभिर्विस्तरं दत्वा वेदीं कुर्याद् यथा पुरा ॥ ४८ ॥

शेषन्तु लक्षणं सर्वग्राह्यं सर्वसमोदितम् ।

नह्यर्धकमिदं प्रोक्तं शृणु सम्यक् कृशायतम् ॥ ४९ ॥

यदायतत्वं लिङ्गस्य तत् तुरीयान्शविस्तरम् ।

विवर्त्य पूर्ववत् कुर्याच्चतुरस्राधिकं विधिम् ॥ ५० ॥

तृतीयं कथितं ह्येतल्लिङ्गं सुरगणार्चितम् ।

साधारणमथैतेषामन्तच्चत्रं प्रकाश्यते ॥ ५१ ॥

प्रजाभागं चतुर्विंशद्भागं कुर्यात् समं बुधः ।

सूत्रेषु वैषुवे चित्रं कुर्याद् भागद्वयेन तु ॥ ५२ ॥

उच्छ्र्यास्यतृतीये तु भागाधस्तात् प्रतिष्ठिते ।

भागत्रयं परित्यज्य रेखां तिर्यक् समालिखेत् ॥ ५३ ॥

अष्टगात्रत्रिभागं वै द्विभागेन समं भवेत् ।

हेमसूच्याङ्कमेतद्धि पश्चादङ्केन चोत्किरेत् ॥ ५४ ॥

क्षौद्रेण पूरयेत् तद्धि मूर्ध्निपुष्पकृतां ददेत् ।

स्नापयेच्च ततोम्भोभिः शिल्पिदोषविमुक्तये ॥ ५५ ॥

स्नातं लिङ्गं षडङ्गानामधिकार्युपजायते ।

परापरतनुं ध्यात्वा ततो लिङ्गे तु भैरवम् ॥ ५६ ॥

विशेषस्नानसंयोगः कार्योऽनुक्रमसंस्थितः ।

गन्धाम्बुनाज्यमधुना दध्ना च पयसा ततः ॥ ५७ ॥

सुघटैः स्वच्चतोयेन रूपिणीभिश्चतसृभिः ।

स्नापयेत ततो मन्त्री मङ्गलानां विवृद्धये ॥ ५८ ॥

निर्मंत्सनादिकं कृत्वा स्नानं गन्धादिपूजितम् ।

रक्तवासोयुगाच्चन्नं हृदयेन सुधूपितम् ॥ ५९ ॥

पिण्डिकाकर्मकर्तव्यं माला मूलेन मन्त्रिता ।

लिङ्गशेषाश्मसञ्जाता सा प्रशस्ता प्रकीर्तिता ॥ ६० ॥

तृतीयांशेन लिङ्गस्य षाड्गुण्येन समन्विताम् ।

पिण्डिकान्तस्थभागेन मेखलां परिकल्पयेत्॥ ६१ ॥

तदन्तश्च त्रिभागेन खातं सर्वत्र कीर्तितम्।

प्रमाणादधिकं कार्यं प्रणालं दक्षिणे स्थितम्॥ ६२ ॥

परिवेष्टन् तृतीयेन भागेन परितिष्ठति।

विप्रान् साष्टाङ्गतो बाह्ये कार्यमभ्यधिकं शुभम्॥ ६३ ॥

ह्रस्वाह्रस्वविभागेन निष्कृतो पिप्पलस्य तु।

लिङ्गशेषद्दगङ्गानां नवगर्भान्विता शिला॥ ६४ ॥

ब्राह्मी रत्नयुता कार्या पीठस्याधाररूपिणी।

गर्भाधिकैर्विशुद्धन्तु तत् स्थितं चाग्रमण्डपे॥ ६५ ॥

कथायादिषु संस्थानं पञ्चगव्यादिभिस्तथा।

हृदयेन तु लिङ्गस्य सर्वकर्माणि कारयेत्॥ ६६ ॥

दिगस्त्रैस्तोरणन्यासः पताकानां च शस्यते।

वैभीतयवतो दद्यात् पीतं ध्वजसमन्वितम्॥ ६७ ॥

पिचुमर्दभवं याभिर्नववर्णपताकिकम्।

मुक्ताभासि पताकाढ्यं करंजं मकरध्वजे॥ ६८ ॥

रक्ता रुग्भुजसंयुक्तं महावार्षं धनेश्वरे।

द्वारपालान् पुरा पूज्य सन्निधीकृत्य तिष्ठता ॥ ६९ ॥

दिक्पालांश्च प्रपूज्यादौ मण्दपान्तश्च वेदिकाम्।

ससितां खट्वयोपेतां सतुल्यां सोपधानया॥ ७० ॥

खट्वान्ते सोपधानं तु शस्तमास्तरणं नवम्।

दक्षमूर्ध्वोत्तरायं तु लिङ्गं तत्रोपवेशयेत्॥ ७१॥

पलाशकुशवस्त्रेषु क्षेत्रस्थेष्वथवा शुभम्।

हृदयेन ततस्तस्मिन् नाशनं परिकल्पयेत्॥ ७२॥

विन्यसेत् तत्र रूपं तु तत्र तन्मूर्त्तिविद्यया।

सकलाङ्गसमोपेतं हृदयेनोपचर्यं तु॥ ७३॥

पाद्यादिधूपपर्यन्तैरर्घमुद्रावसानिकैः।

एवं निवेशितं लिङ्गमाच्छाद्यं पाण्डुराम्बरैः॥ ७४॥

ततः सुगन्धपुष्पाद्यैः सम्यक् पूजां प्रकल्पयेत्।

धूपदीपं निवेद्यं तैर्दत्तार्घो दिग् बलिं क्षिपेत्॥ ७५॥

हृदयेन पुरादिष्टं कर्म दिक्ष्वासु सर्वतः।

अधिवासजनं कर्म दृष्टादृष्टविधानतः॥ ७६॥

कुण्डे वह्निविधिं कुर्यात् सुगुप्ते सर्वमङ्गले।

अन्यस्मिन् वातमग्निन्तु शेषं कुण्डेषु निक्षिपेत्॥ ७७॥

लिङ्गं वा भैरवीयं यत् तस्य भिन्ना न योनयः।

येऽन्यभेदाः किं बहुभिः कुण्डमेकं प्रशस्यते॥ ७८॥

एकयोनिः परा काष्टा धाम्नां भवतोदिता।

तस्यां क्रिया विलीयन्ते क्रियान्ते सर्वयोगिनाम्॥ ७९॥

यस्मात् ततोऽतिविस्तीर्णं संक्षिप्तं च समं मतम्।

हिरण्यरेतसी शान्तं षडङ्गमथ भैरवी ॥ ८० ॥

इष्टा पूर्वविधानेन तनुर्माज्यादितः  क्रमात् ।

मूर्त्तिविद्याशतं हुत्वा चतुरस्त्रं कुशेन तु ॥ ८१ ॥

कथित्वा मध्यमं भागं स्पृश्योदो  गगनेन तु ।

अङ्गिनः शतहोमान्ते पूजाभागन्तु संस्पृशेत् ॥ ८२ ॥

मूलमन्त्रशतं हुत्वा मूर्ध्नः पादावसानकम् ।

सन्नतेन कुशाग्रेण स्पृशेद् वा परतत्वगः ॥ ८३ ॥

वामहस्तसमाक्रान्तं जप्तव्यं शतमेव च ।

भागे भागे तु चैकं वै शतं सर्वस्य शस्यते ॥ ८४ ॥

एवं सुमङ्गले काले लग्नोपचयसङ्कुले ।

निशि रुद्रोदये रौद्रं लिङ्गं स्थाप्यं महात्मना ॥ ८५ ॥

लिङ्गमूर्त्तिर्महाघोरा घोरनायकनाशनी ।

घोराणुभिर्घोरकाले स्थाप्य तेन घोरहा ॥ ८६ ॥

प्रासादब्रह्मसंसाध्यं तन्मध्ये यवमात्रकम् ।

प्रचाल्य तत्र लिङ्गन्तु स्थापयेत् साध्यसिद्धये ॥ ८७ ॥

द्विषद्  वैषां प्रतिष्ठ्यादौ हृदयेन भवादिना ।

वीरालं तदधो दद्याद् गर्तेषु शमनीं बुधः ॥ ८८ ॥

हरितालशिलादीनि धातूनि विनिवेश्य तु ।

सिद्धपुष्पं तथा तारं गोकर्णीं बुध्नतो न्यसेत् ॥ ८९ ॥

सहदेवा ं न्यसेद् वाथ प्रोक्ता नामप्यभावतः।

हृदा सर्वस्य विन्यासो यस्य मन्त्रो न चोदितः॥ ९० ॥

साधारणी  च मुद्रा तु या या प्राक् प्रचोदिता।

आसने शवपर्यन्ते मूर्त्तिभूतं तु विद्यया॥ ९१ ॥

विन्यस्य भैरवं लिङ्गं निरुद्धं सन्निधीकृतम्।

पाद्याद्यर्घक्रियाद्याप्ते विद्या देहावसानतः॥ ९२ ॥

अखण्डमण्डलं व्योम सिद्ध्युपादानलक्षणम्।

ततः शून्यसमायोगसम्प्रदायाच्च भैरवम्॥ ९३ ॥

पूरकं वासमुन्मूल्य शक्त्यान्ते यत्नतो गुरुः।

उपलब्धा न या लिङ्गप्रतिमां प्रति तिष्ठयेत्॥ ९४ ॥

न्यासत्रयोपयोगेन दंष्ट्रिण्या मुद्रयापि च।

लिङ्गभैरवतां याति संस्यातं ख संक्ष्यान्तं भैरवाम्बुभिः॥ ९५ ॥

स्नानद्रव्यं न हिंसेत यल्लिङ्गस्याङ्गिकं भवेत्।

स्वीकारेणैव यद् दत्तं वर्ज्यं नैवेद्यजं चरम्॥ ९६ ॥

मा उमेश गणादीनां सुराणां प्रतिमाश्च याः ।

मालामूलेन ताः सर्वाः स्थापिताः सिद्धिदाः स्मृताः॥ ९७ ॥

द्वैतात् स्वां बिन्दुविज्ञानान्मिश्रां नादात्मिकां तथा।

शाक्ताश्चाद्वयतां यान्ति चुम्बकेच्चावशान्न तु॥ ९८ ॥

न द्वैतं नाद्वयं किञ्चिन्नमिश्रं परमार्थतः।

शम्भुना चित्तभेदो यः प्राणिनामनुवर्त्तितः ॥ ९९ ॥

द्वाराष्टांशपरित्यागात् सोंऽशस्त्र्यंशे कृते बुधैः ।

भागाभ्यां प्रतिमा कार्या पीठं भागेन कारयेत् ॥ १०० ॥

स्नानामलां कृतां चैव पिण्डिकां मूर्त्तिविद्यया ।

संस्थाप्य साधकेन्द्रस्तु तत्स्थं भोगं प्रपूजयेत् ॥ १०१ ॥

लिङ्गवेदीसमायोगप्रतिष्ठासास्वशक्तितः ।

कृता व्याससमासाभ्यां साधारणफलप्रदा ॥ १०२ ॥

सम्प्रदायसमानत्वाल्लघीयसि गरीयसी ।

एवं प्रतिष्ठिते लिङ्गे चुम्बकादीन् प्रपूजयेत् ॥ १०३ ॥

आत्मचित्तानुसारेण भोज्यं कृत्वा विशेषतः

दक्षिणां विविधां दत्वा श्रान्तलोकं क्षमाप्य तु ॥ १०४ ॥

तत्र विन्यस्य साध्याणुं लिङ्गे स्वायम्भुवेऽप्यथ ।

गुप्तगर्भे विरोधेन निर्वहेन्मन्त्रसेवनम् ॥ १०५ ॥

निर्गूढः सिद्धिमाप्नोति निर्व्याजं भैरवागमे ।

लिङ्गादृतेन चासन्नं फलमन्यद्धि क्सामप्रतम् ॥ १०६ ॥

निर्गमः क्षपितैरासनन्यस्मादाश्रया नराः ।

व्यक्ताव्यक्तमुखं शम्भुं लिङ्गमूर्तिं विहाय तु ॥ १०७ ॥

दृष्टादृष्टफलावाप्तिचिन्ता येषां हि देहिनाम् ।

रत्नाश्मधातु लिङ्गानां तेषां शस्तः परिग्रहः ॥ १०८ ॥

एवं हि चित्रसिद्धीनां साध्यानां साधनानि तु ।

यान्युक्तानि महेशेन तैस्ते षाध्यास्तु साधकैः ॥ १०९ ॥

सामान्येन विरक्तैस्तु विशेषेष्वपि निस्पृहैः ।

प्राप्यते भैरवं धाम विशेषेण महाद्भुतम् ॥ ११० ॥

गुरुमन्त्रेषु भक्तानां स्वाधिकारः क्रियावताम् ।

न तद् दुरापं विश्वे तु यत् स्यान्मोघमशालिनाम् ॥ १११ ॥

सुरतरुमञ्जरीकर्णपूरशोभितवक्त्रमण्डले ।

मन्मथरतिविलासतनुविकासितनीलोत्पलेक्षणे ॥ ११२ ॥

गुरुजनयोग्यवस्तुनि च य सकलास्तव चोदिताःप्रिये ।

चोम्मक रु च्चोष्मक वर्जितं तदपि शृणुष्व समासयोगतः ॥ ११३ ॥

इति भैरवस्रोतसि विद्यापीठे - शिरश्चेदे श्रीजयद्रथयामले महातन्त्रे

चतुर्विंशतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां लिङ्गप्रासादनि

र्णयविधिः सप्तचत्वारिंशतिमः पटलः ॥ ४७ ॥

अष्टचत्वारिंशतिः पटलः ।

श्रीभैरव उवाच ।

निर्णीता पूर्वसेवानां चर्या चरणशालिनाम् ।

अन्योन्यं योगिनीवीराणां शृणु संभाषणादिकम् ॥ १ ॥

स्नात एव कृतन्यासो दीप्तास्त्रो च दिङ्मुनिः ।

हृन्मखं पूज्य विधिना स्थूलैर्वर्णात्मकैर्गुणैः ॥ २ ॥

अंतरंगच्युतो योगी बहिरङ्गपरायाणः ।

अथ वस्तुस्थितिस्थं यन्निराचारत्वमादरात्॥ ३॥

वर्धमानं हि तद् यागमिष्ट्वा पूज्या तु पेषणी।

कञ्जिनी स्थानमागत्य पूज्य तां साधकेश्वरः ॥ ४॥

कुंभमायोमयं पूज्य सेहारीं चुल्लिमायजेत् ।

समीज्य मौसलीं मन्त्रीं कण्डनीं देहलीं ततः॥ ५॥

अथवा देहलीं नाभौ कण्डनीं हृदि मौसलीम्।

कण्ठे वक्रे च चुल्लीं तु सेहारीं भ्रूयुगान्तरे॥ ६॥

लम्बिके लम्बिकान्ते तु कुसुमायोमयं यजेत्।

कञ्जिनी द्वादशान्तर्गा पेषणी सचराचरे॥ ७॥

तस्याः परे निराचारं वर्द्धमानमुपासयेत् ।

ऊकारो देहलीप्रोक्तो हकारः कण्डनी स्मृता॥ ८॥

अकारो मौसली ज्ञेया चुल्ली खण्डेन्दुरिष्यते।

बिन्दुं सेहारिकां विद्धि जलं कुम्भं निरोधिकाम्॥ ९॥

आकर्ण्य कण्ठिनीनादः शक्तिरूह्या च पेषणी व पीषणी।

वस्तुमात्रं हि तद् ब्रह्म वर्द्धमानस्वभावगम्॥ १०॥

श्रीदेव्युवच।

भावानामपि यागानां नामान्येतानि सुव्रत।

गुणैःपरिभाषया वा यदि तद् ब्रूहि मे हर॥ ११॥

श्रीभैरव उवाच ।

यत् तद् देवगतं लिङ्गं प्राणशक्त्यापकर्षितम् ।

अधोर्ध्वं चारयोगेन चरते सर्वजन्तुषु ॥ १२ ॥

तस्य देहे लयो यस्तु विधिवत् तस्य द्व्यङ्गुलम् ।

अङ्गुलं देहली तत्र तत्तलं देहलीतलम् ॥ १३ ॥

स्वभावभूतां शक्तिं तु सलवद् देहलीतलात् ।

व्यायतस्वगुणान्तस्य मौसली नाम चोदितम् ॥ १४ ॥

यत्स्थाने सहते सो हि येषु चाशु वलते प्रिये ।

कण्डने तत् स्थितं यस्मात् कण्डनी प्रोच्यते ततः ॥ १५ ॥

अन्तरालीकृतं वक्रं प्राणाप्रानविवर्जितम् ।

चुल्ल्येव भवते यस्मात् तच्च चुल्लिस्ततो मता ॥ १६ ॥

देहाद् विरेचिता प्राणात् तत्स्थं सेहारिका यथा ।

भ्रूमध्ये संहरे ज्योतिरतः सेहारिकोच्यते ॥ १७ ॥

घण्टिका सकपाला तु कुम्भः कुम्भमुखं च यत् ।

तत् कपालबिलं प्रोक्तं तेन तत् परमामृतम् ॥ १८ ॥

विशोदुदकवत् तेन पूर्णतोऽम्बुघटः स्मृतः ।

कङ्कपालमिति प्रोक्तं तज्जनित्वा स्वगोचरे ॥ १९ ॥

संस्थितः सेव्यते यस्मात् तस्मात् सा कञ्जिनीक्रतुः ।

मलादिकं तु यत् पश्यं तत् सन्ध्याचलसंस्थिता ॥ २० ॥

पेषयेच्चारशक्तिस्तु यतोतो पेषणी स्मृता ।

देहेनाधारभूतेन नादेनाधिपिना सदा ॥ २१ ॥

पेषयेदात्मचैतन्यं यस्मात् तस्माच्च पेषणी ।

बन्धते तत् परिज्ञानाग्नि तमानाचितांचितिः ॥ २२ ॥

वर्द्धमानस्त्वसौ प्रोक्तो मानवृद्धिकराद् गुणात् ।

मानं सर्वज्ञता पुंसां ख पुसां सर्वकर्तृत्वसंयुता ः ॥ २३ ॥

तां वर्धापयते यस्माद् अतोऽसौ वर्धमानकः ।

मानन्तु सक्रिया सार्द्धं त्रिरभ्यधिकता तु या ॥ २४ ॥

सानतस्मिन् यतः प्रोक्तावतोऽसौ वर्धमानकः ।

मानस्यान्तर्गतां भोगां वर्धापयति लीलया ॥ २५ ॥

सेवितः साधकैर्यागैः प्रोक्तोऽतो वर्धमानकः ।

अप्रमेयभवोच्चेदो वृत्तिर्व्योमकृतस्थितिः ॥ २६ ॥

पेषणी न व त ह्यतीतो यो बोधोऽसौ वर्धमानकः ।

य एवं तत्त्वतो वेत्ति नवयागविनिर्णयम् ॥ २७ ॥

निशि संचारयोग्योऽसौ लभते दिव्यमेलकम् ।

मेलके चापि चर्चाद्यं लब्ध्वा सिद्ध्यति साधकः ॥ २८ ॥

नवयागपरिज्ञानी क्लिश्यते तत्क्रियोऽपि हि ।

जपहोमव्रतोपेतस्तपोनिष्ठव्रतोऽपि हि ॥ २९ ॥

एवं सर्वविदुर्गाशु शरीरः साधकेश्वरः ।

संयोगे न्यस्य वीरस्य वीरं जालानुतत्वतः ॥ ३० ॥

संलापे तन्त्रसंसिद्धैरालापैःसप्रियं मुदा ।

योऽन्वहं क्षेममुद्दिष्टं प्रतिक्षेमहतैः स्मृतम् ॥ ३१ ॥

हः हे ही क्वगतं ब्रूयात् फ फे कुत्र प्रयास्यसि ।

विच्चेच भावितस्तस्मिन् कस्य पुत्रोऽपि ह्लीमतम् ॥ ३२ ॥

कं व्रतं तेन प्लुः प्रोक्तं ब्लुः प्रदत्तं चकेन वै ।

ड्लुः कस्मिं स्वस्थितो मार्गे वुक्कोक्तानि च भाषया ॥ ३३ ॥

प्रतिसञ्चार्युवाच ।

दुर्गाटव्याः समायाता तद्वत् सत्या निवेदितः ।

अधुना प्रस्तुतं यानं भीमेश्वरदिदृक्षया ॥ ३४ ॥

भावितो ख भविता वर्धमानं च पेषण्यां जन्म मेऽनघ ।

देहली तु व्रतं मुख्यं तद् दत्तं तद्विदा मम ॥ ३५ ॥

उदक्तंभं यवा गत्वा दृष्टा सा काञ्जिनी मया ।

साधक उवाच ।

कः सखा यस्तु ते वत्स नित्यं हि पथि गच्चतः ॥ ३६ ॥

किञ्चायुधं वा स्थाने श्रान्तो विश्रमसे क्षणम् ।

ऊष्मा वा कुत्र ते ब्रूहि भैरवी योषितं यदि ॥ ३७ ॥

प्रतिसञ्चार्युवच ।

स्नेहिकारिक शाखोहमश्रान्ते स्थानकत्रयम् ।

संत्यज्यतामधिष्ठेशं क्रममूह्य घटाम्बुनः ॥ ३८ ॥

पानादप्यवितृष्णस्तु कञ्जिनीस्थः पिवाम्मयम् ।

ततस्त्रिस्थाश्रमत्यागे संस्थितो देहलीतले ॥ ३९ ॥

कृत्वा तु देहलीं लङ्घ्य पेषणीदर्शनात्मकः ।

प्रविशामि सुविस्तीर्णं वर्धमानं गृहोरम् ॥ ४० ॥

तत्र तद्देहसंस्पर्शमुखानन्दप्रचोदितः ।

सह तेन क्षणं स्थित्वा पिष्ट्वा पथ्यमनन्तकम् ॥ ४१ ॥

पेषण्यो तद् ग्रहं त्यक्त्वा निष्क्रान्तोल्लङ्घ्य देहलीम् ।

तत्तलाद् विनिर्वृत्तोऽहं सत्वरो मुसलायुधः ॥ ४२ ॥

सुरालयानि संपश्यन्नायतो क्षोदमण्डपम् ।

लम्बिनी मूलकण्ठाभ्यां क्षोद्य क्षोभ्यानि यानि तु ॥ ४३ ॥

दुष्कृतादीन्यतस्तस्मिन् भवामि विगतक्लमः ।

क्षोदनीलङ्घनेऽप्युक्तो यागोऽसौ वर्धमानकः ॥ ४४ ॥

आस्वादात् तस्य तच्चन्दं प्रागुक्तमुपजायते ।

बलीयसि महोच्चुष्मा यासौ चुल्लीव्यवस्थिता ः॥ ४५ ॥

अत ऊष्मार्थिना सेव्यो नित्यं चुल्ल्यात्मकः क्रतुः ।

सञ्चार्युवाच ।

साधु साधु महावीर भैरवाप्तविशारद ॥ ४६ ॥

अन्वितोऽसि न सन्देहो ज्ञातस्त्वं ं यागनिश्चयात् ।

के यागाः केऽत्रकाले तु भक्तसिद्धिप्रदायकाः ॥ ४७ ॥

का सिद्धिः सेवनैस्तैस्तु वद मे वसितं यदि ।

स्मितहास्यस्ततःप्राह सवचः प्रतिसाधकः ॥ ४८ ॥

देहली मौसली चैव कण्डनी या च संस्मृता ।

निशि यागत्रयं ह्येतद् विद्यासिद्धिप्रदायकम् ॥ ४९ ॥

पेषणीचुल्लिकायागौ सन्ध्योपास्यौ सदैव हि ।

विद्यामन्त्रोक्तसिद्धीनां तावुत्पत्तिकरौ मतौ ॥ ५० ॥

मध्यन्दिने समिष्टव्यो यागः सेहारिकात्मकः ।

विद्यातत्वस्थसिद्धीनां मानवानां प्रसिद्धये ॥ ५१ ॥

मध्यन्दिनोर्ध्वयामस्थ उदकुम्भाध्वरोर्चितः ।

मुद्रामण्डलमेवोक्तं सिद्धिसंपादकृद्भवेत् ॥ ५२ ॥

वासरस्यानुवीरांशे प्रेष्टव्यः कञ्जिनीमखः ।

गुह्यकेशपदावाप्त्यै काश्यपीनां च सिद्धये ॥ ५३ ॥

यतो दृक् सा त्रिसन्ध्या वा न तस्मिन् शततो दयात् ।

अतः सर्वार्थकृद् वीरो योगोऽसौ वर्धमानकः ॥ ५४ ॥

कालावयवहीनोऽसावुपादानाङ्गवर्जितः ।

यद् ध्यानं प्रोच्यते तन्त्रे तन्न वस्तूपचारतः ॥ ५५ ॥

तद्भावभावितानान्तु तन्नियोगेन सुव्रत ।

अवधानवशात् पुंसां सर्वं सर्वात्मकं भवेत् ॥ ५६

एवं संपादितप्रश्नं साधकैस्तैर्मुनिश्वरम् ।

यागस्थानेषु देहे तु पिपृच्छुरिदमुक्तवान् ॥ ५७ ॥

देवतादूतितदूतियोगिनीमातृकिङ्करात् दूतियोगिनीमातृकिङ्करान् ।

अनुचारा ः गणा येऽन्ये भुविस्था भूतिदायकाः ॥ ५८ ॥

सन्निधानास्तु के कस्मिन्स्ते योगे तत्प्रदर्शनम् ।

स्वदेहे लेशतो ब्रूहि येन प्रश्नं वदाम्यहम् ॥ ५९ ॥

प्रतिसाधक उवाच ।

व्योम्नि वामकरभ्रान्त्या यदि तेऽहं समन्वितः ।

प्रतीतो भोः महावीर तद्गृह्णामि शिखात्रुटिम् ॥ ६० ॥

शिखां संस्पृश्य मुण्डोर्ध्वे चिद्रो हस्ते निधापितः ।

भ्रूमध्ये पश्य मे हस्तं वक्रे च सकपोलके ॥ ६१ ॥

कण्ठे पश्य हृदिस्थं च पश्य नाभिं च सुव्रत ।

योगाष्टकसमाधानमाकाशान्ते प्रदर्शितम् ॥ ६२ ॥

वर्धमानमये तच्च शिखाग्रं पीषणीमतम् ।

सा शक्तिर्देवदेवस्य देवताधारलक्षणा ॥ ६३ ॥

तदर्धो द्वयङ्गुलं प्रोक्ता देहली दूतिकालया ।

सोव्यक्तो व्यक्तता ज्ञेया कञ्जिनी तु दशाङ्गुलम् ॥ ६४ ॥

अनुदूत्यरणिः सा तु योगिनी योगतो भवेत् ।

उदकुम्भात्मकोयोगो मूर्ध्नो घण्टावसानकः ॥ ६५ ॥

भ्रूबिन्दौ मातृवर्गस्तु यागे सेहारिकात्मके ।
खिन्नतृष्णसुखाकारवक्रे चुल्लाध्वरे स्थिताः ॥ ६६ ॥
किङ्कराश्चारुसंज्ञाद्याश्चारमौसलजे क्रतौ ।
तन्निपाताश्रयो यागः काण्डन्याख्यस्तु विश्रुतः ॥ ६७ ॥
सगणानामधिष्ठानं वीरेशेन प्रकल्पितम् ।
अनेन क्रमयोगेन सञ्चारे ये समन्विताः ॥ ६८ ॥
वन्दनाद्यर्घपूजाभिः कण्ठग्रहणपूर्वकैः ।
आलापैर्भाष्यगान्योन्यमेकगर्भक्रियात्मकैः ॥ ६९ ॥
भ्रमन्तस्ते महासिद्धिमाप्नुवन्त्यविचारतः ।
आगमोक्तविलोमेन सिद्धसञ्चरचारिणः ॥ ७० ॥
मन्त्रच्छिद्रादिदोषाणां भाजःस्युः सविनायकाः ।
इति भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं
शतिसहस्त्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां चुष्मालक्षणमहावीरसंभाषणं
अष्टचत्वारिंशतिमः पटलः ॥ ४८ ॥
उनपञ्चाशत्तमः पटलः ।
श्रीभैरव उवाच ।
भैरवस्तु मृगव्याधेः पुङ्गता सा तु भैरवी ।
विविक्तोसुस्तथा विद्या तारा मुद्रागणा मता ॥ १ ॥
मण्डलं कन्दरं ज्ञेयं मातरो रोरुशब्दगाः ।

योगिन्यः प्रोदिता गावः गोरूपाण्यपराणि तु ॥ २ ॥

शाकिनीवर्गपूर्वाणि कुलान्युक्तानि सूरिभिः ।

घोषोऽह्नो मृगिनी रात्रिर्निराभूः पिङ्गलं जलम् ॥ ३ ॥

सर्वभक्षी हुताशश्च वीरो वायुरिहोच्यते ।

रोचनं गमनं रक्तं घनसारं महाबलम् ॥ ४ ॥

मांसमुक्तं तथास्थीनि धातुशब्देन सूरिभिः ।

कीकषञ्च कपालन्तु विश्वं खट्वाङ्गमुच्यते ॥ ५ ॥

त्रयीमार्गं त्रिशूलं च रुच्यान्याभरणानि च ।

ग्रन्थान्येव च पुष्पाणि धूपो ज्ञेयः सुरप्रिये ॥ ६ ॥

गत्वा धृतिकराः प्रोक्ता धूपो बेतालघातकः ।

भूतानाञ्च बलिः प्रोक्तः पावनश्च भविष्यति ॥ ७ ॥

वरं धाता च नैवेद्यं सामान्यं च निवेदनम् ।

निर्माल्यं चाप्यभोज्यं तु वितानं याग उच्यते ॥ ८ ॥

यागाङ्गानि बलान्यत्र घण्टाद्या हरणी मता ।

डमरूको महानादो घण्टा संवरणी तथा ॥ ९ ॥

वोक्काणको गुणी प्रोक्तः प्रपञ्चः पञ्चकः स्मृतः ।

स्ववन्धुः प्रोच्यते भ्राता स्वसा वा भगिनी स्मृता ॥ १० ॥

भिक्षापात्रं सुरचितं पुष्पपात्रं महामुखम् ।

लंपाकं चाप्यलाबुं वै प्रायश्चाप्यतिथिर्मतः ॥ ११ ॥

कटकं मण्डलं विद्धि व विद्धिः केयूरं चार्द्धमण्डलम्।

पुष्करञ्च व रु पुष्परञ्च श्मशानं तु वत्स्यं चैव चतुष्पथम्॥ १२॥

रमणी च स्मृता दूती रागों नो रुचिरो भवेत्।

समर्थो दैशिकः प्रोक्तो ब्रह्मगर्भश्च साधकः॥ १३॥

पुत्रको भूतशर्मा च सा विशर्मा च पूर्वतः।

महेश्वरकुलालञ्च कुलमन्वय उच्यते॥ १४॥

शूलप्रोतं स्मृतं चत्रमुद्वन्द्वो देवमूर्ति च।

सुस्थितं चैव संज्ञेयं कबन्धं शस्त्रसूचितम् ॥ १५॥

संचारिणौ च चरणौ हस्तौ चाश्वपकारिणौ ।

तुन्दञ्च जठरं प्रोक्तं सर्वाङ्गं घनमिष्यते॥ १६॥

काननं च स्मृतं वक्रं शिरः केशरुहं मतम्।

सांदिकौ श्रवणौ ज्ञेयौ नासिका मोदिनी स्मृता॥ १७॥

दारिका दशना ज्ञेया ज्योतिष्केन यते स्मृते।

पद्मनालं स्मृतः कण्ठस्तल्प्यं वक्षस्तथोच्यते ॥ १८॥

हृदयं जीवगमनं मण्डलांकौ पयोधरौ।

गुह्यं रतिधरं ज्ञेयं रतिश्चैव कुंकुदकम् ॥ १९॥

शङ्करश्च स्मृता शेष सर्वकर्त्ता च तद्बलम्।

पुण्यानि यवसादीनि सर्वदेहोद्भवानि च॥ २०॥

मृतं पुष्पितमित्याहुः स्थिरं बुद्धं प्रकीर्तितम्।

आगतं वर्त्तितं विद्धि वीतं संबरितं विदुः ॥ २१ ॥

लक्षितं भक्षितं चैव भक्षितं लक्षितं तथा ।

प्रतिष्ठितं स्थितं ज्ञेयं गतमुत्पतितं विदुः ॥ २२ ॥

निष्पन्नं बन्धुरं ज्ञेयमनिष्पन्नमबन्धुरम् ।

पीतन्तु स्मरितं विद्धि वार्तं विस्मरितं मतम् ॥ २३ ॥

संवाहितं प्रनष्टञ्च चिन्नं भङ्गीकृतं तथा ।

पाटितं भाजितं प्रोक्तं विमुक्तञ्च विशृङ्खलम् ॥ २४ ॥

संसर्गो मेलकः प्रोक्तो लपितं प्रोक्तमुच्यते ।

लघुं वन्ध्यं सहल्लञ्च बृहज्जीर्णमुदाहृतम् ॥ २५ ॥

सङ्कटं पटलं विद्धि असङ्कटमनातुरम् ।

गीतं तु रुदितं ज्ञेयं रुदितं गीतमुच्यते ॥ २६ ॥

हास्यं कोलाहलोल्लोलो ह्यष्टहासः सदाचितिः ।

स्त्रीरन्तिको नरो नाद ऊर्ध्वान्तं यजनालयम् ॥ २७ ॥

कृत्तिका च स्मृता सन्ध्या सन्ध्यामन्दाकुली रविः ।

रिंचिकश्चन्द्रमानी उमालयः परिकीर्तितः ॥ २८ ॥

व्यवहार्हत्वमी प्रोक्ताः चुष्मकास्ते समासतः ।

अन्योन्यं साधकेन्द्राणां सहस्रानुचरः प्रिये ॥ २९ ॥

यदात्मकास्तथान्येषु भाषाभूतक्रियात्मजः ।

निजार्थापादका ज्ञेया वे तत्रैव च सर्वतः ॥ ३० ॥

गुरुजनफलसाधनं यद् विहितमिदं तदशेषकन्दरार्यैः ।

शृणु तदपि विशुद्धबोधसाध्ये समयिनि चक्रमवर्तनाविशेषम्॥ ३१॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं

शतिसाहस्रे प्रथमषट्के चतुर्विंशतिसाहस्रे प्रथम षट्के श्रीकालसङ्कर्ष

ण्यां नियतव्यवहारच्चुष्मा एकोनपञ्चाशत्तमः पटलः॥ ४९॥

पञ्चाशत्तमः पटलः।

श्रीभैरव उवाच।

समयाद् दैशिकाद् योक्तास्तथा चाराश्च ये मया।

समस्तास्तेऽनुपाल्या वै पुत्रकेणोत्तरेण च॥ १॥

योगाभ्यासो ॑ नु सेवा वा काम्या प्रोक्तावधारणम्।

उपास्यमथवा लिङ्गं गुरुणा पुत्रकेन तु॥ २॥

वन्दतोऽस्य पुनर्वन्द्या नित्यं हि गुरुसेवनम्।

नतगो न हितस्तस्य यावत् तस्याः समीहितम्॥ ३॥

गुरुकर्मविरोधेन पूजाद्यं तस्य शस्यते।

पुत्रकस्यापि युक्ते यं वृत्तिर्गुरुपरिग्रहम्॥ ४॥

शेषं प्रचोदितं तस्य यदि प्राणितिनो गुरुः।

अशेषाचारलुप्तोऽपि समयघ्नोऽपि यो भवेत्॥ ५॥

सोऽपि स्वपदमायाति गुरुसेवावशात् प्रिये।

सर्वमेव हि संपूर्णमपि यत् कुत्सितं कृतम्॥ ६॥

गुरुराश्रयभक्त्या तु भवत्यत्र सुनिश्चितः।

भवोदन्वति क भवोदंन्वति मज्ज्ञाने याति भूतमकण्टकम्॥ ७॥

त्यजन्ति गुरुपन्थानं ये ते कृच्छ्रे पतन्तिहि।

कस्यचित् केनचिल्लोके कथंचिद् भवति क्षयः॥ ८॥

सर्वस्य कर्मणो मुक्त्वा सदसद्गौरवं हि यत्।

यस्तु तस्मादुपासीत प्रयत्नेन गुरुं बुधः॥ ९॥

निर्व्याजं भोगमोक्षाभ्यां न ह्यन्यत् सुखसाधनम् ।

विपत्तौ प्रेतशुद्धिस्तु जठरक्लेशवर्जिताम्॥ १०॥

विदध्य भैरवाग्निञ्च संस्कुर्याच्च चतुष्टयम् ।

केचिदन्त्येष्टियोगञ्च  साधकं ते वदन्ति हि॥ ११॥

समयाद्यनुपत्त्यर्थं केचित् संस्कारमेति हि।

मन्त्रसंस्कृतदेहानां वामवन्हौ विसर्जनम्॥ १२॥

शस्तमत्र किमन्त्येष्ट्या भोगपुण्यं यतोऽनुदृक्।

साधके वा सहायत्वं युक्तं ताभ्यामलोलुपे॥ १३॥

तत्साध्यसाधने निष्ठा का नित्या अशठाशयात्।

यच्चन्ति सुखसन्तानमुभाभ्यामुभयात्मकम्॥ १४॥

उभावपि हि वीरेन्द्रौ न्द्रा क्रियया समुपासितौ।

मन्मतादिसुखदान्तगतानामुक्तमेतदधिकारचतुर्णाम्।

वृत्तमुन्नतिकरं सुसाधनं तत्र सर्वगुणभाजि सुतन्त्रे॥ १५॥

इति भैरवस्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विं
शतिसाहस्रे प्रथमषट्के श्रीकालसङ्कर्षण्यां साधकादिचातुर्वर्ण्यवृत्तवर्णनं
पञ्चाशत्तमः पटलः ॥ ५० ॥

एकपञ्चाशत्तमः पटलः ॥

श्रीदेव्युवाच ।

ज्ञानेनानन्तवीर्येण मनस्तोषितवानसि ।
व्यापारशेषयुक्तेन ममाव्याजेन शङ्कर ॥ १ ॥
तमोघनाघनालीनां प्रचण्डज्ञानमारुत ।
श्रुताश्चाप्यज्ञनेनानात्र असकृद् योगकेसरी ॥ २ ॥
प्रचण्डभवमार्तण्डसैंहिकेन तनुक्रिया ।
चर्याश्चानन्तदुःखानां भिषग्रूपावधारिताः ॥ ३ ॥
यच्च किञ्चिज्जगत्यत्र प्राणिनामुपकारकम् व ख पाणिकारिकम् ।
तत् सर्वं विदितं नाथ प्रसन्ने त्वयि शङ्कर ॥ ४ ॥
किन्त्वेकवचनं नाथ प्रष्टव्यं विद्यते मम ।
या सा पूर्वं त्वयाख्याता विद्या सप्तादशाक्षरी ॥ ५ ॥
यागविस्तरतः सा तु नेष्टा मन्दधियां भवेत् ।
तस्मात् समाससाध्यानां स्फुटोद्धारार्थविस्तरा ॥ ६ ॥
ब्रूहि मेऽन्धकदेहासृक्स्रुतहृद्याम्बुपानक ।

श्रीभैरव उवाच ।

अजीवकटसंयोगात् पञ्चस्था न निपातितः ॥ ७ ॥

षधठरित्रिकं तस्मात् स्वर्गेयादुन्नतो जपेत् ।

चं हामहर ईमञ्च मन्त्रं सप्तदशाक्षरम् ॥ ८ ॥

विपरीतप्रयोगेन विधिना तु समुद्धरेत् ।

भुक्तिमुक्तिप्रदं प्रोक्तं सर्वदैव हि जापितम् ॥ ९ ॥

एकवीरा महाविद्या मन्त्रं वै चिन्तयेत् सकृत् ।

प्राणायामेन विधिना न्यास एवंकृतो भवेत् ॥ १० ॥

नानया सदृशी विद्या त्रिषु लोकेषु विद्यते ।

यदा लक्षत्रयं जप्ता संप्राप्तसमयेन तु ॥ ११ ॥

तदा सर्वाणि कर्माणि साधयेन्नात्र संशयः ।

श्रीदेव्युवाच ।

प्राणायामो विधिः प्रोक्तो न्यासादीनां त्वया हर ॥ १२ ॥

समयाः न प्रविज्ञाताः संक्षिप्यातुरलक्षणम् ।

श्रीभैरव उवाच ।

प्राणविद्यासमुच्चारैरायामः परिकीर्तितः ॥ १३ ॥

वराङ्गाद्यावत्पादान्तं प्राणपूरकयोगतः ।

प्राणायामविधानेन न्यासोऽयं स्वघनादिकः ॥ १४ ॥

न्यासस्थानेषु सर्वेषु प्रयुक्तः फलदो भवेत् ।

पाद्यादिनोपचारेण दृष्टमार्गेण मन्त्रिणा ॥ १५ ॥

अथवातिसमासेन विद्यया ह्येकवीरया ।

शरणक्रिया व शरणंक्रिया विधानानि शृणु देव्यमलानि तु ॥ १६ ॥

पञ्चशाखाः सकृत् स्पृष्ट्वा स्पृशेदपघनं  सकृत् ।

सप्तजप्तोऽञ्जलिः पुष्पपात्रान्तस्थोऽर्घकृन्मतः ॥ १७ ॥

स एव स्थण्डिले क्षिप्त्वा आसनत्वविधायकः ।

उच्चाराभ्यधिकः सो हि कायकृन्न बहिः पुरः ॥ १८ ॥

स एव हि समाख्यातो विद्यादेहपरत्वया ।

सन्ध्यावृतो यो दशभिः सर्वा चैवोपचारिका ॥ १९ ॥

चरकायौ सकृत् स्पृष्ट्वा त्रिविधोऽर्घः कृतः प्रिये ।

आसनाद्यत्रिरुच्चारात् सर्वमेव क्रियावहम् ॥ २० ॥

सकृदुच्चारणाद्वाथ यागस्थानेषु सर्वतः ।

क्रियावहं साधकानां यागसिद्धिः  फलैषिणाम् ॥ २१ ॥

जपध्यानरतानान्तु साधकानां क्रियावताम् ।

विद्येयं साधयेद् यत् तान् तदत्र विषमं न हि ॥ २२ ॥

प्रथमे तु ससंपूर्णा द्वितीयेऽन्त्याक्षरोज्झिताम् ।

द्वाभ्यां चैव तृतीये तु चतुर्थे च त्रिभिस्तथा ॥ २३ ॥

चतुर्थे पञ्चमे षष्ठे पञ्चभिः परिवर्जिताः ।

सप्तमे षड्भिरेवं तु सप्तभिश्चाष्टमेऽथवा ॥ २४ ॥

अष्टभिर्नवमेनैव दशमे दशभिस्तथा ।

एकादशे द्वादशे च दशैकार्णविवर्जितम् ॥ २५ ॥

व्यक्तं द्वादशभिर्वर्णैरन्तिमैस्तु त्रयोदशैः ।

चतुर्दशे तु त्रिदशैस्तथा पञ्चदशेऽपि च ॥ २६ ॥

चतुर्दशभिर्वर्णानामूच्चारैर्वर्णकैर्जपेत् ।

षोडशे पञ्चदशभिः षोडशभिः सप्तदशैः ॥ २७ ॥

उच्चारोऽष्टादशाख्यो यं यः सर्ववर्णैः परिच्च्युते ।

स्वाभाविकीं जपेद् विद्यां यागे वै वर्धमानके ॥ २८ ॥

पेषिण्यामुन्मनीं प्रेयां काञ्चिन्यां च मनोन्मनीम् ।

मनोमयीं कुम्भमुखे वर्द्धन्यां शब्दरूपिणीम् ॥ २९ ॥

सूक्ष्मां बिन्दुस्वरूपाञ्च चुल्लीयागे जपेत् सदा ।

द्विरभ्यासस्वरूपाञ्च मौसलीं सवने जपेत् ॥ ३० ॥

सूर्याग्नि सोमसंपृक्त लाभामुलूखले ।

तद्गतां कुरुरूपाञ्च देहलीयागगां यजेत् ॥ ३१ ॥

जपप्रोच्चारणेनात्र यागानां सन्निधानता

सृष्टाभिधानगाक्षाणां मौलिकायाश्च चालनम् ॥ ३२ ॥

नवयागगता विद्या मध्यान्मेया उपासिता ।

स वीरो वीरवीर्यस्य भाजनं स्यादयत्नतः ॥ ३३ ॥

अन्तरङ्गविहीनानां बहियागैकनिश्चयात् ।

नासन्नफलदं किन्तु न चाविघ्नं प्रजायते ॥ ३४ ॥

किं तस्य बहुभिः क्लेशैर्जपव्रतक्रियात्मकैः ।

स्वाम्यात्मा येन चरितो नवयागविनिर्णयः ॥ ३५ ॥

तस्मात् सर्वप्रयत्नेन सिद्धिकामस्तु साधकः ।

नवयागविधानेन विद्याभेदं समभ्यसेत् ॥ ३६ ॥

नासौ सुदुर्लभा सिद्धिर्यानया सिद्ध्यते न हि ।

अद्वयावस्थिता सिद्धिर्द्विर्भावत्व विमुक्तये ॥ ३७ ॥

प्रशान्तरूपिणीं देवीं चुल्लीयागे महेश्वरि ।

कर्मणां सुप्रसन्नानां भक्ता सिद्धिकरी भवेत् ॥ ३८ ॥

मिश्राणामुदकुम्भस्था क्रूराणां मुसलस्थिता ।

अथ किं बहुनोक्तेन वासनाबलतः प्रिये ॥ ३९ ॥

सर्वं यागेषु संस्थिता साधयेज्जपात् ।

सत्यंशङ्कालवे ताभिर्योगयन्त्र विवर्जिताः ॥ ४० ॥

साधयेत् सर्वकर्माणि भावाशयवशेन तु ।

अथातो योगमाणिक्यं वीर्यं वच्मि तमोहरम् ॥ ४१ ॥

स्वल्पक्कमफलं वच्मि साधकानां प्रसिद्धये ।

विश्वादिकां विलोमेन शक्त्यन्ता च न लौकिकी ॥ ४२ ॥

कर्मणो विन्यसेद् विद्यां पूर्ववत् पाञ्चभौतिके ।

विधेयाशु च तां न्यस्य सव्यकाष्ठामुखस्थितः ॥ ४३ ॥

कृतालंकरणो मन्त्री हृदा संप्रोक्षते सकृत् ।

स्थण्डिले सप्तजप्तन्तु फलयोनिं विनिक्षिपेत् ॥ ४४ ॥

महोत्पलावसानं तदासनं परिकीर्तितम् ।

तत्रानुलोमतो विद्यां पुरभूतां निवेशयेत् ॥ ४५ ॥

तदूर्ध्वे पुष्पसंपूर्णं सप्तजप्ताञ्जलिं क्षिपेत् ।

भैरवोपपदव्याप्तं विद्यया विपरीतया ॥ ४६ ॥

प्रोक्तोपचारनिर्णीतो भैरवाय गणेश्वरः ।

कालसङ्कर्षणो भीमो योगसिद्धिप्रदायकः ॥ ४७ ॥

तस्योत्सङ्गगतां देवीं कालसङ्कर्षणीमुमाम् ।

आवाहयेद् यथापूर्वमनुलोमपदक्रमात् ॥ ४८ ॥

पूर्वाकारगतां देवीं सर्वकामप्रसाधिकाम् ।

ह्रींकारादि उकारान्तैर्विद्याद्यैः पञ्चभिर्गुणैः ॥ ४९ ॥

पूजयेत् तत् पुरोद्दिष्टं परं मिथुनपञ्चकम् ।

पारावते पञ्चपत्रे वीरपीठविमर्दकम् ॥ ५० ॥

तदन्ते द्वादशारं यन्नलिनं केसराकुलम् ।

मिथुनानि तु पूज्यानि दश द्वे चैव तत्र तु ॥ ५१ ॥

विद्यादिभूतबीजानामवसाने सुवर्णकैः ।

यः व यो फडन्तक्रमेणैव द्वादशारं प्रपूजयेत् ॥ ५२ ॥

अक्षयेन तु बीजेन त्रिपर्वा योजितो गणः ।

प्रपूज्य तु महायोगे यदि चित्तं समुत्सहेत् ॥ ५३ ॥

आदियामलमेतद्धि सर्वकर्मविधिक्रमम् व सर्वक्रम- ।

द्रव्यमुद्राक्षमालानां पूर्वोक्तैः साधनैः प्रिये ॥ ५४ ॥

अनायासेन साधूनां सर्वसिद्धिफलावहम् ।

त्रयाणामपि सिद्धीनां जगत्यत्र वरानने ॥ ५५ ॥

न तद् दुरापं वीराणां यदस्मान्नेष्यते मखात् ।

लक्षत्रयेण मुख्या तु द्वाभ्यां चैव तु मालिनी ॥ ५६ ॥

नियुतेनाधमानां तु योगेऽस्मिन् मूलयामले ।

न चास्मात् सारभूतेऽन्यस्तन्त्रेऽस्मिन् गुह्यकार्चिते ॥ ५७ ॥

येऽत्यन्तकल्मषग्रस्ता येऽन्येऽस्मिन् मुद्रिताः प्रिये ।

तन्त्रेऽस्मिन् ते हि सिद्ध्यन्ति मुक्त्वा रावणसैन्धवौ ॥ ५८ ॥

देहसिद्धावयोग्यौ तु न तु निर्वाणवस्तुनि ।

जयद्रथ उवाच ।

पिण्डसिद्धिरसानान्तु स प्रपञ्चायते हर ॥ ५९ ॥

अतस्तुभ्यं प्रसादेन निर्वृतिं येषु पुष्कलाम् ।

अन्ते प्राणपरित्यागः सुखेन च महेश्वर ॥ ६० ॥

स्वयमेव तृषार्त्ता हि तच्चिष्याणां सुमेधसाम् ।

सकारुण्यमिदं श्रुत्वा वद सैन्धवभाषितम् ॥ ६१ ॥

कृपयाक्षिप्तसंमोहः परार्था च द्विरागया ।

वत्स तेन महारौद्रों यन्मोहो मयि संस्थितः ॥ ६२ ॥

गतायुस्तेन सुव्यक्तशिवत्त्वस्त्वं विष्यति ।

श्रुत्वैतदीश्वराद् वाक्यं परमानन्दकारकम् ॥ ६३ ॥

उत्थाय नृपशार्दूल प्रणम्याष्टाङ्गकं हरम् ।

गौतमीं च पुनर्नत्वा भूयसा परमां जपन् ॥ ६४ ॥

प्राहेशः परितुष्टोऽस्मि सर्वाकारेण वस्तुना ।

ज्ञानपादादिना देव चर्यापादविरागिणा ॥ ६५ ॥

विमलवारिसरित्प्लवधारिणा शशिकलाङ्कितशेखरशोभिना ।

दशनकान्तिविवर्धितकान्तिना हतसमस्तजगद्दृप्तमूर्तिना ॥ ६६ ॥

कनककुण्डलराजितवक्त्रया विकसितामलपङ्कजनेत्रया ।

विहितधामवपुःशतकान्तया ॥ ६७ ॥

सुगतिमेकसुशर्मविशारिणा ।

भवमहाधिमहो जपरूपिणा मलभुजङ्गमहामिषभक्षणा ॥ ६८ ॥

विविधदुष्कृतदारुविदारिणा मृतकधामपरामृतकारिणा ।

दनुमहीधरनिर्झरवारिणा मुदितमातृगणोन्नतिभाजिना ॥ ६९ ॥

नयनवह्निशिखापरितापिना उडुपरिश्रुतदिव्यमहाम्भसां ।

निकरजीवितकन्दलहुंकृतैरतिभयङ्करभैरवरूपिणा ॥ ७० ॥

विविधकन्दफलतृणचारिणा सकलमातृदितिप्रविजृम्भिणा ।

विषमकालगवाम्यतिवस्तुना अमितवीर्यबलेन विषाणिना ॥ ७१ ॥

जगति कारुणिकेन महात्मना कृतमनन्तगुणं मनसीप्सितम् ।

सकलजन्तुजनस्य विशेषतः सकरुणेन महेशसमत्वया ॥ ७२ ॥

अवाप्तसर्वसन्देहो दिव्यज्ञानतमोमयः ।

प्रसन्नेनासमाक्षेण हैमवत्या च नित्यशः ॥ ७३ ॥

रत्यानन्दितसर्वाङ्गधृतरोमाञ्चकञ्चुकः ।

प्रणम्य दण्डवत् पादौ भूयो भूय उमेशयोः ॥ ७४ ॥

प्रलब्धवरदानश्च ताभ्यां पृथ्वीश्वरो गतः ।

चुम्बकत्वमनु प्राप्य सर्वाधिकृतसप्तमः ॥ ७५ ॥

सोऽनुग्रहपरे लोके संगृह्य त्रिदशैः शतैः ।

कल्पमेकन्तु द्वार्द्धेन शतेनान्यं निराकुलम् ॥ ७६ ॥

मुनीनां मानुषाणाञ्च प्रभोऽस्मात् तन्त्रसागरात् ।

जयद्रथे ं गते क्षोणीं ी प्रोवाचेत्थमुमा पुनः ॥ ७७ ॥

कियती सूत्रसंख्यास्य चोदितास्य च यो हरः ।

धारको वाग्रतः कोऽस्य किं फलं वा श्रुतेऽस्य तु ॥ ७८ ॥

पूजितस्य च वीरेश कल्पस्यातिबलस्य तु ।

श्रीभैरव उवाच ।

सहस्रयुगलेनात्र विद्यापादः प्रतिष्ठितः ॥ ७९ ॥

क्रियापादस्तथैवं हि योगाख्यं पञ्चभिः शतैः ।

चर्यापादसहस्रेण सार्द्धेन गदितः स्फुटः ॥ ८० ॥

धारकः प्रथमं चास्य द्वापरे तु जयद्रथः ।

योगिनीगर्भसंभूतो गणोऽयं भृङ्गिना पुरा ॥ ८१ ॥

गन्धमादननामा तु शप्तो रूष्टेन पार्वति ।

श्रीदेव्युवाच ।

किं कोपकारणं नाथ निर्जलस्य सुरार्चित ॥ ८२ ॥

चालितो येन वीरेश गणोऽयं गणमण्डलात् ।

श्रीभैरव उवाच ।

विरूपं मांसहीनञ्च करालं दीर्घकन्धरम् ॥ ८३ ॥

दृष्ट्वा तु रूपं सहसा हसितं तेन गर्वितम् ।

ततो रुषा प्रपूर्णेन भृङ्गिना रजसा कुलम् ॥ ८४ ॥

मृत्युर्भूयोजनं मर्त्यं यास्यसीत्युदितं वचः ।

तत स्तुतोऽतिभीतेन तेन भृङ्गिनुतेन च ॥ ८५ ॥

ततस्तेन प्रसन्नेन सत्कृतो मण्डलाधिपः ।

प्रोक्तश्च कुलजागर्भे तव जन्म भविष्यति ॥ ८६ ॥

तस्मिंश्च शाङ्करं ज्ञानं वामाचारपरायणम् ।

वामायाः संप्रसादेन वामेश्वरमुखोद्गतम् ॥ ८७ ॥

वामेऽथ पूजितं वामं वामेशीनां गृहे शुभम् ।

वामवीर्यचराणान्तु सुप्रतिष्ठं भविष्यति ॥ ८८ ॥

कलौ युगे महाघोरे दुष्टप्राणिगणाकुले

दक्षादयो महावीरा योगिनीकुलसंस्थिताः ॥ ८९ ॥

शाम्यन्ति शुद्धदेहेभ्यो वीरेभ्यो जपहोमतः ।

योगिनीगर्भसंभूता ये वीराः कुलमाश्रिताः ॥ ९० ॥

तस्यावतारका ः मर्त्ये तेभ्योऽन्ये युद्धमूर्त्तयः ।

देवतातन्त्रमेतद्धि योगिनीगणसेवितम् ॥ ९१ ॥

नाभाग्यैर्लभ्यते मन्त्रैस्त्रयम्बकेच्चाविवर्जितैः ।

त्वमिच्चसि महाभागे त्वया संचोदिता यतः ॥ ९२ ॥

अतः प्राप्यमिदं ज्ञानं तेन पन्निलसूनुना ।

भगमुख्यमनुष्ठानादह्लायैवामृतप्रदम् ॥ ९३ ॥

स्वाश्रितं सर्ववस्तूनां प्रबोधाय विपर्ययात् ।

पूजितं परया भक्त्या हयमेधफलावहम् ॥ ९४ ॥

किं तस्य बहुभिः कल्पैः प्रतिकल्पक्रियेक्षकैः ।

यस्यायं सर्वविद्याधृक् षट्सहस्रे प्रतिष्ठितः ॥ ९५ ॥

कल्पप्रश्नपदाभासवाक्यं वच्मि प्रभालय ।

उदेति दर्शिताशेषपदार्थैः सप्तधातुकैः ॥ ९६ ॥

योऽसावीशः स्वभावात् सुवितनतभवः पूरिताशेषविश्वो ।

योऽत्पन्नो निष्प्रपञ्चो निजबलनिलयो दर्शितैः साधकैस्तै ः ॥ ९७ ॥

स्थानिस्वन्तर्गतश्चाप्यविहितविभवः सुस्थितो दुःस्थितश्च ।

प्रोक्तो यो वापि दुर्गैरजनि महसि गाः स्थूलसूक्ष्माः ॥ ९८ ॥

पीठानां या च संस्था विमलमहासि यो भैरवानां विभागः ।

ये धर्माः पुद्गलानां परगुणविहिताश्चेश्वराये ह्यनन्ताः ॥ ९९ ॥

भावा ये प्रत्ययाख्यास्त्रिगुणयुगलगास्तंत्रपूर्वश्च ।

प्रोक्तो दृश्यार्थयोग्यो निगदितमखिलं तच्च वीरागमस्थम् ॥ १०० ॥

यदि मृगयसि बीजं बीजमेवात्र साधुः

ननु यतसि पदार्थास्तेऽत्र क्षेत्र सुष्टु प्रतीताः ।

अभिलषसि सुतत्त्वं यत्नहीनं तदत्र

मनुफलमविचार्यं वाञ्छसेत्रैव तच्च ॥ १०१ ॥

स्वर्लोकेशाधिपतिवदनाम्भोरुहास्वादबिन्दुं

वीरस्येच्छाजवनवशतः प्रच्युतं विश्वखाते ।

पीतं भूभृद्वलयमधुपेनातिलिप्सा हृतेन

यत्तत् पीत्वा जगति स नरो निर्वृताः ॥ १०२ ॥

कैर्न कामैः वीरा येऽध्वन्यमेयाः स्वनियताः पालयन्ते जगन्ति ।

योगिन्यो याश्च द्वित्रिकुलमधिगता मातरः शान्तघोराः ॥ १०३ ॥

मत्पूर्वा ये च देवा गुणनिधिविगताः पङ्क्यो या गुरूणामं् ।

सेवन्ते तेऽत्र तन्त्रे गुरुमधिकगुणं शेषविद्यार्थविद्भ्यः ॥ १०४ ॥

न तदस्ति न तद् भुतं न तद् भावि फलैषिणाम् ।

यदत्राभिहितंनैव यत् स्याद् वा नात्र सेवते ॥ १०५ ॥

तस्याद्य सफलं कर्तुं तत् संप्रार्थ्यं चतुर्विधम् ।

सालोचयति शम्भूक्तं कल्पमेतत् सुविस्तरम् ॥ १०६ ॥

प्रतिपदमिह तूर्यैरर्थतो ग्रन्थतश्च

मणिमिव हृदयानां धार्य : शुद्धस्वभावम्।

सदमलपदयुक्तं कल्पमेनं महार्थम्

तदवपुषि नराणां कोऽन्धकार्यो निवार्यः॥ १०७॥

नानातन्त्रमणीन्द्रकौस्तुभमिमं वामागमार्थोदयं

भानुर्भानुमतां सुरेष्विव हरिः श्रीकण्ठवच्चूलिनाम्।

कल्पं सुप्रवरं मुनीन्द्रतनयावीरक्रमेणागतं

यो वेत्यान्त्यजजन्मजोऽपि  स गुरुः सर्वार्थकृत् प्राणिनाम्॥ १०८॥

पादच्चाया न हि गुरुतरोराश्रिता शीतला यैस्ते विश्वेऽस्मिन् भवतर्रा

णना तीक्ष्णपादेन तप्ता :।

मायारण्ये महति मरुजे तोयहीने तृषार्त्ता :

यास्यन्त्युच्चैः कृपणमतयो विप्लवं संप्लवंच॥ १०९॥

मुद्रायूपाणुवाजी निधिरषचरणो दिव्यविद्यासुपीठं।

नानाद्रव्योच्चकेतुर्निजविभवमहायोगधूहोमरश्मिः॥ ११०॥

कुत्रासौ योगवाहो नयति मनुहरिः खं निरालम्बमार्गम्।

विद्याविच्चुम्बकेन्द्रारुणरथकृद्दते सर्वविज्ञानपूर्णान्॥ १११॥।

तस्मात् सर्वप्रयत्नेन गुरुमन्विष्य यत्नतः।

उभयार्थे प्रवृत्तो यः शिरश्छेदे स उच्यते॥ ११२॥

मातृकावर्णमुख्यैस्तु पटलैर्मणिभिर्यथा।

तमोहरैस्तत्र विश्वं प्रदीप्यति सुभास्वरम् ॥ ११३ ॥

इति प्राचीनता उपज पुस्तकाः स्वकोय भारती भवनार्थंत्रोमद्राल गुरु हेमराजविद्वद्वरेण शारदारमण शर्म द्वारा विलिख्य १९८२ वै क्रमे सम्पादितम् भैरवस्त्रोतसि विद्यापीठे शिरश्छेदे श्रीजयद्रथयामले महातन्त्रे चतुर्विंशतिसा प्रथमषट्के श्रीकालसङ्कर्षण्यां विद्या सम्प्रदाय -षट्कमाहात्म्यादिवर्णनं एकपञ्चाशतमः पटलः ॥ ५१ ॥

समाप्तं श्रीजयद्रथयामले प्रथमषट्कमिति शुभम् । खट्वाम्वुशी कर्च्चन्नं चन्द्रलेखाविभूषितम् । यो बिभर्त्ति जटाधारं नमस्तस्मै पिनाकिने ॥

संवत ८४३ कार्त्तिकशुक्ल पूर्णमाशी आदि णवारथ्व कुह्नुथ्व संफुलि श्रीलक्ष्णी राये याते विलस्वे निष्णे हनुमन्तनेनियो

मूद्रा लक्षणपत्र २५६ जम्मा पत्र ३९४ ॥